# महाभारत - अनुशासन पर्व

# ॥ महाभारत अनुशासनपर्व ॥

## दानधर्मपर्व

## मृत्युगौतम्यादिसंवादः

## अध्याय ००१

युधिष्ठिर उवाच ॥

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति कृत्वेदमीदृशम् ॥ ००१ ॥

अस्मिन्नर्थे बहुविधा शान्तिरुक्ता त्वयानघ ।
स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि ॥ ००२ ॥

शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च ।
शमं नोपलभे वीर दुष्कृतान्येव चिन्तयन् ॥ ००३ ॥

रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम् ।
त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ॥ ००४ ॥

अतः कष्टतरं किं नु मत्कृते यत्पितामहः ।

इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे ॥ ००५ ॥

तथैवान्ये नृपतयः सहपुत्राः सबान्धवाः ॥ ००५ ॥

वयं हि धार्तराष्ट्राश्च कालमन्युवशानुगाः ।
कृत्वेदं निन्दितं कर्म प्राप्स्यामः कां गतिं नृप ॥ ००६ ॥

अहं तव ह्यन्तकरः सुहृद्वधकरस्तथा ।
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ॥ ००७ ॥

भीष्म उवाच ॥

परतन्त्रं कथं हेतुमात्मानमनुपश्यसि ।
कर्मण्यस्मिन्महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ ००८ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ ००९ ॥

गौतमी नाम कौन्तेय स्थविरा शमसंयुता ।
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥ ०१० ॥

अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः ।
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥ ०११ ॥

तां चाब्रवीदयं ते स पुत्रहा पन्नगाधमः ।
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥ ०१२ ॥

अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा ।
न ह्ययं बालहा पापश्चिरं जीवितुमर्हति ॥ ०१३ ॥

गौतम्युवाच ॥

विसृजैनमबुद्धिस्त्वं न वध्योऽर्जुनक त्वया ।
को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्ये सति चिन्तयन् ॥ ०१४ ॥

प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः ।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ ०१५ ॥

न चामृत्युर्भविता वै हतेऽस्मि ;न्को वात्ययः स्यादहतेऽस्मिञ्जनस्य ।
अस्योत्सर्गे प्राणयुक्तस्य जन्तो ;र्मृत्योर्लोकं को नु गच्छेदनन्तम् ॥ ०१६ ॥

लुब्धक उवाच ॥

जानाम्येवं नेह गुणागुणज्ञाः ; सर्वे नियुक्ता गुरवो वै भवन्ति ।
स्वस्थस्यैते तूपदेशा भवन्ति ; तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥ ०१७ ॥

समीप्सन्तः कालयोगं त्यजन्ति ; सद्यः शुचं त्वर्थविदस्त्यजन्ति ।
श्रेयः क्षयः शोचतां नित्यशो हि ; तस्मात्त्याज्यं जहि शोकं हतेऽस्मिन् ॥ ०१८ ॥

गौतम्युवाच ॥

न चैवार्तिर्विद्यतेऽस्मद्विधानां ; धर्मारामः सततं सज्जनो हि ।
नित्यायस्तो बालजनो न चास्ति ; धर्मो ह्येष प्रभवाम्यस्य नाहम् ॥ ०१९ ॥

न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना ।
मार्दवात्क्षम्यतां साधो मुच्यतामेष पन्नगः ॥ ०२० ॥

लुब्धक उवाच ॥

हत्वा लाभः श्रेय एवाव्ययं स्या ;त्सद्यो लाभो बलवद्भिः प्रशस्तः ।
कालाल्लाभो यस्तु सद्यो भवेत ; हते श्रेयः कुत्सिते त्वीदृशे स्यात् ॥ ०२१ ॥

गौतम्युवाच ॥

कार्थप्राप्तिर्गृह्य शत्रुं निहत्य ; का वा शान्तिः प्राप्य शत्रुं नमुक्त्वा ।
कस्मात्सौम्य भुजगे न क्षमेयं ; मोक्षं वा किं कारणं नास्य कुर्याम् ॥ ०२२ ॥

लुब्धक उवाच ॥

अस्मादेकस्माद्बहवो रक्षितव्या ; नैको बहुभ्यो गौतमि रक्षितव्यः ।
कृतागसं धर्मविदस्त्यजन्ति ; सरीसृपं पापमिमं जहि त्वम् ॥ ०२३ ॥

गौतम्युवाच ॥

नास्मिन्हते पन्नगे पुत्रको मे ; संप्राप्स्यते लुब्धक जीवितं वै ।
गुणं चान्यं नास्य वधे प्रपश्ये ; तस्मात्सर्पं लुब्धक मुञ्च जीवम् ॥ ०२४ ॥

लुब्धक उवाच ॥

वृत्रं हत्वा देवराड्श्रेष्ठभाग्वै ; यज्ञं हत्वा भागमवाप चैव ।
शूली देवो देववृत्तं कुरु त्वं ; क्षिप्रं सर्पं जहि मा भूद्विशङ्का ॥ ०२५ ॥

भीष्म उवाच ॥

असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति ।
लुब्धकेन महाभागा पापे नैवाकरोन्मतिम् ॥ ०२६ ॥

ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः ।
उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः ॥ ०२७ ॥

को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥ ०२८ ॥

तस्यायं वचनाद्दष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषम् ॥ ०२९ ॥

लुब्धक उवाच ॥

यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम् ।
कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ॥ ०३० ॥

मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा ।
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ॥ ०३१ ॥

किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग ।
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम ॥ ०३२ ॥

सर्प उवाच ॥

सर्वे एते ह्यस्ववशा दण्डचक्रादयो यथा ।
तथाहमपि तस्मान्मे नैष हेतुर्मतस्तव ॥ ०३३ ॥

अथ वा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः ।
कार्यकारणसंदेहो भवत्यन्योन्यचोदनात् ॥ ०३४ ॥

एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ॥ ०३५ ॥

लुब्धक उवाच ॥

कारणं यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत ।
विनाशे कारणं त्वं च तस्माद्वध्योऽसि मे मतः ॥ ०३६ ॥

असत्यपि कृते कार्ये नेह पन्नग लिप्यते ।
तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहु भाषसे ॥ ०३७ ॥

सर्प उवाच ॥

कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे ।
तस्मात्त्वमस्मिन्हेतौ मे वाच्यो हेतुर्विशेषतः ॥ ०३८ ॥

यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः ।
अन्यः प्रयोगे स्यादत्र किल्बिषी जन्तुनाशने ॥ ०३९ ॥

लुब्धक उवाच ॥

वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत् ।
भाषसे किं बहु पुनर्वध्यः सन्पन्नगाधम ॥ ०४० ॥

सर्प उवाच ॥

यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः ।
न फलं प्राप्नुवन्त्यत्र परलोके तथा ह्यहम् ॥ ०४१ ॥

भीष्म उवाच ॥

तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते ।
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ॥ ०४२ ॥

कालेनाहं प्रणुदितः पन्नग त्वामचूचुदम् ।
विनाशहेतुर्नास्य त्वमहं वा प्राणिनः शिशोः ॥ ०४३ ॥

यथा वायुर्जलधरान्विकर्षति ततस्ततः ।
तद्वज्जलदवत्सर्प कालस्याहं वशानुगः ॥ ०४४ ॥

सात्त्विका राजसाश्चैव तामसा ये च केचन ।
भावाः कालात्मकाः सर्वे प्रवर्तन्ते हि जन्तुषु ॥ ०४५ ॥

जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि ।
सर्वे कालात्मकाः सर्प कालात्मकमिदं जगत् ॥ ०४६ ॥

प्रवृत्तयश्च या लोके तथैव च निवृत्तयः ।
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम् ॥ ०४७ ॥

आदित्यश्चन्द्रमा विष्णुरापो वायुः शतक्रतुः ।
अग्निः खं पृथिवी मित्र ओषध्यो वसवस्तथा ॥ ०४८ ॥

सरितः सागराश्चैव भावाभावौ च पन्नग ।
सर्वे कालेन सृज्यन्ते ह्रियन्ते च तथा पुनः ॥ ०४९ ॥

एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे ।
अथ चैवङ्गते दोषो मयि त्वमपि दोषवान् ॥ ०५० ॥

सर्प उवाच ॥

निर्दोषं दोषवन्तं वा न त्वा मृत्यो ब्रवीम्यहम् ।
त्वयाहं चोदित इति ब्रवीम्येतावदेव तु ॥ ०५१ ॥

यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते ।
दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयम् ॥ ०५२ ॥

निर्मोक्षस्त्वस्य दोषस्य मया कार्यो यथा तथा ।
मृत्यो विदोषः स्यामेव यथा तन्मे प्रयोजनम् ॥ ०५३ ॥

भीष्म उवाच ॥

सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम् ।
नानागसं मां पाशेन संतापयितुमर्हसि ॥ ०५४ ॥

लुब्धक उवाच ॥

मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम ।
नैव तावद्विदोषत्वं भवति त्वयि पन्नग ॥ ०५५ ॥

मृत्युस्त्वं चैव हेतुर्हि जन्तोरस्य विनाशने ।
उभयं कारणं मन्ये न कारणमकारणम् ॥ ०५६ ॥

धिङ्मृत्युं च दुरात्मानं क्रूरं दुःखकरं सताम् ।
त्वां चैवाहं वधिष्यामि पापं पापस्य कारणम् ॥ ०५७ ॥

मृत्युरुवाच ॥

विवशौ कालवशगावावां तद्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ॥ ०५८ ॥

लुब्धक उवाच ॥

युवामुभौ कालवशौ यदि वै मृत्युपन्नगौ ।
हर्षक्रोधौ कथं स्यातामेतदिच्छामि वेदितुम् ॥ ०५९ ॥

मृत्युरुवाच ॥

याः काश्चिदिह चेष्टाः स्युः सर्वाः कालप्रचोदिताः ।
पूर्वमेवैतदुक्तं हि मया लुब्धक कालतः ॥ ०६० ॥

तस्मादुभौ कालवशावावां तद्दिष्टकारिणौ ।

नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित्  ॥ ०६१  ॥

भीष्म उवाच  ॥

अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये ।
अब्रवीत्पन्नगं मृत्युं लुब्धमर्जुनकं च तम्  ॥ ०६२  ॥

काल उवाच  ॥

नैवाहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः ।
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः  ॥ ०६३  ॥

अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम् ।
प्रणाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा  ॥ ०६४  ॥

यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम्  ॥ ०६५  ॥

कर्मदायादवा.ण्ल्लोकः कर्मसंबन्धलक्षणः ।
कर्माणि चोदयन्तीह यथान्योन्यं तथा वयम्  ॥ ०६६  ॥

यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते  ॥ ०६७  ॥

यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः  ॥ ०६८  ॥

एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान् ।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम्  ॥ ०६९  ॥

तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप ।

स्वकर्मप्रत्यया.ण्ल्लोकान्मत्वार्जुनकमब्रवीत्  ॥ ०७०  ॥

नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मभिरयं बालः कालेन निधनं गतः  ॥ ०७१  ॥

मया च तत्कृतं कर्म येनायं मे मृतः सुतः ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम्  ॥ ०७२  ॥

भीष्म उवाच  ॥

ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः ।
अभूद्विरोषोऽर्जुनको विशोका चैव गौतमी  ॥ ०७३  ॥

एतच्छ्रुत्वा शमं गच्छ मा भूश्चिन्तापरो नृप ।
स्वकर्मप्रत्यया.ण्ल्लोकांस्त्रीन्विद्धि मनुजर्षभ  ॥ ०७४  ॥

न तु त्वया कृतं पार्थ नापि दुर्योधनेन वै ।
कालेन तत्कृतं विद्धि विहता येन पार्थिवाः  ॥ ०७५  ॥

वैशंपायन उवाच  ॥

इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः ।
युधिष्ठिरो महातेजाः पप्रच्छेदं च धर्मवित्  ॥ ०७६  ॥

---

# सुदर्शनोपाख्यानम्

## अध्याय ००२

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रुतं मे महदाख्यानमिदं मतिमतां वर ॥ ००१ ॥

भूयस्तु श्रोतुमिच्छामि धर्मार्थसहितं नृप ।
कथ्यमानं त्वया किञ्चित्तन्मे व्याख्यातुमर्हसि ॥ ००२ ॥

केन मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ।
इत्येतत्सर्वमाचक्ष्व तत्त्वेन मम पार्थिव ॥ ००३ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ॥ ००४ ॥

मनोः प्रजापते राजन्निक्ष्वाकुरभवत्सुतः ।
तस्य पुत्रशतं जज्ञे नृपतेः सूर्यवर्चसः ॥ ००५ ॥

दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत ।
माहिष्मत्यामभूद्राजा धर्मात्मा सत्यविक्रमः ॥ ००६ ॥

दशाश्वस्य सुतस्त्वासीद्राजा परमधार्मिकः ।
सत्ये तपसि दाने च यस्य नित्यं रतं मनः ॥ ००७ ॥

मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः ।

धनुर्वेदे च वेदे च निरतो योऽभवत्सदा ॥ ००८ ॥

मदिराश्वस्य पुत्रस्तु द्युतिमान्नाम पार्थिवः ।
महाभागो महातेजा महासत्त्वो महाबलः ॥ ००९ ॥

पुत्रो द्युतिमतस्त्वासीत्सुवीरो नाम पार्थिवः ।
धर्मात्मा कोशवांश्चापि देवराज इवापरः ॥ ०१० ॥

सुवीरस्य तु पुत्रोऽभूत्सर्वसङ्ग्रामदुर्जयः ।
दुर्जयेत्यभिविख्यातः सर्वशास्त्रविशारदः ॥ ०११ ॥

दुर्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः ।
दुर्योधनो नाम महान्राजासीद्राजसत्तम ॥ ०१२ ॥

तस्येन्द्रसमवीर्यस्य सङ्ग्रामेष्वनिवर्तिनः ।
विषयश्च प्रभावश्च तुल्यमेवाभ्यवर्तत ॥ ०१३ ॥

रत्नैर्धनैश्च पशुभिः सस्यैश्चापि पृथग्विधैः ।
नगरं विषयश्चास्य प्रतिपूर्णं तदाभवत् ॥ ०१४ ॥

न तस्य विषये चाभूत्कृपणो नापि दुर्गतः ।
व्याधितो वा कृशो वापि तस्मिन्नाभून्नरः क्वचित् ॥ ०१५ ॥

सुदक्षिणो मधुरवागनसूयुर्जितेन्द्रियः ।
धर्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः ॥ ०१६ ॥

यज्वा वदान्यो मेधावी ब्रह्मण्यः सत्यसङ्गरः ।
न चावमन्ता दाता च वेदवेदाङ्गपारगः ॥ ०१७ ॥

तं नर्मदा देवनदी पुण्या शीतजला शिवा ।
चकमे पुरुषश्रेष्ठं स्वेन भावेन भारत ॥ ०१८ ॥

तस्य जज्ञे तदा नद्यां कन्या राजीवलोचना ।
नाम्ना सुदर्शना राजन्रूपेण च सुदर्शना ॥ ०१९ ॥

तादृग्रूपा न नारीषु भूतपूर्वा युधिष्ठिर ।
दुर्योधनसुता यादृगभवद्वरवर्णिनी ॥ ०२० ॥

तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम् ।
भूत्वा च ब्राह्मणः साक्षाद्वरयामास तं नृपम् ॥ ०२१ ॥

दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः ।
न दित्सति सुतां तस्मै तां विप्राय सुदर्शनाम् ॥ ०२२ ॥

ततोऽस्य वितते यज्ञे नष्टोऽभूद्धव्यवाहनः ।
ततो दुर्योधनो राजा वाक्यमाहर्त्विजस्तदा ॥ ०२३ ॥

दुष्कृतं मम किं नु स्याद्भवतां वा द्विजर्षभाः ।
येन नाशं जगामाग्निः कृतं कुपुरुषेष्विव ॥ ०२४ ॥

न ह्यल्पं दुष्कृतं नोऽस्ति येनाग्निर्नाशमागतः ।
भवतां वाथ वा मह्यं तत्त्वेनैतद्विमृश्यताम् ॥ ०२५ ॥

एतद्राज्ञो वचः श्रुत्वा विप्रास्ते भरतर्षभ ।
नियता वाग्यताश्चैव पावकं शरणं ययुः ॥ ०२६ ॥

तान्दर्शयामास तदा भगवान्हव्यवाहनः ।
स्वं रूपं दीप्तिमत्कृत्वा शरदर्कसमद्युतिः ॥ ०२७ ॥

ततो महात्मा तानाह दहनो ब्राह्मणर्षभान् ।
वरयाम्यात्मनोऽर्थाय दुर्योधनसुतामिति ॥ ०२८ ॥

ततस्ते काल्यमुत्थाय तस्मै राज्ञे न्यवेदयन् ।
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना ॥ ०२९ ॥

ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम् ।
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान् ॥ ०३० ॥

प्रायाचत नृपः शुल्कं भगवन्तं विभावसुम् ।
नित्यं सांनिध्यमिह ते चित्रभानो भवेदिति ॥ ०३१ ॥

तमाह भगवानग्निरेवमस्त्विति पार्थिवम् ॥ ०३१ ॥

ततः सांनिध्यमद्यापि माहिष्मत्यां विभावसोः ।
दृष्टं हि सहदेवेन दिशो विजयता तदा ॥ ०३२ ॥

ततस्तां समलङ्कृत्य कन्यामहतवाससम् ।
ददौ दुर्योधनो राजा पावकाय महात्मने ॥ ०३३ ॥

प्रतिजग्राह चाग्निस्तां राजपुत्रीं सुदर्शनाम् ।
विधिना वेददृष्टेन वसोर्धारामिवाध्वरे ॥ ०३४ ॥

तस्या रूपेण शीलेन कुलेन वपुषा श्रिया ।
अभवत्प्रीतिमानग्निर्गर्भं तस्यां समादधे ॥ ०३५ ॥

तस्यां समभवत्पुत्रो नाम्नाग्नेयः सुदर्शनः ।
शिशुरेवाध्यगात्सर्वं स च ब्रह्म सनातनम् ॥ ०३६ ॥

अथौघवान्नाम नृपो नृगस्यासीत्पितामहः ।
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत् ॥ ०३७ ॥

तामोघवान्ददौ तस्मै स्वयमोघवतीं सुताम् ।
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ॥ ०३८ ॥

स गृहस्थाश्रमरतस्तया सह सुदर्शनः ।
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः ॥ ०३९ ॥

गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो ।
प्रतिज्ञामकरोद्धीमान्दीप्ततेजा विशां पते ॥ ०४० ॥

तामथौघवतीं राजन्स पावकसुतोऽब्रवीत् ।
अतिथेः प्रतिकूलं ते न कर्तव्यं कथञ्चन ॥ ०४१ ॥

येन येन च तुष्येत नित्यमेव त्वयातिथिः ।
अप्यात्मनः प्रदानेन न ते कार्या विचारणा ॥ ०४२ ॥

एतद्व्रतं मम सदा हृदि संपरिवर्तते ।
गृहस्थानां हि सुश्रोणि नातिथेर्विद्यते परम् ॥ ०४३ ॥

प्रमाणं यदि वामोरु वचस्ते मम शोभने ।
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ॥ ०४४ ॥

निष्क्रान्ते मयि कल्याणि तथा संनिहितेऽनघे ।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ॥ ०४५ ॥

तमब्रवीदोघवती यता मूर्ध्नि कृताञ्जलिः ।
न मे त्वद्वचनात्किञ्चिदकर्तव्यं कथञ्चन ॥ ०४६ ॥

जिगीषमाणं तु गृहे तदा मृत्युः सुदर्शनम् ।
पृष्ठतोऽन्वगमद्राजन्रन्ध्रान्वेषी तदा सदा ॥ ०४७ ॥

इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने ।
अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ॥ ०४८ ॥

आतिथ्यं दत्तमिच्छामि त्वयाद्य वरवर्णिनि ।
प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसंमतः ॥ ०४९ ॥

इत्युक्ता तेन विप्रेण राजपुत्री यशस्विनी ।
विधिना प्रतिजग्राह वेदोक्तेन विशां पते ॥ ०५० ॥

आसनं चैव पाद्यं च तस्मै दत्त्वा द्विजातये ।
प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते ॥ ०५१ ॥

तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनाम् ।
त्वया ममार्थः कल्याणि निर्विशङ्के तदाचर ॥ ०५२ ॥

यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसंमतः ।
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियम् ॥ ०५३ ॥

तथा संछन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया ।
नान्यमात्मप्रदानात्स तस्या वव्रे वरं द्विजः ॥ ०५४ ॥

सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ॥ ०५५ ॥

ततो रहः स विप्रर्षिः सा चैवोपविवेश ह ।
संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः ॥ ०५६ ॥

अथेध्मान्समुपादाय स पावकिरुपागमत् ।
मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ॥ ०५७ ॥

ततस्त्वाश्रममागम्य स पावकसुतस्तदा ।
तामाजुहावौघवतीं क्वासि यातेति चासकृत् ॥ ०५८ ॥

तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा ।

कराभ्यां तेन विप्रेण स्पृष्टा भर्तृव्रता सती ॥ ०५९ ॥

उच्छिष्टास्मीति मन्वाना लज्जिता भर्तुरेव च ।
तूष्णींभूताभवत्साध्वी न चोवाचाथ किञ्चन ॥ ०६० ॥

अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः ।
क्व सा साध्वी क्व सा याता गरीयः किमतो मम ॥ ०६१ ॥

पतिव्रता सत्यशीला नित्यं चैवार्जवे रता ।
कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा ॥ ०६२ ॥

उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् ।
अतिथिं विद्धि संप्राप्तं पावके ब्राह्मणं च माम् ॥ ०६३ ॥

अनया छन्द्यमानोऽहं भार्यया तव सत्तम ।
तैस्तैरतिथिसत्कारैरार्जवेऽस्या दृढं मनः ॥ ०६४ ॥

अनेन विधिना सेयं मामर्चति शुभानना ।
अनुरूपं यदत्राद्य तद्भवान्वक्तुमर्हति ॥ ०६५ ॥

कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वयात् ।
हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् ॥ ०६६ ॥

सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ॥ ०६७ ॥

सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम ।
गृहस्थस्य हि धर्मोऽग्र्यः संप्राप्तातिथिपूजनम् ॥ ०६८ ॥

अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥ ०६९ ॥

प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयमिति मे व्रतमाहितम्  ॥ ०७० ॥

निःसंदिग्धं मया वाक्यमेतत्ते समुदाहृतम् ।
तेनाहं विप्र सत्येन स्वयमात्मानमालभे  ॥ ०७१ ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश  ॥ ०७२ ॥

नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिताः ।
सुकृतं दुष्कृतं चापि कर्म धर्मभृतां वर  ॥ ०७३ ॥

यथैषा नानृता वाणी मयाद्य समुदाहृता ।
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा  ॥ ०७४ ॥

ततो नादः समभवद्दिक्षु सर्वासु भारत ।
असकृत्सत्यमित्येव नैतन्मिथ्येति सर्वशः  ॥ ०७५ ॥

उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः ।
वपुषा खं च भूमिं च व्याप्य वायुरिवोद्यतः  ॥ ०७६ ॥

स्वरेण विप्रः शैक्षेण त्री.ण्ल्लोकाननुनादयन् ।
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः  ॥ ०७७ ॥

धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ।
प्राप्तः सत्यं च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि  ॥ ०७८ ॥

विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति ।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः  ॥ ०७९ ॥

न चास्ति शक्तिस्त्रैलोक्ये कस्यचित्पुरुषोत्तम ।
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ॥ ०८० ॥

रक्षिता त्वद्गुणैरेषा पतिव्रतगुणैस्तथा ।
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् ॥ ०८१ ॥

एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी ।
पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति ॥ ०८२ ॥

अर्धेनौघवती नाम त्वामर्धेनानुयास्यति ।
शरीरेण महाभागा योगो ह्यस्या वशे स्थितः ॥ ०८३ ॥

अनया सह लोकांश्च गन्तासि तपसार्जितान् ।
यत्र नावृत्तिमभ्येति शाश्वतांस्तान्सनातनान् ॥ ०८४ ॥

अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे ।
निर्जितश्च त्वया मृत्युरैश्वर्यं च तवोत्तमम् ॥ ०८५ ॥

पञ्च भूतान्यतिक्रान्तः स्ववीर्याच्च मनोभवः ।
गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ॥ ०८६ ॥

स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः ।
तव शुश्रूषया राजन्राजपुत्र्या विनिर्जिताः ॥ ०८७ ॥

भीष्म उवाच ॥

शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् ।
युक्तं प्रगृह्य भगवान्व्यवसायो जगाम तम् ॥ ०८८ ॥

मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च ।
बुद्धिः कालो मनो व्योम कामक्रोधौ तथैव च ॥ ०८९ ॥

तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै ।
ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ ०९० ॥

अतिथिः पूजितो यस्य ध्यायते मनसा शुभम् ।
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥ ०९१ ॥

पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।
स दत्त्वा सुकृतं तस्य क्षपयेत ह्यनर्चितः ॥ ०९२ ॥

एतत्ते कथितं पुत्र मयाख्यानमनुत्तमम् ।
यथा हि विजितो मृत्युर्गृहस्थेन पुराभवत् ॥ ०९३ ॥

धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम् ।
बुभूषताभिमन्तव्यं सर्वदुश्चरितापहम् ॥ ०९४ ॥

य इदं कथयेद्विद्वानहन्यहनि भारत ।
सुदर्शनस्य चरितं पुण्या.ल्लोकानवाप्नुयात् ॥ ०९५ ॥

---

# विश्वामित्रोपाख्यानम्

## अध्याय ००३

युधिष्ठिर उवाच ॥

ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ ००१ ॥

विश्वामित्रेण धर्मात्मन्ब्राह्मणत्वं नरर्षभ ।
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ॥ ००२ ॥

तेन ह्यमितवीर्येण वसिष्ठस्य महात्मनः ।
हतं पुत्रशतं सद्यस्तपसा प्रपितामह ॥ ००३ ॥

यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः ।
मन्युनाविष्टदेहेन सृष्टाः कालान्तकोपमाः ॥ ००४ ॥

महान्कुशिकवंशश्च ब्रह्मर्षिशतसङ्कुलः ।
स्थापितो नरलोकेऽस्मिन्विद्वान्ब्राह्मणसंस्तुतः ॥ ००५ ॥

ऋचीकस्यात्मजश्चैव शुनःशेपो महातपाः ।
विमोक्षितो महासत्रात्पशुतामभ्युपागतः ॥ ००६ ॥

हरिश्चन्द्रक्रतौ देवांस्तोषयित्वात्मतेजसा ।
पुत्रतामनुसंप्राप्तो विश्वामित्रस्य धीमतः ॥ ००७ ॥

नाभिवादयते ज्येष्ठं देवरातं नराधिप ।
पुत्राः पञ्चशताश्चापि शप्ताः श्वपचतां गताः ॥ ००८ ॥

त्रिशङ्कुर्बन्धुसंत्यक्त इक्ष्वाकुः प्रीतिपूर्वकम् ।
अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशम् ॥ ००९ ॥

विश्वामित्रस्य विपुला नदी राजर्षिसेविता ।
कौशिकीति शिवा पुण्या ब्रह्मर्षिगणसेविता ॥ ०१० ॥

तपोविघ्नकरी चैव पञ्चचूडा सुसंमता ।
रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता ॥ ०११ ॥

तथैवास्य भयाद्बद्ध्वा वसिष्ठः सलिले पुरा ।
आत्मानं मज्जयामास विपाशः पुनरुत्थितः ॥ ०१२ ॥

तदाप्रभृति पुण्या हि विपाशाभून्महानदी ।
विख्याता कर्मणा तेन वसिष्ठस्य महात्मनः ॥ ०१३ ॥

वाग्भिश्च भगवान्येन देवसेनाग्रगः प्रभुः ।
स्तुतः प्रीतमनाश्चासीच्छापाच्चैनममोचयत् ॥ ०१४ ॥

ध्रुवस्यौत्तानपादस्य ब्रह्मर्षीणां तथैव च ।
मध्ये ज्वलति यो नित्यमुदीचीमाश्रितो दिशम् ॥ ०१५ ॥

तस्यैतानि च कर्माणि तथान्यानि च कौरव ।
क्षत्रियस्येत्यतो जातमिदं कौतूहलं मम ॥ ०१६ ॥

किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ ।
देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ॥ ०१७ ॥

एतत्तत्त्वेन मे राजन्सर्वमाख्यातुमर्हसि ।
मतङ्गस्य यथातत्त्वं तथैवैतद्ब्रवीहि मे ॥ ०१८ ॥

स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ ।
चण्डालयोनौ जातो हि कथं ब्राह्मण्यमाप्नुयात् ॥ ०१९ ॥

---

# अध्याय ००४

भीष्म उवाच ॥

श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा ।
ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च ॥ ००१ ॥

भरतस्यान्वये चैवाजमीढो नाम पार्थिवः ।
बभूव भरतश्रेष्ठ यज्वा धर्मभृतां वरः ॥ ००२ ॥

तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः ।
दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ॥ ००३ ॥

तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः ।
सिन्धुद्वीपाच्च राजर्षिर्बलाकाश्वो महाबलः ॥ ००४ ॥

वल्लभस्तस्य तनयः साक्षाद्धर्म इवापरः ।
कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ॥ ००५ ॥

कुशिकस्यात्मजः श्रीमान्गाधिर्नाम जनेश्वरः ।
अपुत्रः स महाबाहुर्वनवासमुदावसत् ॥ ००६ ॥

कन्या जज्ञे सुता तस्य वने निवसतः सतः ।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ॥ ००७ ॥

तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मजः प्रभुः ।
ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥ ००८ ॥

स तां न प्रददौ तस्मै ऋचीकाय महात्मने ।
दरिद्र इति मत्वा वै गाधिः शत्रुनिबर्हणः ॥ ००९ ॥

प्रत्याख्याय पुनर्यान्तमब्रवीद्राजसत्तमः ।
शुल्कं प्रदीयतां मह्यं ततो वेत्स्यसि मे सुताम् ॥ ०१० ॥

ऋचीक उवाच ॥

किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप ।
दुहितुर्ब्रूह्यसंसक्तो मात्राभूत्ते विचारणा ॥ ०११ ॥

गाधिरुवाच ॥

चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् ।
एकतः श्यामकर्णानां सहस्रं देहि भार्गव ॥ ०१२ ॥

भीष्म उवाच ॥

ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः ।
अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् ॥ ०१३ ॥

एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ॥ ०१४ ॥

तथेति वरुणो देव आदित्यो भृगुसत्तमम् ।
उवाच यत्र ते छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥ ०१५ ॥

ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्चसाम् ।
गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसाम् ॥ ०१६ ॥

अदूरे कन्यकुब्जस्य गङ्गायास्तीरमुत्तमम् ।
अश्वतीर्थं तदद्यापि मानवाः परिचक्षते ॥ ०१७ ॥

तत्तदा गाधये तात सहस्रं वाजिनां शुभम् ।
ऋचीकः प्रददौ प्रीतः शुल्कार्थं जपतां वरः ॥ ०१८ ॥

ततः स विस्मितो राजा गाधिः शापभयेन च ।
ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ॥ ०१९ ॥

जग्राह पाणिं विधिना तस्य ब्रह्मर्षिसत्तमः ।
सा च तं पतिमासाद्य परं हर्षमवाप ह ॥ ०२० ॥

स तुतोष च विप्रर्षिस्तस्या वृत्तेन भारत ।
छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥ ०२१ ॥

मात्रे तत्सर्वमाचख्यौ सा कन्या राजसत्तमम् ।
अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीम् ॥ ०२२ ॥

ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति ।
अपत्यस्य प्रदानेन समर्थः स महातपाः ॥ ०२३ ॥

ततः सा त्वरितं गत्वा तत्सर्वं प्रत्यवेदयत् ।
मातुश्चिकीर्षितं राजन्नृचीकस्तामथाब्रवीत् ॥ ०२४ ॥

गुणवन्तमपत्यं वै त्वं च सा जनयिष्यथः ।
जनन्यास्तव कल्याणि मा भूद्वै प्रणयोऽन्यथा ॥ ०२५ ॥

तव चैव गुणश्लाघी पुत्र उत्पत्स्यते शुभे ।
अस्मद्वंशकरः श्रीमांस्तव भ्राता च वंशकृत् ॥ ०२६ ॥

ऋतुस्नाता च साश्वत्थं त्वं च वृक्षमुदुम्बरम् ।
परिष्वजेथाः कल्याणि तत इष्टमवाप्स्यथः ॥ ०२७ ॥

चरुद्वयमिदं चैव मन्त्रपूतं शुचिस्मिते ।
त्वं च सा चोपयुञ्जीथां ततः पुत्राववाप्स्यथः ॥ ०२८ ॥

ततः सत्यवती हृष्टा मातरं प्रत्यभाषत ।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥ ०२९ ॥

तामुवाच ततो माता सुतां सत्यवतीं तदा ।
पुत्रि मूर्ध्नां प्रपन्नायाः कुरुष्व वचनं मम ॥ ०३० ॥

भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः ।
एतं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥ ०३१ ॥

व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते ।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥ ०३२ ॥

व्यक्तं भगवता चात्र कृतमेवं भविष्यति ।
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे ॥ ०३३ ॥

कथं विशिष्टो भ्राता ते भवेदित्येव चिन्तय ॥ ०३३ ॥

तथा च कृतवत्यौ ते माता सत्यवती च सा ।
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥ ०३४ ॥

दृष्ट्वा गर्भमनुप्राप्तां भार्यां स च महानृषिः ।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ॥ ०३५ ॥

व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति ।
व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ॥ ०३६ ॥

मया हि विश्वं यद्ब्रह्म त्वच्चरौ संनिवेशितम् ।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ॥ ०३७ ॥

त्रिलोकविख्यातगुणं त्वं विप्रं जनयिष्यसि ।
सा च क्षत्रं विशिष्टं वै तत एतत्कृतं मया ॥ ०३८ ॥

व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा तथैव च ।
तस्मात्सा ब्राह्मणश्रेष्ठं माता ते जनयिष्यति ॥ ०३९ ॥

क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि ।
न हि ते तत्कृतं साधु मातृस्नेहेन भामिनि ॥ ०४० ॥

सा श्रुत्वा शोकसंतप्ता पपात वरवर्णिनी ।
भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ॥ ०४१ ॥

प्रतिलभ्य च सा सञ्ज्ञां शिरसा प्रणिपत्य च ।
उवाच भार्या भर्तारं गाधेयी ब्राह्मणर्षभम् ॥ ०४२ ॥

प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदां वर ।
प्रसादं कुरु विप्रर्षे न मे स्यात्क्षत्रियः सुतः ॥ ०४३ ॥

कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति ।
न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ॥ ०४४ ॥

एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः ।
ततः सा जनयामास जमदग्निं सुतं शुभम् ॥ ०४५ ॥

विश्वामित्रं चाजनयद्गाधेर्भार्या यशस्विनी ।
ऋषेः प्रभावाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम् ॥ ०४६ ॥

ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥ ०४७ ॥

तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥ ०४८ ॥

मधुच्छन्दश्च भगवान्देवरातश्च वीर्यवान् ।
अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ॥ ०४९ ॥

याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः ।
उलूको यमदूतश्च तथर्षिः सैन्धवायनः ॥ ०५० ॥

कर्णजङ्घश्च भगवान्गालवश्च महानृषिः ।
ऋषिर्वज्रस्तथाख्यातः शालङ्कायन एव च ॥ ०५१ ॥

लालाट्यो नारदश्चैव तथा कूर्चमुखः स्मृतः ।
वादुलिर्मुसलश्चैव रक्षोग्रीवस्तथैव च ॥ ०५२ ॥

अङ्घ्रिको नैकभृच्चैव शिलायूपः सितः शुचिः ।
चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ॥ ०५३ ॥

श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा ।
कारीषिरथ संश्रुत्यः परपौरवतन्तवः ॥ ०५४ ॥

महानृषिश्च कपिलस्तथर्षिस्तारकायनः ।
तथैव चोपगहनस्तथर्षिश्चार्जुनायनः ॥ ०५५ ॥

मार्गमित्रिर्हिरण्याक्षो जङ्घारिर्बभ्रुवाहनः ।
सूतिर्विभूतिः सूतश्च सुरङ्गश्च तथैव हि ॥ ०५६ ॥

आराद्धिर्नामयश्चैव चाम्पेयोज्जयनौ तथा ।
नवतन्तुर्बकनखः शयोनरतिरेव च ॥ ०५७ ॥

शयोरुहश्चारुमत्स्यः शिरीषी चाथ गार्दभिः ।
उज्जयोनिरदापेक्षी नारदी च महानृषिः ॥ ०५८ ॥

विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ॥ ०५८ ॥

तन्नैष क्षत्रियो राजन्विश्वामित्रो महातपाः ।
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ॥ ०५९ ॥

एतत्ते सर्वमाख्यातं तत्त्वेन भरतर्षभ ।
विश्वामित्रस्य वै जन्म सोमसूर्याग्नितेजसः ॥ ०६० ॥

यत्र यत्र च संदेहो भूयस्ते राजसत्तम ।
तत्र तत्र च मां ब्रूहि च्छेत्तास्मि तव संशयान् ॥ ०६१ ॥

---

# शुक्रवासवसंवादः

## अध्याय ००५

युधिष्ठिर उवाच ॥

आनृशंसस्य धर्मस्य गुणान्भक्तजनस्य च ।
श्रोतुमिच्छामि कात्स्न्येन तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।
सविषं काण्डमादाय मृगयामास वै मृगम् ॥ ००२ ॥

तत्र चामिषलुब्धेन लुब्धकेन महावने ।
अविदूरे मृगं दृष्ट्वा बाणः प्रतिसमाहितः ॥ ००३ ॥

तेन दुर्वारितास्त्रेण निमित्तचपलेषुणा ।
महान्वनतरुर्विद्धो मृगं तत्र जिघांसता ॥ ००४ ॥

स तीक्ष्णविषदिग्धेन शरेणातिबलात्कृतः ।
उत्सृज्य फलपत्राणि पादपः शोषमागतः ॥ ००५ ॥

तस्मिन्वृक्षे तथाभूते कोटरेषु चिरोषितः ।
न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ॥ ००६ ॥

निष्प्रचारो निराहारो ग्लानः शिथिलवागपि ।
कृतज्ञः सह वृक्षेण धर्मात्मा स व्यशुष्यत ॥ ००७ ॥

तमुदारं महासत्त्वमतिमानुषचेष्टितम् ।
समदुःखसुखं ज्ञात्वा विस्मितः पाकशासनः ॥ ००८ ॥

ततश्चिन्तामुपगतः शक्रः कथमयं द्विजः ।
तिर्यग्योनावसंभाव्यमानृशंस्यं समास्थितः ॥ ००९ ॥

अथ वा नात्र चित्रं हीत्यभवद्वासवस्य तु ।
प्राणिनामिह सर्वेषां सर्वं सर्वत्र दृश्यते ॥ ०१० ॥

ततो ब्राह्मणवेषेण मानुषं रूपमास्थितः ।
अवतीर्य महीं शक्रस्तं पक्षिणमुवाच ह ॥ ०११ ॥

शुक भोः पक्षिणां श्रेष्ठ दाक्षेयी सुप्रजास्त्वया ।
पृच्छे त्वा शुष्कमेतं वै कस्मान्न त्यजसि द्रुमम् ॥ ०१२ ॥

अथ पृष्टः शुकः प्राह मूर्ध्ना समभिवाद्य तम् ।
स्वागतं देवराजाय विज्ञातस्तपसा मया ॥ ०१३ ॥

ततो दशशताक्षेण साधु साध्विति भाषितम् ।
अहो विज्ञानमित्येवं तपसा पूजितस्ततः ॥ ०१४ ॥

तमेवं शुभकर्माणं शुकं परमधार्मिकम् ।

विजानन्नपि तां प्राप्तिं पप्रच्छ बलसूदनः ॥ ०१५ ॥

निष्पत्रमफलं शुष्कमशरण्यं पतत्रिणाम् ।
किमर्थं सेवसे वृक्षं यदा महदिदं वनम् ॥ ०१६ ॥

अन्येऽपि बहवो वृक्षाः पत्रसंछन्नकोटराः ।
शुभाः पर्याप्तसञ्चारा विद्यन्तेऽस्मिन्महावने ॥ ०१७ ॥

गतायुषमसामर्थ्यं क्षीणसारं हतश्रियम् ।
विमृश्य प्रज्ञया धीर जहीमं ह्यस्थिरं द्रुमम् ॥ ०१८ ॥

तदुपश्रुत्य धर्मात्मा शुकः शक्रेण भाषितम् ।
सुदीर्घमभिनिःश्वस्य दीनो वाक्यमुवाच ह ॥ ०१९ ॥

अनतिक्रमणीयानि दैवतानि शचीपते ।
यत्राभवस्तत्र भवस्तन्निबोध सुराधिप ॥ ०२० ॥

अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युतः ।
बालभावे च सङ्गुप्तः शत्रुभिश्च न धर्षितः ॥ ०२१ ॥

किमनुक्रोशवैफल्यमुत्पादयसि मेऽनघ ।
आनृशंस्येऽनुरक्तस्य भक्तस्यानुगतस्य च ॥ ०२२ ॥

अनुक्रोशो हि साधूनां सुमहद्धर्मलक्षणम् ।
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति ॥ ०२३ ॥

त्वमेव दैवतैः सर्वैः पृच्छ्यसे धर्मसंशयान् ।
अतस्त्वं देव देवानामाधिपत्ये प्रतिष्ठितः ॥ ०२४ ॥

नार्हसि त्वं सहस्राक्ष त्याजयित्वेह भक्तितः ।
समर्थमुपजीव्येमं त्यजेयं कथमद्य वै ॥ ०२५ ॥

तस्य वाक्येन सौम्येन हर्षितः पाकशासनः ।
शुकं प्रोवाच धर्मज्ञमानृशंस्येन तोषितः ॥ ०२६ ॥

वरं वृणीष्वेति तदा स च वव्रे वरं शुकः ।
आनृशंस्यपरो नित्यं तस्य वृक्षस्य संभवम् ॥ ०२७ ॥

विदित्वा च दृढां शक्रस्तां शुके शीलसंपदम् ।
प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् ॥ ०२८ ॥

ततः फलानि पत्राणि शाखाश्चापि मनोरमाः ।
शुकस्य दृढभक्तित्वाच्छ्रीमत्त्वं चाप स द्रुमः ॥ ०२९ ॥

शुकश्च कर्मणा तेन आनृशंस्यकृतेन ह ।
आयुषोऽन्ते महाराज प्राप शक्रसलोकताम् ॥ ०३० ॥

एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः ।
सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ॥ ०३१ ॥

---

# दैवपुरुषकारबलाबलम्

## अध्याय ००६

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
दैवे पुरुषकारे च किं स्विच्छ्रेष्ठतरं भवेत् ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वसिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर ॥ ००२ ॥

दैवमानुषयोः किं स्वित्कर्मणोः श्रेष्ठमित्युत ।
पुरा वसिष्ठो भगवान्पितामहमपृच्छत ॥ ००३ ॥

ततः पद्मोद्भवो राजन्देवदेवः पितामहः ।
उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ॥ ००४ ॥

नाबीजं जायते किञ्चिन्न बीजेन विना फलम् ।
बीजाद्बीजं प्रभवति बीजादेव फलं स्मृतम् ॥ ००५ ॥

यादृशं वपते बीजं क्षेत्रमासाद्य कर्षकः ।
सुकृते दुष्कृते वापि तादृशं लभते फलम् ॥ ००६ ॥

यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ००७ ॥

क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।
क्षेत्रबीजसमायोगात्ततः सस्यं समृध्यते ॥ ००८ ॥

कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः ।
प्रत्यक्षं दृश्यते लोके कृतस्याप्यकृतस्य च ॥ ००९ ॥

शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं सर्वत्र लभते नाकृतं भुज्यते क्वचित् ॥ ०१० ॥

कृती सर्वत्र लभते प्रतिष्ठां भाग्यविक्षतः ।

अकृती लभते भ्रष्टः क्षते क्षारावसेचनम्  ॥ ०११  ॥

तपसा रूपसौभाग्यं रत्नानि विविधानि च ।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना  ॥ ०१२  ॥

तथा स्वर्गश्च भोगश्च निष्ठा या च मनीषिता ।
सर्वं पुरुषकारेण कृतेनेहोपपद्यते  ॥ ०१३  ॥

ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः  ॥ ०१४  ॥

अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः  ॥ ०१५  ॥

शौचेन लभते विप्रः क्षत्रियो विक्रमेण च ।
वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियम्  ॥ ०१६  ॥

नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम् ।
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम्  ॥ ०१७  ॥

येन लोकास्त्रयः सृष्टा दैत्याः सर्वाश्च देवताः ।
स एष भगवान्विष्णुः समुद्रे तप्यते तपः  ॥ ०१८  ॥

स्वं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत् ।
लोको दैवं समालम्ब्य उदासीनो भवेन्न तु  ॥ ०१९  ॥

अकृत्वा मानुषं कर्म यो दैवमनुवर्तते ।
वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवाङ्गना  ॥ ०२०  ॥

न तथा मानुषे लोके भयमस्ति शुभाशुभे ।
यथा त्रिदशलोके हि भयमल्पेन जायते  ॥ ०२१  ॥

कृतः पुरुषकारस्तु दैवमेवानुवर्तते ।
न दैवमकृते किञ्चित्कस्यचिद्दातुमर्हति ॥ ०२२ ॥

यदा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि ।
कथं कर्म विना दैवं स्थास्यते स्थापयिष्यति ॥ ०२३ ॥

न दैवतानि लोकेऽस्मिन्व्यापारं यान्ति कस्यचित् ।
व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया ॥ ०२४ ॥

ऋषीणां देवतानां च सदा भवति विग्रहः ।
कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्तते ॥ ०२५ ॥

कथं चास्य समुत्पत्तिर्यथा दैवं प्रवर्तते ।
एवं त्रिदशलोकेऽपि प्राप्यन्ते बहवश्छलाः ॥ ०२६ ॥

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव चात्मनः साक्षी कृतस्याप्यकृतस्य च ॥ ०२७ ॥

कृतं च विकृतं किञ्चित्कृते कर्मणि सिध्यति ।
सुकृते दुष्कृतं कर्म न यथार्थं प्रपद्यते ॥ ०२८ ॥

देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति ॥ ०२९ ॥

पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ ।
पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्मभिः ॥ ०३० ॥

पुरूरवाश्च राजर्षिर्द्विजैरभिहितः पुरा ।
ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः ॥ ०३१ ॥

अश्वमेधादिभिर्यज्ञैः सत्कृतः कोसलाधिपः ।
महर्षिशापात्सौदासः पुरुषादत्वमागतः ॥ ०३२ ॥

अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्धरौ ।
न गच्छतः स्वर्गलोकं सुकृतेनेह कर्मणा ॥ ०३३ ॥

वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः ।
मिथ्याभिधानेनैकेन रसातलतलं गतः ॥ ०३४ ॥

बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवतैः ।
विष्णोः पुरुषकारेण पातालशयनः कृतः ॥ ०३५ ॥

शक्रस्योदस्य चरणं प्रस्थितो जनमेजयः ।
द्विजस्त्रीणां वधं कृत्वा किं दैवेन न वारितः ॥ ०३६ ॥

अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च ।
वैशंपायनविप्रर्षिः किं दैवेन निवारितः ॥ ०३७ ॥

गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे ।
पुरा नृगश्च राजर्षिः कृकलासत्वमागतः ॥ ०३८ ॥

धुन्धुमारश्च राजर्षिः सत्रेष्वेव जरां गतः ।
प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे ॥ ०३९ ॥

पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवाद्भुजसंश्रयात् ॥ ०४० ॥

तपोनियमसंयुक्ता मुनयः संशितव्रताः ।
किं ते दैवबलाच्छापमुत्सृजन्ते न कर्मणा ॥ ०४१ ॥

पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभम् ।

लोभमोहसमापन्नं न दैवं त्रायते नरम् ॥ ०४२ ॥

यथाग्निः पवनोद्धूतः सूक्ष्मोऽपि भवते महान् ।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥ ०४३ ॥

यथा तैलक्षयाद्दीपः प्रम्लानिमुपगच्छति ।
तथा कर्मक्षयाद्दैवं प्रम्लानिमुपगच्छति ॥ ०४४ ॥

विपुलमपि धनौघं प्राप्य भोगान्स्त्रियो वा; पुरुष इह न शक्तः कर्महीनोऽपि भोक्तुम् ।
सुनिहितमपि चार्थं दैवतै रक्ष्यमाणं; व्ययगुणमपि साधुं कर्मणा संश्रयन्ते ॥ ०४५ ॥

भवति मनुजलोकाद्देवलोको विशिष्टो; बहुतरसुसमृद्ध्या मानुषाणां गृहाणि ।
पितृवनभवनाभं दृश्यते चामराणां; न च फलति विकर्मा जीवलोकेन दैवम् ॥ ०४६ ॥

व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वं; गुरुमिव कृतमग्र्यं कर्म संयाति दैवम् ।
अनुपहतमदीनं कामकारेण दैवं; नयति पुरुषकारः सञ्चितस्तत्र तत्र ॥ ०४७ ॥

एतत्ते सर्वमाख्यातं मया वै मुनिसत्तम ।
फलं पुरुषकारस्य सदा संदृश्य तत्त्वतः ॥ ०४८ ॥

अभ्युत्थानेन दैवस्य समारब्धेन कर्मणा ।
विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात् ॥ ०४९ ॥

# कर्मफलवर्णनम्

## अध्याय ००७

युधिष्ठिर उवाच ॥

कर्मणां मे समस्तानां शुभानां भरतर्षभ ।
फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः ॥ ००१ ॥

भीष्म उवाच ॥

रहस्यं यदृषीणां तु तच्छृणुष्व युधिष्ठिर ।
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता ॥ ००२ ॥

येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ००३ ॥

यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥ ००४ ॥

न नश्यति कृतं कर्म सदा पञ्चेन्द्रियैरिह ।
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च ॥ ००५ ॥

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥ ००६ ॥

यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ००७ ॥

स्थण्डिले शयमानानां गृहाणि शयनानि च ।
चीरवल्कलसंवीते वासांस्याभरणानि च ॥ ००८ ॥

वाहनासनयानानि योगात्मनि तपोधने ।
अग्नीनुपशयानस्य राजपौरुषमुच्यते ॥ ००९ ॥

रसानां प्रतिसंहारे सौभाग्यमनुगच्छति ।
आमिषप्रतिसंहारे पशून्पुत्रांश्च विन्दति ॥ ०१० ॥

अवाक्शिरास्तु यो लम्बेदुदवासं च यो वसेत् ।
सततं चैकशायी यः स लभेतेप्सितां गतिम् ॥ ०११ ॥

पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् ।
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः ॥ ०१२ ॥

वीरासनं वीरशय्यां वीरस्थानमुपासतः ।
अक्षयास्तस्य वै लोकाः सर्वकामगमास्तथा ॥ ०१३ ॥

धनं लभेत दानेन मौनेनाज्ञां विशां पते ।
उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम् ॥ ०१४ ॥

रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ।
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां तथा ॥ ०१५ ॥

प्रायोपवेशनाद्राज्यं सर्वत्र सुखमुच्यते ।
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् ॥ ०१६ ॥

गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः ।
स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ॥ ०१७ ॥

सलिलाशी भवेद्यश्च सदाग्निः संस्कृतो द्विजः ।
मरुं साधयतो राज्यं नाकपृष्ठमनाशके ॥ ०१८ ॥

उपवासं च दीक्षां च अभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥ ०१९ ॥

अधीत्य सर्ववेदान्वै सद्यो दुःखात्प्रमुच्यते ।
मानसं हि चरन्धर्मं स्वर्गलोकमवाप्नुयात् ॥ ०२० ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ०२१ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ ०२२ ॥

अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ ०२३ ॥

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तु न जीर्यते ॥ ०२४ ॥

येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ ०२५ ॥

येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम् ॥ ०२५ ॥

सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ ०२६ ॥

वैशंपायन उवाच ॥

भीष्मस्य तद्वचः श्रुत्वा विस्मिताः कुरुपुङ्गवाः ।
आसन्प्रहृष्टमनसः प्रीतिमन्तोऽभवंस्तदा ॥ ०२७ ॥

यन्मन्त्रे भवति वृथा प्रयुज्यमाने ; यत्सोमे भवति वृथाभिषूयमाणे ।
यच्चाग्नौ भवति वृथाभिहूयमाने ; तत्सर्वं भवति वृथाभिधीयमाने ॥ ०२८ ॥

इत्येतदृषिणा प्रोक्तमुक्तवानस्मि यद्विभो ।
शुभाशुभफलप्राप्तौ किमतः श्रोतुमिच्छसि ॥ ०२९ ॥

---

# पूज्यवर्णनम्

## अध्याय ००८

युधिष्ठिर उवाच ॥

के पूज्याः के नमस्कार्याः कान्नमस्यसि भारत ।
एतन्मे सर्वमाचक्ष्व येषां स्पृहयसे नृप ॥ ००१ ॥

उत्तमापद्गतस्यापि यत्र ते वर्तते मनः ।
मनुष्यलोके सर्वस्मिन्यदमुत्रेह चाप्युत ॥ ००२ ॥

भीष्म उवाच ॥

स्पृहयामि द्विजातीनां येषां ब्रह्म परं धनम् ।
येषां स्वप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनः ॥ ००३ ॥

येषां वृद्धाश्च बालाश्च पितृपैतामहीं धुरम् ।
उद्वहन्ति न सीदन्ति तेषां वै स्पृहयाम्यहम् ॥ ००४ ॥

विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ।

श्रुतवृत्तोपपन्नानां सदाक्षरविदां सताम् ॥ ००५ ॥

संसत्सु वदतां येषां हंसानामिव संघशः ।
मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः ॥ ००६ ॥

सम्यगुच्चारिता वाचः श्रूयन्ते हि युधिष्ठिर ।
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥ ००७ ॥

ये चापि तेषां श्रोतारः सदा सदसि संमताः ।
विज्ञानगुणसंपन्नास्तेषां च स्पृहयाम्यहम् ॥ ००८ ॥

सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च ।
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ॥ ००९ ॥

ये चापि सततं राजंस्तेषां च स्पृहयाम्यहम् ॥ ००९ ॥

शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितम् ।
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर ॥ ०१० ॥

तेषां संख्यायमानानां दानशूरो विशिष्यते ॥ ०१० ॥

धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा ।
कुले जातो धर्मगतिस्तपोविद्यापरायणः ॥ ०११ ॥

न मे त्वत्तः प्रियतरो लोकेऽस्मिन्पाण्डुनन्दन ।
त्वत्तश्च मे प्रियतरा ब्राह्मणा भरतर्षभ ॥ ०१२ ॥

यथा मम प्रियतरास्त्वत्तो विप्राः कुरूद्वह ।
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः ॥ ०१३ ॥

न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथाभवत् ।

न मे पितुः पिता वापि ये चान्येऽपि सुहृज्जनाः ॥ ०१४ ॥

न हि मे वृजिनं किञ्चिद्विद्यते ब्राह्मणेष्विह ।
अणु वा यदि वा स्थूलं विदितं साधुकर्मभिः ॥ ०१५ ॥

कर्मणा मनसा वापि वाचा वापि परंतप ।
यन्मे कृतं ब्राह्मणेषु तेनाद्य न तपाम्यहम् ॥ ०१६ ॥

ब्रह्मण्य इति मामाहुस्तया वाचास्मि तोषितः ।
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥ ०१७ ॥

पश्यामि लोकानमलाञ्छुचीन्ब्राह्मणयायिनः ।
तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥ ०१८ ॥

यथा पत्याश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर ।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ॥ ०१९ ॥

क्षत्रियः शतवर्षी च दशवर्षी च ब्राह्मणः ।
पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणः पिता ॥ ०२० ॥

नारी तु पत्यभावे वै देवरं कुरुते पतिम् ।
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् ॥ ०२१ ॥

पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते ।
अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम ॥ ०२२ ॥

ऋजून्सतः सत्यशीलान्सर्वभूतहिते रतान् ।
आशीविषानिव क्रुद्धान्द्विजानुपचरेत्सदा ॥ ०२३ ॥

तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर ।
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ॥ ०२४ ॥

व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते ।
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ॥ ०२५ ॥

भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् ।
कुर्यादुभयतःशेषं दत्तशेषं न शेषयेत् ॥ ०२६ ॥

दण्डपाणिर्यथा गोषु पालो नित्यं स्थिरो भवेत् ।
ब्राह्मणान्ब्रह्म च तथा क्षत्रियः परिपालयेत् ॥ ०२७ ॥

पितेव पुत्रान्रक्षेथा ब्राह्मणान्ब्रह्मतेजसः ।
गृहे चैषामवेक्षेथाः कच्चिदस्तीह जीवनम् ॥ ०२८ ॥

---

# सृगालवानरसंवादः

## अध्याय ००९

युधिष्ठिर उवाच ॥

ब्राह्मणानां तु ये लोके प्रतिश्रुत्य पितामह ।
न प्रयच्छन्ति मोहात्ते के भवन्ति महामते ॥ ००१ ॥

एतन्मे तत्त्वतो ब्रूहि धर्मं धर्मभृतां वर ।
प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ॥ ००२ ॥

भीष्म उवाच ॥

यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।
आशास्तस्य हताः सर्वाः क्लीबस्येव प्रजाफलम्  ॥ ००३  ॥

यां रात्रिं जायते पापो यां च रात्रिं विनश्यति ।
एतस्मिन्नन्तरे यद्यत्सुकृतं तस्य भारत  ॥ ००४  ॥

यच्च तस्य हुतं किञ्चित्सर्वं तस्योपहन्यते  ॥ ००४  ॥

अत्रैतद्वचनं प्राहुर्धर्मशास्त्रविदो जनाः ।
निशम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया  ॥ ००५  ॥

अपि चोदाहरन्तीमं धर्मशास्त्रविदो जनाः ।
अश्वानां श्यामकर्णानां सहस्रेण स मुच्यते  ॥ ००६  ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सृगालस्य च संवादं वानरस्य च भारत  ॥ ००७  ॥

तौ सखायौ पुरा ह्यास्तां मानुषत्वे परंतप ।
अन्यां योनिं समापन्नौ सार्गालीं वानरीं तथा  ॥ ००८  ॥

ततः परासून्खादन्तं सृगालं वानरोऽब्रवीत् ।
श्मशानमध्ये संप्रेक्ष्य पूर्वजातिमनुस्मरन्  ॥ ००९  ॥

किं त्वया पापकं कर्म कृतं पूर्वं सुदारुणम् ।
यस्त्वं श्मशाने मृतकान्पूतिकानत्सि कुत्सितान्  ॥ ०१०  ॥

एवमुक्तः प्रत्युवाच सृगालो वानरं तदा ।
ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाकृतम्  ॥ ०११  ॥

तत्कृते पापिकां योनिमापन्नोऽस्मि प्लवङ्गम ।
तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः  ॥ ०१२  ॥

इत्येतद्ब्रुवतो राजन्ब्राह्मणस्य मया श्रुतम् ।
कथां कथयतः पुण्यां धर्मज्ञस्य पुरातनीम्  ॥ ०१३  ॥

श्रुतं चापि मया भूयः कृष्णस्यापि विशां पते ।
कथां कथयतः पूर्वं ब्राह्मणं प्रति पाण्डव  ॥ ०१४  ॥

एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै ।
प्रतिश्रुत्य भवेद्देयं नाशा कार्या हि ब्राह्मणैः  ॥ ०१५  ॥

ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते ।
सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः  ॥ ०१६  ॥

यं निरीक्षेत सङ्क्रुद्ध आशया पूर्वजातया ।
प्रदहेत हि तं राजन्कक्षमक्षय्यभुग्यथा  ॥ ०१७  ॥

स एव हि यदा तुष्टो वचसा प्रतिनन्दति ।
भवत्यगदसङ्काशो विषये तस्य भारत  ॥ ०१८  ॥

पुत्रान्पौत्रान्पशूंश्चैव बान्धवान्सचिवांस्तथा ।
पुरं जनपदं चैव शान्तिरिष्टेव पुष्यति  ॥ ०१९  ॥

एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते ।
सहस्रकिरणस्येव सवितुर्धरणीतले  ॥ ०२०  ॥

तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर ।
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम  ॥ ०२१  ॥

ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः ।
शक्यं प्राप्तुं विशेषेण दानं हि महती क्रिया  ॥ ०२२  ॥

इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ॥ ०२३ ॥

महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते ।
वेलायां न तु कस्याञ्चिद्गच्छेद्विप्रो ह्यपूजितः ॥ ०२४ ॥

---

# नीचस्योपदेशनिषेधः

## अध्याय ०१०

युधिष्ठिर उवाच ॥

मित्रसौहृदभावेन उपदेशं करोति यः ।
जात्यावरस्य राजर्षे दोषस्तस्य भवेन्न वा ॥ ००१ ॥

एतदिच्छामि तत्त्वेन व्याख्यातुं वै पितामह ।
सूक्ष्मा गतिर्हि धर्मस्य यत्र मुह्यन्ति मानवाः ॥ ००२ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि शृणु राजन्यथागमम् ।
ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा मया ॥ ००३ ॥

उपदेशो न कर्तव्यो जातिहीनस्य कस्यचित् ।
उपदेशे महान्दोष उपाध्यायस्य भाष्यते ॥ ००४ ॥

निदर्शनमिदं राजञ्शृणु मे भरतर्षभ ।

दुरुक्तवचने राजन्यथा पूर्वं युधिष्ठिर ॥ ००५ ॥

ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतः शुभे ॥ ००५ ॥

तत्राश्रमपदं पुण्यं नानावृक्षगणायुतम् ।
बहुगुल्मलताकीर्णं मृगद्विजनिषेवितम् ॥ ००६ ॥

सिद्धचारणसंघुष्टं रम्यं पुष्पितकाननम् ।
व्रतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम् ॥ ००७ ॥

ब्राह्मणैश्च महाभागैः सूर्यज्वलनसंनिभैः ।
नियमव्रतसंपन्नैः समाकीर्णं तपस्विभिः ॥ ००८ ॥

दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ॥ ००८ ॥

वेदाध्ययनघोषैश्च नादितं भरतर्षभ ।
वालखिल्यैश्च बहुभिर्यतिभिश्च निषेवितम् ॥ ००९ ॥

तत्र कश्चित्समुत्साहं कृत्वा शूद्रो दयान्वितः ।
आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ॥ ०१० ॥

तांस्तु दृष्ट्वा मुनिगणान्देवकल्पान्महौजसः ।
वहतो विविधा दीक्षाः संप्रहृष्यत भारत ॥ ०११ ॥

अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ ।
ततोऽब्रवीत्कुलपतिं पादौ सङ्गृह्य भारत ॥ ०१२ ॥

भवत्प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ ।
तन्मां त्वं भगवन्वक्तुं प्रव्राजयितुमर्हसि ॥ ०१३ ॥

वर्णावरोऽहं भगवञ्शूद्रो जात्यास्मि सत्तम ।

शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे ॥ ०१४ ॥

कुलपतिरुवाच ॥

न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्तितुम् ।
आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव ॥ ०१५ ॥

भीष्म उवाच ॥

एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप ।
कथमत्र मया कार्यं श्रद्धा धर्मे परा च मे ॥ ०१६ ॥

विज्ञातमेवं भवतु करिष्ये प्रियमात्मनः ॥ ०१६ ॥

गत्वाश्रमपदाद्दूरमुटजं कृतवांस्तु सः ।
तत्र वेदिं च भूमिं च देवतायतनानि च ॥ ०१७ ॥

निवेश्य भरतश्रेष्ठ नियमस्थोऽभवत्सुखम् ॥ ०१७ ॥

अभिषेकांश्च नियमान्देवतायतनेषु च ।
बलिं च कृत्वा हुत्वा च देवतां चाप्यपूजयत् ॥ ०१८ ॥

सङ्कल्पनियमोपेतः फलाहारो जितेन्द्रियः ।
नित्यं संनिहिताभिश्च ओषधीभिः फलैस्तथा ॥ ०१९ ॥

अतिथीन्पूजयामास यथावत्समुपागतान् ।
एवं हि सुमहान्कालो व्यत्यक्रामत्स तस्य वै ॥ ०२० ॥

अथास्य मुनिरागच्छत्सङ्गत्या वै तमाश्रमम् ।
संपूज्य स्वागतेनर्षिं विधिवत्पर्यतोषयत् ॥ ०२१ ॥

अनुकूलाः कथाः कृत्वा यथावत्पर्यपृच्छत ।
ऋषिः परमतेजस्वी धर्मात्मा संयतेन्द्रियः  ॥ ०२२  ॥

एवं स बहुशस्तस्य शूद्रस्य भरतर्षभ ।
सोऽगच्छदाश्रममृषिः शूद्रं द्रष्टुं नरर्षभ  ॥ ०२३  ॥

अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ ।
पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु  ॥ ०२४  ॥

बाढमित्येव तं विप्र उवाच भरतर्षभ ।
शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत्  ॥ ०२५  ॥

अथ दर्भांश्च वन्याश्च ओषधीर्भरतर्षभ ।
पवित्रमासनं चैव बृसीं च समुपानयत्  ॥ ०२६  ॥

अथ दक्षिणमावृत्य बृसीं परमशीर्षिकाम् ।
कृतामन्यायतो दृष्ट्वा ततस्तमृषिरब्रवीत्  ॥ ०२७  ॥

कुरुष्वैतां पूर्वशीर्षां भव चोदङ्मुखः शुचिः ।
स च तत्कृतवाञ्शूद्रः सर्वं यदृषिरब्रवीत्  ॥ ०२८  ॥

यथोपदिष्टं मेधावी दर्भादींस्तान्यथातथम् ।
हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना  ॥ ०२९  ॥

ऋषिणा पितृकार्ये च स च धर्मपथे स्थितः ।
पितृकार्ये कृते चापि विसृष्टः स जगाम ह  ॥ ०३०  ॥

अथ दीर्घस्य कालस्य स तप्यञ्शूद्रतापसः ।
वने पञ्चत्वमगमत्सुकृतेन च तेन वै  ॥ ०३१  ॥

अजायत महाराजराजवंशे महाद्युतिः  ॥ ०३१  ॥

तथैव स ऋषिस्तात कालधर्ममवाप्य ह ।
पुरोहितकुले विप्र आजातो भरतर्षभ ॥ ०३२ ॥

एवं तौ तत्र संभूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्धितौ चापि विद्यासु कुशलावुभौ ॥ ०३३ ॥

अथर्ववेदे वेदे च बभूवर्षिः सुनिश्चितः ।
कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः ॥ ०३४ ॥

सख्ये चापि परा प्रीतिस्तयोश्चापि व्यवर्धत ॥ ०३४ ॥

पितर्युपरते चापि कृतशौचः स भारत ।
अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः ॥ ०३५ ॥

अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः ॥ ०३५ ॥

स तं पुरोधाय सुखमवसद्भरतर्षभ ।
राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ॥ ०३६ ॥

पुण्याहवाचने नित्यं धर्मकार्येषु चासकृत् ।
उत्स्मयन्प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् ॥ ०३७ ॥

एवं स बहुशो राजन्पुरोधसमुपाहसत् ॥ ०३७ ॥

लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपम् ।
उत्स्मयन्तं च सततं दृष्ट्वासौ मन्युमानभूत् ॥ ०३८ ॥

अथ शून्ये पुरोधास्तु सह राज्ञा समागतः ।
कथाभिरनुकूलाभी राजानमभिरामयत् ॥ ०३९ ॥

ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ ।
वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ॥ ०४० ॥

राजोवाच ॥

वराणां ते शतं दद्यां किमुतैकं द्विजोत्तम ।
स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ॥ ०४१ ॥

पुरोहित उवाच ॥

एकं वै वरमिच्छामि यदि तुष्टोऽसि पार्थिव ।
यद्ददासि महाराज सत्यं तद्वद मानृतम् ॥ ०४२ ॥

भीष्म उवाच ॥

बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर ।
यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ॥ ०४३ ॥

पुरोहित उवाच ॥

पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य माम् ॥ ०४४ ॥

सव्रीडं वै भवति हि मनो मे हसता त्वया ।
कामया शापितो राजन्नान्यथा वक्तुमर्हसि ॥ ०४५ ॥

भाव्यं हि कारणेनात्र न ते हास्यमकारणम् ।
कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे ॥ ०४६ ॥

राजोवाच ॥

एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि ।
अवश्यमेव वक्तव्यं श‍ृणुष्वैकमना द्विज ॥ ०४७ ॥

पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम ।
जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे श‍ृणु ॥ ०४८ ॥

शूद्रोऽहमभवं पूर्वं तापसो भृशसंयुतः ।
ऋषिरुग्रतपास्त्वं च तदाभूर्द्विजसत्तम ॥ ०४९ ॥

प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना ।
पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ ॥ ०५० ॥

बृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ॥ ०५० ॥

एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ।
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम् ॥ ०५१ ॥

मत्कृते ह्युपदेशेन त्वया प्राप्तमिदं फलम् ॥ ०५१ ॥

एतस्मात्कारणाद्ब्रह्मन्प्रहसे त्वां द्विजोत्तम ।
न त्वां परिभवन्ब्रह्मन्प्रहसामि गुरुर्भवान् ॥ ०५२ ॥

विपर्ययेण मे मन्युस्तेन संतप्यते मनः ।
जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ॥ ०५३ ॥

एवं तवोग्रं हि तप उपदेशेन नाशितम् ।
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ॥ ०५४ ॥

इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज ।
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ॥ ०५५ ॥

भीष्म उवाच ॥

ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः ।
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः ॥ ०५६ ॥

कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमः ।
तीर्थानि चाभिगत्वा वै दानानि विविधानि च ॥ ०५७ ॥

दत्त्वा गाश्चैव विप्राणां पूतात्मा सोऽभवद्द्विजः ।
तमेव चाश्रमं गत्वा चचार विपुलं तपः ॥ ०५८ ॥

ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम ।
संमतश्चाभवत्तेषामाश्रमेऽऽश्रमवासिनाम् ॥ ०५९ ॥

एवं प्राप्तो महत्कृच्छ्रमृषिः स नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ॥ ०६० ॥

वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप ।
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात् ॥ ०६१ ॥

एषितव्यं सदा वाचा नृपेण द्विजसत्तमात् ।
न प्रवक्तव्यमिह हि किञ्चिद्वर्णावरे जने ॥ ०६२ ॥

ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
एतेषु कथयन्राजन्ब्राह्मणो न प्रदुष्यति ॥ ०६३ ॥

तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किञ्चिदग्रतः ।
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ॥ ०६४ ॥

तस्मान्मौनानि मुनयो दीक्षां कुर्वन्ति चादृताः ।
दुरुक्तस्य भयाद्राजन्नानुभाषन्ति किञ्चन ॥ ०६५ ॥

धार्मिका गुणसंपन्नाः सत्यार्जवपरायणाः ।
दुरुक्तवाचाभिहताः प्राप्नुवन्तीह दुष्कृतम् ॥ ०६६ ॥

उपदेशो न कर्तव्यः कदाचिदपि कस्यचित् ।
उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ॥ ०६७ ॥

विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्ममिच्छता ।
सत्यानृतेन हि कृत उपदेशो हिनस्ति वै ॥ ०६८ ॥

वक्तव्यमिह पृष्टेन विनिश्चित्य विपर्ययम् ।
स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ॥ ०६९ ॥

एतत्ते सर्वमाख्यातमुपदेशे कृते सति ।
महान्क्लेशो हि भवति तस्मान्नोपदिशेत्कचित् ॥ ०७० ॥

---

# श्रियो निवासस्थानानि

## अध्याय ०११

युधिष्ठिर उवाच ॥

कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि यथादृष्टं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसंनिधौ पर्यपृच्छत ॥ ००२ ॥

नारायणस्याङ्कगतां ज्वलन्तीं ; दृष्ट्वा श्रियं पद्मसमानवक्राम् ।
कौतूहलाद्विस्मितचारुनेत्रा ; पप्रच्छ माता मकरध्वजस्य ॥ ००३ ॥

कानीह भूतान्युपसेवसे त्वं ; संतिष्ठती कानि न सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते ; तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ ००४ ॥

एवं तदा श्रीरभिभाष्यमाणा ; देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं ; मनोहरं चन्द्रमुखी प्रसन्ना ॥ ००५ ॥

वसामि सत्ये सुभगे प्रगल्भे ; दक्षे नरे कर्मणि वर्तमाने ।
नाकर्मशीले पुरुषे वसामि ; न नास्तिके साङ्करिके कृतघ्ने ॥ ००६ ॥

न भिन्नवृत्ते न नृशंसवृत्ते ; न चापि चौरे न गुरुष्वसूये ॥ ००६ ॥

ये चाल्पतेजोबलसत्त्वसारा ; हृष्यन्ति कुप्यन्ति च यत्र तत्र ।
न देवि तिष्ठामि तथाविधेषु ; नरेषु संसुप्तमनोरथेषु ॥ ००७ ॥

यश्चात्मनि प्रार्थयते न किं चि ;द्यश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसंतोषरतेषु नित्यं ; नरेषु नाहं निवसामि देवि ॥ ००८ ॥

वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
वृद्धसेविषु दान्तेषु सत्त्वज्ञेषु महात्मसु ॥ ००९ ॥

स्त्रीषु क्षान्तासु दान्तासु देवद्विजपरासु च ।
वसामि सत्यशीलासु स्वभावनिरतासु च ॥ ०१० ॥

प्रकीर्णभाण्डामनवेक्ष्यकारिणीं ; सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा ;मेवंविधां स्त्रीं परिवर्जयामि ॥ ०११ ॥

लोलामचोक्षामवलेहिनीं च ; व्यपेतधैर्यां कलहप्रियां च ।
निद्राभिभूतां सततं शयाना ;मेवंविधां स्त्रीं परिवर्जयामि ॥ ०१२ ॥

सत्यासु नित्यं प्रियदर्शनासु ; सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु ; कल्याणशीलासु विभूषितासु ॥ ०१३ ॥

यानेषु कन्यासु विभूषणेषु ; यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु ; नक्षत्रवीथीषु च शारदीषु ॥ ०१४ ॥

शैलेषु गोष्ठेषु तथा वनेषु ; सरःसु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वननादितासु ; क्रौञ्चावघुष्टस्वरशोभितासु ॥ ०१५ ॥

विस्तीर्णकूलह्रदशोभितासु ; तपस्विसिद्धद्विजसेवितासु ।
वसामि नित्यं सुबहूदकासु ; सिंहैर्गजैश्चाकुलितोदकासु ॥ ०१६ ॥

मत्ते गजे गोवृषभे नरेन्द्रे ; सिंहासने सत्पुरुषे च नित्यम् ॥ ०१६ ॥

यस्मिन्गृहे हूयते हव्यवाहो ; गोब्राह्मणश्चार्च्यते देवताश्च ।
काले च पुष्पैर्बलयः क्रियन्ते ; तस्मिन्गृहे नित्यमुपैमि वासम् ॥ ०१७ ॥

स्वाध्यायनित्येषु द्विजेषु नित्यं ; क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि ; शूद्रे च शुश्रूषणनित्ययुक्ते ॥ ०१८ ॥

नारायणे त्वेकमना वसामि ; सर्वेण भावेन शरीरभूता ।
तस्मिन्हि धर्मः सुमहान्निविष्टो ; ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ ०१९ ॥

नाहं शरीरेण वसामि देवि ; नैवं मया शक्यमिहाभिधातुम् ।
यस्मिंस्तु भावेन वसामि पुंसि ; स वर्धते धर्मयशोर्थकामैः ॥ ०२० ॥

# भ ण्गाश्वनोपाख्यानम्

## अध्याय ०१२

युधिष्ठिर उवाच ॥

स्त्रीपुंसयोः संप्रयोगे स्पर्शः कस्याधिको भवेत् ।
एतन्मे संशयं राजन्यथावद्वक्तुमर्हसि ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भङ्गाश्वनेन शक्रस्य यथा वैरमभूत्पुरा ॥ ००२ ॥

पुरा भङ्गाश्वनो नाम राजर्षिरतिधार्मिकः ।
अपुत्रः स नरव्याघ्र पुत्रार्थं यज्ञमाहरत् ॥ ००३ ॥

अग्निष्टुं नाम राजर्षिरिन्द्रद्विष्टं महाबलः ।
प्रायश्चित्तेषु मर्त्यानां पुत्रकामस्य चेष्यते ॥ ००४ ॥

इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः ।
अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ॥ ००५ ॥

कस्यचित्त्वथ कालस्य मृगयामटतो नृप ।
इदमन्तरमित्येव शक्रो नृपममोहयत् ॥ ००६ ॥

एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः ।
न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा ॥ ००७ ॥

इतश्चेतश्च वै धावञ्श्रमतृष्णार्दितो नृपः ।
सरोऽपश्यत्सुरुचिरं पूर्णं परमवारिणा ॥ ००८ ॥

सोऽवगाह्य सरस्तात पाययामास वाजिनम् ॥ ००८ ॥

अथ पीतोदकं सोऽश्वं वृक्षे बद्ध्वा नृपोत्तमः ।
अवगाह्य ततः स्नातो राजा स्त्रीत्वमवाप ह ॥ ००९ ॥

आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः ।
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः ॥ ०१० ॥

आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम् ।
अग्निष्टुं नाम इष्टं मे पुत्राणां शतमौरसम् ॥ ०११ ॥

जातं महाबलानां वै तान्प्रवक्ष्यामि किं त्वहम् ।
दारेषु चास्मदीयेषु पौरजानपदेषु च ॥ ०१२ ॥

मृदुत्वं च तनुत्वं च विक्लवत्वं तथैव च ।
स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः ॥ ०१३ ॥

व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः ॥ ०१३ ॥

पौरुषं विप्रनष्टं मे स्त्रीत्वं केनापि मेऽभवत् ।
स्त्रीभावात्कथमश्वं तु पुनरारोढुमुत्सहे ॥ ०१४ ॥

महता त्वथ खेदेन आरुह्याश्वं नराधिपः ।
पुनरायात्पुरं तात स्त्रीभूतो नृपसत्तम ॥ ०१५ ॥

पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते ।
किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥ ०१६ ॥

अथोवाच स राजर्षिः स्त्रीभूतो वदतां वरः ।
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ॥ ०१७ ॥

उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः ॥ ०१७ ॥

अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥ ०१८ ॥

तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः ।
अतृप्त इव पुत्राणां दाराणां च धनस्य च ॥ ०१९ ॥

उवाच पुत्रांश्च ततः स्त्रीभूतः पार्थिवोत्तमः ।
संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः ॥ ०२० ॥

अभिषिच्य स पुत्राणां शतं राजा वनं गतः ॥ ०२० ॥

तामाश्रमे स्त्रियं तात तापसोऽभ्यवपद्यत ।
तापसेनास्य पुत्राणामाश्रमेऽप्यभवच्छतम् ॥ ०२१ ॥

अथ सा तान्सुतान्गृह्य पूर्वपुत्रानभाषत ।
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ॥ ०२२ ॥

एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ।
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ॥ ०२३ ॥

तान्दृष्ट्वा भ्रातृभावेन भुञ्जानान्राज्यमुत्तमम् ।
चिन्तयामास देवेन्द्रो मन्युनाभिपरिप्लुतः ॥ ०२४ ॥

उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ ०२४ ॥

ततो ब्राह्मणरूपेण देवराजः शतक्रतुः ।
भेदयामास तान्गत्वा नगरं वै नृपात्मजान्  ॥ ०२५  ॥

भ्रातृणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुः सुताः ।
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः  ॥ ०२६  ॥

यूयं भङ्गाश्वनापत्यास्तापसस्येतरे सुताः ।
कश्यपस्य सुराश्चैव असुराश्च सुतास्तथा  ॥ ०२७  ॥

युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः  ॥ ०२७  ॥

इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ।
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह  ॥ ०२८  ॥

ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत ।
केन दुःखेन संतप्ता रोदिषि त्वं वरानने  ॥ ०२९  ॥

ब्राह्मणं तु ततो दृष्ट्वा सा स्त्री करुणमब्रवीत् ।
पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते  ॥ ०३०  ॥

अहं राजाभवं विप्र तत्र पुत्रशतं मया ।
समुत्पन्नं सुरूपाणां विक्रान्तानां द्विजोत्तम  ॥ ०३१  ॥

कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ।
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम  ॥ ०३२  ॥

पुत्रान्राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः  ॥ ०३२  ॥

स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना ।
आश्रमे जनितं ब्रह्मन्नीतास्ते नगरं मया  ॥ ०३३  ॥

तेषां च वैरमुत्पन्नं कालयोगेन वै द्विज ।
एतच्छोचामि विप्रेन्द्र दैवेनाभिपरिप्लुता ॥ ०३४ ॥

इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत्परुषं वचः ।
पुरा सुदुःसहं भद्रे मम दुःखं त्वया कृतम् ॥ ०३५ ॥

इन्द्रद्विष्टेन यजता मामनादृत्य दुर्मते ।
इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते यातितं मया ॥ ०३६ ॥

इन्द्रं तु दृष्ट्वा राजर्षिः पादयोः शिरसा गतः ।
प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ॥ ०३७ ॥

इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ॥ ०३७ ॥

प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ ।
पुत्रा वै कतमे राजञ्जीवन्तु तव शंस मे ॥ ०३८ ॥

स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन् ॥ ०३८ ॥

तापसी तु ततः शक्रमुवाच प्रयताञ्जलिः ।
स्त्रीभूतस्य हि ये जातास्ते मे जीवन्तु वासव ॥ ०३९ ॥

इन्द्रस्तु विस्मितो हृष्टः स्त्रियं पप्रच्छ तां पुनः ।
पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ॥ ०४० ॥

स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम् ।
कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ॥ ०४१ ॥

स्त्र्युवाच ॥

स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै ।

तस्मात्ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥ ०४२ ॥

भीष्म उवाच ॥

एवमुक्ते ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह ।
सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ॥ ०४३ ॥

वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत ।
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसि ॥ ०४४ ॥

स्त्र्युवाच ॥

स्त्रीत्वमेव वृणे शक्र प्रसन्ने त्वयि वासव ।
एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह ।
पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं रोचयसे विभो ॥ ०४६ ॥

एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ।
स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा ॥ ०४७ ॥

एतस्मात्कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ॥ ०४७ ॥

रमे चैवाधिकं स्त्रीत्वे सत्यं वै देवसत्तम ।
स्त्रीभावेन हि तुष्टोऽस्मि गम्यतां त्रिदशाधिप ॥ ०४८ ॥

एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः ।
एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥ ०४९ ॥

# शुभाशुभकर्मफलम्

## अध्याय ०१३

युधिष्ठिर उवाच ॥

किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना ।
कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् ॥ ००१ ॥

भीष्म उवाच ॥

कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चैव दश कर्मपथांस्त्यजेत् ॥ ००२ ॥

प्राणातिपातं स्तैन्यं च परदारमथापि च ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ ००३ ॥

असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ ००४ ॥

अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ ००५ ॥

तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ।
शुभाशुभान्याचरन्हि तस्य तस्याश्नुते फलम् ॥ ००६ ॥

---

# उपमन्यूपाख्यानम्

## शिवस्तवः

## अध्याय ०१४

युधिष्ठिर उवाच ॥

पितामहेशाय विभो नामान्याचक्ष्व शंभवे ।
बभ्रवे विश्वमायाय महाभाग्यं च तत्त्वतः ॥ ००१ ॥

भीष्म उवाच ॥

सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि ।
शिवाय विश्वरूपाय यन्मां पृच्छद्युधिष्ठिरः ॥ ००२ ॥

नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मयोनिना ।
निवेदितं ब्रह्मलोके ब्रह्मणो यत्पुराभवत् ॥ ००३ ॥

द्वैपायनप्रभृतयस्तथैवेमे तपोधनाः ।
ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ॥ ००४ ॥

ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये ।
महाभाग्यं विभो ब्रूहि मुण्डिनेऽथ कपर्दिने ॥ ००५ ॥

वासुदेव उवाच ॥

न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः ।
हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः ।
न विदुर्यस्य निधनमादिं वा सूक्ष्मदर्शिनः ॥ ००७ ॥

स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ॥ ००७ ॥

तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान् ।
भवतां कीर्तयिष्यामि व्रतेशाय यथातथम् ॥ ००८ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा तु भगवान्गुणांस्तस्य महात्मनः ।
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ॥ ००९ ॥

वासुदेव उवाच ॥

शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वं च तात युधिष्ठिर ।
त्वं चापगेय नामानि निशामय जगत्पतेः ॥ ०१० ॥

यदवाप्तं च मे पूर्वं साम्बहेतोः सुदुष्करम् ।
यथा च भगवान्दृष्टो मया पूर्वं समाधिना ॥ ०११ ॥

शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता ।
अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् ॥ ०१२ ॥

प्रद्युम्नचारुदेष्णादीन्रुक्मिण्या वीक्ष्य पुत्रकान् ।
पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ॥ ०१३ ॥

शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषम् ।
आत्मतुल्यं मम सुतं प्रयच्छाच्युत माचिरम् ॥ ०१४ ॥

न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किञ्चन ।
लोकान्सृजेस्त्वमपरानिच्छन्यदुकुलोद्वह ॥ ०१५ ॥

त्वया द्वादश वर्षाणि वायुभूतेन शुष्यता ।

आराध्य पशुभर्तारं रुक्मिण्या जनिताः सुताः ॥ ०१६ ॥

चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः ।
चारुश्रवाश्चारुयशाः प्रद्युम्नः शंभुरेव च ॥ ०१७ ॥

यथा ते जनिताः पुत्रा रुक्मिण्याश्चारुविक्रमाः ।
तथा ममापि तनयं प्रयच्छ बलशालिनम् ॥ ०१८ ॥

इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम् ।
अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ ०१९ ॥

सा च मामब्रवीद्गच्छ विजयाय शिवाय च ॥ ०१९ ॥

ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोनुगाः ।
क्षेत्रौषध्यो यज्ञवाहाच्छन्दांस्यृषिगणा धरा ॥ ०२० ॥

समुद्रा दक्षिणा स्तोभा ऋक्षाणि पितरो ग्रहाः ।
देवपत्न्यो देवकन्या देवमातर एव च ॥ ०२१ ॥

मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ।
सावित्री ब्रह्मविद्या च ऋतवो वत्सराः क्षपाः ॥ ०२२ ॥

क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः ।
रक्षन्तु सर्वत्र गतं त्वां यादव सुखावहम् ॥ ०२३ ॥

अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ॥ ०२३ ॥

एवं कृतस्वस्त्ययनस्तयाहं ; तामभ्यनुज्ञाय कपीन्द्रपुत्रीम् ।
पितुः समीपे नरसत्तमस्य ; मातुश्च राज्ञश्च तथाहुकस्य ॥ ०२४ ॥

तमर्थमावेद्य यदब्रवीन्मां ; विद्याधरेन्द्रस्य सुता भृशार्ता ।

तानभ्यनुज्ञाय तदातिदुःखा ;द्वदं तथैवातिबलं च रामम्  ॥ ०२५  ॥

प्राप्यानुज्ञां गुरुजनादहं ताक्ष्र्यमचिन्तयम् ।
सोऽवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्जयम्  ॥ ०२६  ॥

तत्राहमद्भुतान्भावानपश्यं गिरिसत्तमे ।
क्षेत्रं च तपसां श्रेष्ठं पश्याम्याश्रममुत्तमम्  ॥ ०२७  ॥

दिव्यं वैयाघ्रपद्यस्य उपमन्योर्महात्मनः ।
पूजितं देवगन्धर्वैर्ब्राह्म्या लक्ष्म्या समन्वितम्  ॥ ०२८  ॥

धवककुभकदम्बनारिकेलैः ; कुरबककेतकजम्बुपाटलाभिः ।
वटवरुणकवत्सनाभबिल्वैः ; सरलकपित्थप्रियालसालतालैः  ॥ ०२९  ॥

बदरीकुन्दपुन्नागैरशोकाम्रातिमुक्तकैः ।
भल्लातकैर्मधूकैश्च चम्पकैः पनसैस्तथा  ॥ ०३०  ॥

वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् ।
पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितम्  ॥ ०३१  ॥

नानाशकुनिसंभोज्यैः फलैर्वृक्षैरलङ्कृतम् ।
यथास्थानविनिक्षिप्तैर्भूषितं वनराजिभिः  ॥ ०३२  ॥

रुरुवारणशार्दूलसिंहद्वीपिसमाकुलम् ।
कुरङ्गबर्हिणाकीर्णं मार्जारभुजगावृतम्  ॥ ०३३  ॥

पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम्  ॥ ०३३  ॥

नानापुष्परजोमिश्रो गजदानाधिवासितः ।
दिव्यस्त्रीगीतबहुलो मारुतोऽत्र सुखो ववौ  ॥ ०३४  ॥

धारानिनादैर्विहगप्रणादैः ; शुभैस्तथा बृंहितैः कुञ्जराणाम् ।
गीतैस्तथा किंनराणामुदारैः ; शुभैः स्वनैः सामगानां च वीर ॥ ०३५ ॥

अचिन्त्यं मनसाप्यन्यैः सरोभिः समलङ्कृतम् ।
विशालैश्चाग्निशरणैर्भूषितं कुशसंवृतम् ॥ ०३६ ॥

विभूषितं पुण्यपवित्रतोयया ; सदा च जुष्टं नृप जह्नुकन्यया ।
महात्मभिर्धर्मभृतां वरिष्ठै ;र्महर्षिभिर्भूषितमग्निकल्पैः ॥ ०३७ ॥

वाय्वाहारैरम्बुपैर्जप्यनित्यैः ; संप्रक्षालैर्यतिभिर्ध्याननित्यैः ।
धूमाशनैरूष्मपैः क्षीरपैश्च ; विभूषितं ब्राह्मणेन्द्रैः समन्तात् ॥ ०३८ ॥

गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिनस्तथा ।
मरीचिपाः फेनपाश्च तथैव मृगचारिणः ॥ ०३९ ॥

सुदुःखान्नियमांस्तांस्तान्वहतः सुतपोन्वितान् ।
पश्यन्नुत्फुल्लनयनः प्रवेष्टुमुपचक्रमे ॥ ०४० ॥

सुपूजितं देवगणैर्महात्मभिः ; शिवादिभिर्भारत पुण्यकर्मभिः ।
रराज तच्चाश्रममण्डलं सदा ; दिवीव राजन्रविमण्डलं यथा ॥ ०४१ ॥

क्रीडन्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत् ।
प्रभावाद्दीप्ततपसः संनिकर्षगुणान्विताः ॥ ०४२ ॥

तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरमे ।
सेविते द्विजशार्दूलैर्वेदवेदाङ्गपारगैः ॥ ०४३ ॥

नानानियमविख्यातैरृषिभिश्च महात्मभिः ।
प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ॥ ०४४ ॥

तेजसा तपसा चैव दीप्यमानं यथानलम् ।

शिष्यमध्यगतं शान्तं युवानं ब्राह्मणर्षभम्  ॥ ०४५  ॥

शिरसा वन्दमानं मामुपमन्युरभाषत  ॥ ०४५  ॥

स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः ।
यत्पूज्यः पूजयसि नो द्रष्टव्यो द्रष्टुमिच्छसि  ॥ ०४६  ॥

तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु ।
धर्मे च शिष्यवर्गे च समपृच्छमनामयम्  ॥ ०४७  ॥

ततो मां भगवानाह साम्ना परमवल्गुना ।
लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयम्  ॥ ०४८  ॥

तपः सुमहदास्थाय तोषयेशानमीश्वरम् ।
इह देवः सपत्नीकः समाक्रीडत्यधोक्षज  ॥ ०४९  ॥

इहैव देवताश्रेष्ठं देवाः सर्षिगणाः पुरा ।
तपसा ब्रह्मचर्येण सत्येन च दमेन च  ॥ ०५०  ॥

तोषयित्वा शुभान्कामान्प्राप्नुवंस्ते जनार्दन  ॥ ०५०  ॥

तेजसां तपसां चैव निधिः स भगवानिह ।
शुभाशुभान्वितान्भावान्विसृजन्सङ्क्षिपन्नपि  ॥ ०५१  ॥

आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन्  ॥ ०५१  ॥

हिरण्यकशिपुर्योऽभूद्दानवो मेरुकम्पनः ।
तेन सर्वामरैश्वर्यं शर्वात्प्राप्तं समार्बुदम्  ॥ ०५२  ॥

तस्यैव पुत्रप्रवरो मन्दरो नाम विश्रुतः ।
महादेववराच्छक्रं वर्षार्बुदमयोधयत्  ॥ ०५३  ॥

विष्णोश्चक्रं च तद्घोरं वज्रमाखण्डलस्य च ।
शीर्णं पुराभवत्तात ग्रहस्याङ्गेषु केशव ॥ ०५४ ॥

अर्द्यमानाश्च विबुधा ग्रहेण सुबलीयसा ।
शिवदत्तवराञ्जघ्नुरसुरेन्द्रान्सुरा भृशम् ॥ ०५५ ॥

तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतामदात् ।
शतं वर्षसहस्राणां सर्वलोकेश्वरोऽभवत् ॥ ०५६ ॥

ममैवानुचरो नित्यं भवितासीति चाब्रवीत् ॥ ०५६ ॥

तथा पुत्रसहस्राणामयुतं च ददौ प्रभुः ।
कुशद्वीपं च स ददौ राज्येन भगवानजः ॥ ०५७ ॥

तथा शतमुखो नाम धात्रा सृष्टो महासुरः ।
येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः ॥ ०५८ ॥

तं प्राह भगवांस्तुष्टः किं करोमीति शङ्करः ॥ ०५८ ॥

तं वै शतमुखः प्राह योगो भवतु मेऽद्भुतः ।
बलं च दैवतश्रेष्ठ शाश्वतं संप्रयच्छ मे ॥ ०५९ ॥

स्वायंभुवः क्रतुश्चापि पुत्रार्थमभवत्पुरा ।
आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि ॥ ०६० ॥

तस्य देवोऽददत्पुत्रान्सहस्रं क्रतुसंमितान् ।
योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः ॥ ०६१ ॥

वालखिल्या मघवता अवज्ञाताः पुरा किल ।
तैः क्रुद्धैर्भगवान्रुद्रस्तपसा तोषितो ह्यभूत् ॥ ०६२ ॥

तांश्चापि दैवतश्रेष्ठः प्राह प्रीतो जगत्पतिः ।
सुपर्णं सोमहर्तारं तपसोत्पादयिष्यथ ॥ ०६३ ॥

महादेवस्य रोषाच्च आपो नष्टाः पुराभवन् ।
ताश्च सप्तकपालेन देवैरन्याः प्रवर्तिताः ॥ ०६४ ॥

अत्रेर्भार्यापि भर्तारं संत्यज्य ब्रह्मवादिनी ।
नाहं तस्य मुनेर्भूयो वशगा स्यां कथञ्चन ॥ ०६५ ॥

इत्युक्त्वा सा महादेवमगच्छच्छरणं किल ॥ ०६५ ॥

निराहारा भयादत्रेस्त्रीणि वर्षशतान्यपि ।
अशेत मुसलेष्वेव प्रसादार्थं भवस्य सा ॥ ०६६ ॥

तामब्रवीद्धसन्देवो भविता वै सुतस्तव ।
वंशे तवैव नाम्ना तु ख्यातिं यास्यति चेप्सिताम् ॥ ०६७ ॥

शाकल्यः संशितात्मा वै नव वर्षशतान्यपि ।
आराधयामास भवं मनोयज्ञेन केशव ॥ ०६८ ॥

तं चाह भगवांस्तुष्टो ग्रन्थकारो भविष्यसि ।
वत्साक्षया च ते कीर्तिस्त्रैलोक्ये वै भविष्यति ॥ ०६९ ॥

अक्षयं च कुलं तेऽस्तु महर्षिभिरलङ्कृतम् ॥ ०६९ ॥

सावर्णिश्चापि विख्यात ऋषिरासीत्कृते युगे ।
इह तेन तपस्तप्तं षष्टिं वर्षशतान्यथ ॥ ०७० ॥

तमाह भगवान्रुद्रः साक्षात्तुष्टोऽस्मि तेऽनघ ।
ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः ॥ ०७१ ॥

मयापि च यथा दृष्टो देवदेवः पुरा विभुः ।
साक्षात्पशुपतिस्तात तच्चापि शृणु माधव ॥ ०७२ ॥

यदर्थं च महादेवः प्रयतेन मया पुरा ।
आराधितो महातेजास्तच्चापि शृणु विस्तरम् ॥ ०७३ ॥

यदवाप्तं च मे पूर्वं देवदेवान्महेश्वरात् ।
तत्सर्वमखिलेनाद्य कथयिष्यामि तेऽनघ ॥ ०७४ ॥

पुरा कृतयुगे तात ऋषिरासीन्महायशाः ।
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ॥ ०७५ ॥

तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः ॥ ०७५ ॥

कस्यचित्त्वथ कालस्य धौम्येन सह माधव ।
आगच्छमाश्रमं क्रीडन्मुनीनां भावितात्मनाम् ॥ ०७६ ॥

तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी ।
लक्षितं च मया क्षीरं स्वादुतो ह्यमृतोपमम् ॥ ०७७ ॥

ततः पिष्टं समालोड्य तोयेन सह माधव ।
आवयोः क्षीरमित्येव पानार्थमुपनीयते ॥ ०७८ ॥

अथ गव्यं पयस्तात कदाचित्प्राशितं मया ।
ततः पिष्टरसं तात न मे प्रीतिमुदावहत् ॥ ०७९ ॥

ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तदा ।
क्षीरोदनसमायुक्तं भोजनं च प्रयच्छ मे ॥ ०८० ॥

ततो मामब्रवीन्माता दुःखशोकसमन्विता ।

पुत्रस्नेहात्परिष्वज्य मूर्ध्नि चाघ्राय माधव ॥ ०८१ ॥

कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनाम् ।
वने निवसतां नित्यं कन्दमूलफलाशिनाम् ॥ ०८२ ॥

अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम् ।
कुतः क्षीरोदनं वत्स सुखानि वसनानि च ॥ ०८३ ॥

तं प्रपद्य सदा वत्स सर्वभावेन शङ्करम् ।
तत्प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक ॥ ०८४ ॥

जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् ।
मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ॥ ०८५ ॥

ततोऽहं तप आस्थाय तोषयामास शङ्करम् ।
दिव्यं वर्षसहस्रं तु पादाङ्गुष्ठाग्रविष्ठितः ॥ ०८६ ॥

एकं वर्षशतं चैव फलाहारस्तदाभवम् ।
द्वितीयं शीर्णपर्णाशी तृतीयं चाम्बुभोजनः ॥ ०८७ ॥

शतानि सप्त चैवाहं वायुभक्षस्तदाभवम् ॥ ०८७ ॥

ततः प्रीतो महादेवः सर्वलोकेश्वरः प्रभुः ।
शक्ररूपं स कृत्वा तु सर्वैर्देवगणैर्वृतः ॥ ०८८ ॥

सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः ॥ ०८८ ॥

सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम् ।
आवेष्टितकरं रौद्रं चतुर्दंष्ट्रं महागजम् ॥ ०८९ ॥

समास्थितश्च भगवान्दीप्यमानः स्वतेजसा ।

आजगाम किरीटी तु हारकेयूरभूषितः ॥ ०९० ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
सेव्यमानोऽप्सरोभिश्च दिव्यगन्धर्वनादितः ॥ ०९१ ॥

ततो मामाह देवेन्द्रः प्रीतस्तेऽहं द्विजोत्तम ।
वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्तते ॥ ०९२ ॥

शक्रस्य तु वचः श्रुत्वा नाहं प्रीतमनाभवम् ।
अब्रुवं च तदा कृष्ण देवराजमिदं वचः ॥ ०९३ ॥

नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात् ।
महादेवादृते सौम्य सत्यमेतद्ब्रवीमि ते ॥ ०९४ ॥

पशुपतिवचनाद्भवामि सद्यः ; कृमिरथ वा तरुरप्यनेकशाखः ।
अपशुपतिवरप्रसादजा मे ; त्रिभुवनराज्यविभूतिरप्यनिष्टा ॥ ०९५ ॥

अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया ।
न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये ॥ ०९६ ॥

यावच्छशाङ्कशकलामलबद्धमौलि ;र्न प्रीयते पशुपतिर्भगवान्ममेशः ।
तावज्जरामरणजन्मशताभिघातै ;र्दुःखानि देहविहितानि समुद्वहामि ॥ ०९७ ॥

दिवसकरशशाङ्कवह्निदीप्तं ; त्रिभुवनसारमपारमाद्यमेकम् ।
अजरममरमप्रसाद्य रुद्रं ; जगति पुमानिह को लभेत शान्तिम् ॥ ०९८ ॥

शक्र उवाच ॥

कः पुनस्तव हेतुर्वै ईशे कारणकारणे ।
येन देवादृतेऽन्यस्मात्प्रसादं नाभिकाङ्क्षसि ॥ ०९९ ॥

उपमन्युरुवाच ॥

हेतुभिर्वा किमन्यैस्ते ईशः कारणकारणम् ।
न शुश्रुम यदन्यस्य लिङ्गमभ्यर्च्यते सुरैः ॥ १०० ॥

कस्यान्यस्य सुरैः सर्वैर्लिङ्गं मुक्त्वा महेश्वरम् ।
अर्च्यतेऽर्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतिः ॥ १०१ ॥

यस्य ब्रह्मा च विष्णुश्च त्वं चापि सह दैवतैः ।
अर्चयध्वं सदा लिङ्गं तस्माच्छ्रेष्ठतमो हि सः ॥ १०२ ॥

तस्माद्वरमहं काङ्क्षे निधनं वापि कौशिक ।
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ॥ १०३ ॥

काममेष वरो मेऽस्तु शापो वापि महेश्वरात् ।
न चान्यां देवतां काङ्क्षे सर्वकामफलान्यपि ॥ १०४ ॥

एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः ।
न प्रसीदति मे रुद्रः किमेतदिति चिन्तयन् ॥ १०५ ॥

अथापश्यं क्षणेनैव तमेवैरावतं पुनः ॥ १०५ ॥

हंसकुन्देन्दुसदृशं मृणालकुमुदप्रभम् ।
वृषरूपधरं साक्षात्क्षीरोदमिव सागरम् ॥ १०६ ॥

कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ।
जाम्बूनदेन दाम्ना च सर्वतः समलङ्कृतम् ॥ १०७ ॥

रक्ताक्षं सुमहानासं सुकर्णं सुकटीतटम् ।
सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् ॥ १०८ ॥

ककुदं तस्य चाभाति स्कन्धमापूर्य विष्ठितम् ।
तुषारगिरिकूटाभं सिताभ्रशिखरोपमम् ॥ १०९ ॥

तमास्थितश्च भगवान्देवदेवः सहोमया ।
अशोभत महादेवः पौर्णमास्यामिवोडुराट् ॥ ११० ॥

तस्य तेजोभवो वह्निः समेघः स्तनयित्नुमान् ।
सहस्रमिव सूर्याणां सर्वमावृत्य तिष्ठति ॥ १११ ॥

ईश्वरः सुमहातेजाः संवर्तक इवानलः ।
युगान्ते सर्वभूतानि दिधक्षुरिव चोद्यतः ॥ ११२ ॥

तेजसा तु तदा व्याप्ते दुर्निरीक्ष्ये समन्ततः ।
पुनरुद्विग्नहृदयः किमेतदिति चिन्तयम् ॥ ११३ ॥

मुहूर्तमिव तत्तेजो व्याप्य सर्वा दिशो दश ।
प्रशान्तं च क्षणेनैव देवदेवस्य मायया ॥ ११४ ॥

अथापश्यं स्थितं स्थाणुं भगवन्तं महेश्वरम् ।
सौरभेयगतं सौम्यं विधूममिव पावकम् ॥ ११५ ॥

सहितं चारुसर्वाङ्ग्या पार्वत्या परमेश्वरम् ॥ ११५ ॥

नीलकण्ठं महात्मानमसक्तं तेजसां निधिम् ।
अष्टादशभुजं स्थाणुं सर्वाभरणभूषितम् ॥ ११६ ॥

शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ॥ ११७ ॥

गायद्भिर्नृत्यमानैश्च उत्पतद्भिरितस्ततः ।
वृतं पारिषदैर्दिव्यैरात्मतुल्यपराक्रमैः ॥ ११८ ॥

बालेन्दुमुकुटं पाण्डुं शरच्चन्द्रमिवोदितम् ।
त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिः सूर्यैरिवोदितैः ॥ ११९ ॥

अशोभत च देवस्य माला गात्रे सितप्रभे ।
जातरूपमयैः पद्मैर्ग्रथिता रत्नभूषिता ॥ १२० ॥

मूर्तिमन्ति तथास्त्राणि सर्वतेजोमयानि च ।
मया दृष्टानि गोविन्द भवस्यामिततेजसः ॥ १२१ ॥

इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः ।
पिनाकमिति विख्यातं स च वै पन्नगो महान् ॥ १२२ ॥

सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः ।
ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः ॥ १२३ ॥

शरश्च सूर्यसङ्काशः कालानलसमद्युतिः ।
यत्तदस्त्रं महाघोरं दिव्यं पाशुपतं महत् ॥ १२४ ॥

अद्वितीयमनिर्देश्यं सर्वभूतभयावहम् ।
सस्फुलिङ्गं महाकायं विसृजन्तमिवानलम् ॥ १२५ ॥

एकपादं महादंष्ट्रं सहस्रशिरसोदरम् ।
सहस्रभुजजिह्वाक्षमुद्गिरन्तमिवानलम् ॥ १२६ ॥

ब्राह्मान्नारायणादैन्द्रादाग्नेयादपि वारुणात् ।
यद्विशिष्टं महाबाहो सर्वशस्त्रविघातनम् ॥ १२७ ॥

येन तत्त्रिपुरं दग्ध्वा क्षणाद्भस्मीकृतं पुरा ।
शरेणैकेन गोविन्द महादेवेन लीलया ॥ १२८ ॥

निर्ददाह जगत्कृत्स्नं त्रैलोक्यं सचराचरम् ।
महेश्वरभुजोत्सृष्टं निमेषार्धान्न संशयः ॥ १२९ ॥

नावध्यो यस्य लोकेऽस्मिन्ब्रह्मविष्णुसुरेष्वपि ।
तदहं दृष्टवांस्तात आश्चर्याद्भुतमुत्तमम् ॥ १३० ॥

गुह्यमस्त्रं परं चापि तत्तुल्याधिकमेव वा ।
यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः ॥ १३१ ॥

दारयेद्यन्महीं कृत्स्नां शोषयेद्वा महोदधिम् ।
संहरेद्वा जगत्कृत्स्नं विसृष्टं शूलपाणिना ॥ १३२ ॥

यौवनाश्वो हतो येन मांधाता सबलः पुरा ।
चक्रवर्ती महातेजास्त्रिलोकविजयी नृपः ॥ १३३ ॥

महाबलो महावीर्यः शक्रतुल्यपराक्रमः ।
करस्थेनैव गोविन्द लवणस्येह रक्षसः ॥ १३४ ॥

तच्छूलमतितीक्ष्णाग्रं सुभीमं लोमहर्षणम् ।
त्रिशिखां भ्रुकुटीं कृत्वा तर्जमानमिव स्थितम् ॥ १३५ ॥

विधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम् ।
सर्पहस्तमनिर्देश्यं पाशहस्तमिवान्तकम् ॥ १३६ ॥

दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसंनिधौ ॥ १३६ ॥

परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा ।
महादेवेन तुष्टेन क्षत्रियाणां क्षयङ्करः ॥ १३७ ॥

कार्तवीर्यो हतो येन चक्रवर्ती महामृधे ॥ १३७ ॥

त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता ।
जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्मणा ॥ १३८ ॥

दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रवेष्टितः ।
अभवच्छूलिनोऽभ्याशे दीप्तवह्निशिखोपमः ॥ १३९ ॥

असंख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः ।
प्राधान्यतो मयैतानि कीर्तितानि तवानघ ॥ १४० ॥

सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः ।
दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ॥ १४१ ॥

वामपार्श्वगतश्चैव तथा नारायणः स्थितः ।
वैनतेयं समास्थाय शङ्खचक्रगदाधरः ॥ १४२ ॥

स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः ।
शक्तिं कण्ठे समादाय द्वितीय इव पावकः ॥ १४३ ॥

पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम् ।
शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शङ्करम् ॥ १४४ ॥

स्वायंभुवाद्या मनवो भृग्वाद्या ऋषयस्तथा ।
शक्राद्या देवताश्चैव सर्व एव समभ्ययुः ॥ १४५ ॥

तेऽभिवाद्य महात्मानं परिवार्य समन्ततः ।
अस्तुवन्विविधैः स्तोत्रैर्महादेवं सुरास्तदा ॥ १४६ ॥

ब्रह्मा भवं तदा स्तुन्वन्रथन्तरमुदीरयन् ।
ज्येष्ठसाम्ना च देवेशं जगौ नारायणस्तदा ॥ १४७ ॥

गृणञ्शक्रः परं ब्रह्म शतरुद्रीयमुत्तमम् ॥ १४७ ॥

ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः ।
अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः ॥ १४८ ॥

तेषां मध्यगतो देवो रराज भगवाञ्शिवः ।
शरद्धनविनिर्मुक्तः परिविष्ट इवांशुमान् ॥ १४९ ॥

ततोऽहमस्तुवं देवं स्तवेनानेन सुव्रतम् ॥ १४९ ॥

नमो देवाधिदेवाय महादेवाय वै नमः ।
शक्राय शक्ररूपाय शक्रवेषधराय च ॥ १५० ॥

नमस्ते वज्रहस्ताय पिङ्गलायारुणाय च ।
पिनाकपाणये नित्यं खङ्गशूलधराय च ॥ १५१ ॥

नमस्ते कृष्णवासाय कृष्णकुञ्चितमूर्धजे ।
कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च ॥ १५२ ॥

शुक्लवर्णाय शुक्लाय शुक्लाम्बरधराय च ।
शुक्लभस्मावलिप्ताय शुक्लकर्मरताय च ॥ १५३ ॥

त्वं ब्रह्मा सर्वदेवानां रुद्राणां नीललोहितः ।
आत्मा च सर्वभूतानां सांख्ये पुरुष उच्यसे ॥ १५४ ॥

ऋषभस्त्वं पवित्राणां योगिनां निष्कलः शिवः ।
आश्रमाणां गृहस्थस्त्वमीश्वराणां महेश्वरः ॥ १५५ ॥

कुबेरः सर्वयक्षाणां क्रतूनां विष्णुरुच्यसे ॥ १५५ ॥

पर्वतानां महामेरुर्नक्षत्राणां च चन्द्रमाः ।
वसिष्ठस्त्वमृषीणां च ग्रहाणां सूर्य उच्यसे ॥ १५६ ॥

आरण्यानां पशूनां च सिंहस्त्वं परमेश्वरः ।
ग्राम्याणां गोवृषश्चासि भगवा.ण्ल्लोकपूजितः ॥ १५७ ॥

आदित्यानां भवान्विष्णुर्वसूनां चैव पावकः ।
पक्षिणां वैनतेयश्च अनन्तो भुजगेषु च ॥ १५८ ॥

सामवेदश्च वेदानां यजुषां शतरुद्रियम् ।
सनत्कुमारो योगीनां सांख्यानां कपिलो ह्यसि ॥ १५९ ॥

शक्रोऽसि मरुतां देव पितृणां धर्मराडसि ।
ब्रह्मलोकश्च लोकानां गतीनां मोक्ष उच्यसे ॥ १६० ॥

क्षीरोदः सागराणां च शैलानां हिमवान्गिरिः ।
वर्णानां ब्राह्मणश्चासि विप्राणां दीक्षितो द्विजः ॥ १६१ ॥

आदिस्त्वमसि लोकानां संहर्ता काल एव च ॥ १६१ ॥

यच्चान्यदपि लोकेषु सत्त्वं तेजोधिकं स्मृतम् ।
तत्सर्वं भगवानेव इति मे निश्चिता मतिः ॥ १६२ ॥

नमस्ते भगवन्देव नमस्ते भक्तवत्सल ।
योगेश्वर नमस्तेऽस्तु नमस्ते विश्वसंभव ॥ १६३ ॥

प्रसीद मम भक्तस्य दीनस्य कृपणस्य च ।
अनैश्वर्येण युक्तस्य गतिर्भव सनातन ॥ १६४ ॥

यं चापराधं कृतवानज्ञानात्परमेश्वर ।
मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि ॥ १६५ ॥

मोहितश्चास्मि देवेश तुभ्यं रूपविपर्ययात् ।

तेन नार्घ्यं मया दत्तं पाद्यं चापि सुरेश्वर ॥ १६६ ॥

एवं स्तुत्वाहमीशानं पाद्यमर्घ्यं च भक्तितः ।
कृताञ्जलिपुटो भूत्वा सर्वं तस्मै न्यवेदयम् ॥ १६७ ॥

ततः शीताम्बुसंयुक्ता दिव्यगन्धसमन्विता ।
पुष्पवृष्टिः शुभा तात पपात मम मूर्धनि ॥ १६८ ॥

दुन्दुभिश्च ततो दिव्यस्ताडितो देवकिङ्करैः ।
ववौ च मारुतः पुण्यः शुचिगन्धः सुखावहः ॥ १६९ ॥

ततः प्रीतो महादेवः सपत्नीको वृषध्वजः ।
अब्रवीत्त्रिदशांस्तत्र हर्षयन्निव मां तदा ॥ १७० ॥

पश्यध्वं त्रिदशाः सर्वे उपमन्योर्महात्मनः ।
मयि भक्तिं परां दिव्यामेकभावादवस्थिताम् ॥ १७१ ॥

एवमुक्तास्ततः कृष्ण सुरास्ते शूलपाणिना ।
ऊचुः प्राञ्जलयः सर्वे नमस्कृत्वा वृषध्वजम् ॥ १७२ ॥

भगवन्देवदेवेश लोकनाथ जगत्पते ।
लभतां सर्वकामेभ्यः फलं त्वत्तो द्विजोत्तमः ॥ १७३ ॥

एवमुक्तस्ततः शर्वः सुरैर्ब्रह्मादिभिस्तथा ।
आह मां भगवानीशः प्रहसन्निव शङ्करः ॥ १७४ ॥

वत्सोपमन्यो प्रीतोऽस्मि पश्य मां मुनिपुङ्गव ।
दृढभक्तोऽसि विप्रर्षे मया जिज्ञासितो ह्यसि ॥ १७५ ॥

अनया चैव भक्त्या ते अत्यर्थं प्रीतिमानहम् ।
तस्मात्सर्वान्ददाम्यद्य कामांस्तव यथेप्शितान् ॥ १७६ ॥

एवमुक्तस्य चैवाथ महादेवेन मे विभो ।
हर्षादश्रूण्यवर्तन्त लोमहर्षश्च जायते ॥ १७७ ॥

अब्रुवं च तदा देवं हर्षगद्गदया गिरा ।
जानुभ्यामवनिं गत्वा प्रणम्य च पुनः पुनः ॥ १७८ ॥

अद्य जातो ह्यहं देव अद्य मे सफलं तपः ।
यन्मे साक्षान्महादेवः प्रसन्नस्तिष्ठतेऽग्रतः ॥ १७९ ॥

यं न पश्यन्ति चाराध्य देवा ह्यमितविक्रमम् ।
तमहं दृष्टवान्देवं कोऽन्यो धन्यतरो मया ॥ १८० ॥

एवं ध्यायन्ति विद्वांसः परं तत्त्वं सनातनम् ।
षड्विंशकमिति ख्यातं यत्परात्परमक्षरम् ॥ १८१ ॥

स एष भगवान्देवः सर्वतत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥ १८२ ॥

योऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥ १८३ ॥

युगान्ते चैव संप्राप्ते रुद्रमङ्गात्सृजत्प्रभुः ॥ १८३ ॥

स रुद्रः संहरन्कृत्स्नं जगत्स्थावरजङ्गमम् ।
कालो भूत्वा महातेजाः संवर्तक इवानलः ॥ १८४ ॥

एष देवो महादेवो जगत्सृष्ट्वा चराचरम् ।
कल्पान्ते चैव सर्वेषां स्मृतिमाक्षिप्य तिष्ठति ॥ १८५ ॥

सर्वगः सर्वभूतात्मा सर्वभूतभवोद्भवः ।

आस्ते सर्वगतो नित्यमदृश्यः सर्वदैवतैः ॥ १८६ ॥

यदि देयो वरो मह्यं यदि तुष्टश्च मे प्रभुः ।
भक्तिर्भवतु मे नित्यं शाश्वती त्वयि शङ्कर ॥ १८७ ॥

अतीतानागतं चैव वर्तमानं च यद्विभो ।
जानीयामिति मे बुद्धिस्त्वत्प्रसादात्सुरोत्तम ॥ १८८ ॥

क्षीरोदनं च भुञ्जीयामक्षयं सह बान्धवैः ।
आश्रमे च सदा मह्यं सांनिध्यं परमस्तु ते ॥ १८९ ॥

एवमुक्तः स मां प्राह भगवा.ण्ल्लोकपूजितः ।
महेश्वरो महातेजाश्चराचरगुरुः प्रभुः ॥ १९० ॥

अजरश्चामरश्चैव भव दुःखविवर्जितः ।
शीलवान्गुणसंपन्नः सर्वज्ञः प्रियदर्शनः ॥ १९१ ॥

अक्षयं यौवनं तेऽस्तु तेजश्चैवानलोपमम् ।
क्षीरोदः सागरश्चैव यत्र यत्रेच्छसे मुने ॥ १९२ ॥

तत्र ते भविता कामं सांनिध्यं पयसो निधेः ।
क्षीरोदनं च भुङ्क्ष्व त्वममृतेन समन्वितम् ॥ १९३ ॥

बन्धुभिः सहितः कल्पं ततो मामुपयास्यसि ।
सांनिध्यमाश्रमे नित्यं करिष्यामि द्विजोत्तम ॥ १९४ ॥

तिष्ठ वत्स यथाकामं नोत्कण्ठां कर्तुमर्हसि ।
स्मृतः स्मृतश्च ते विप्र सदा दास्यामि दर्शनम् ॥ १९५ ॥

एवमुक्त्वा स भगवान्सूर्यकोटिसमप्रभः ।
ममेशानो वरं दत्त्वा तत्रैवान्तरधीयत ॥ १९६ ॥

एवं दृष्टो मया कृष्ण देवदेवः समाधिना ।
तदवाप्तं च मे सर्वं यदुक्तं तेन धीमता ॥ १९७ ॥

प्रत्यक्षं चैव ते कृष्ण पश्य सिद्धान्व्यवस्थितान् ।
ऋषीन्विद्याधरान्यक्षान्गन्धर्वाप्सरसस्तथा ॥ १९८ ॥

पश्य वृक्षान्मनोरम्यान्सदा पुष्पफलान्वितान् ।
सर्वर्तुकुसुमैर्युक्तान्स्निग्धपत्रान्सुशाखिनः ॥ १९९ ॥

सर्वमेतन्महाबाहो दिव्यभावसमन्वितम् ॥ १९९ ॥

---

# अध्याय ०१५

उपमन्युरुवाच ॥

एतान्सहस्रशश्चान्यान्समनुध्यातवान्हरः ।
कस्मात्प्रसादं भगवान्न कुर्यात्तव माधव ॥ ००१ ॥

त्वादृशेन हि देवानां श्लाघनीयः समागमः ।
ब्रह्मण्येनानृशंसेन श्रद्दधानेन चाप्युत ॥ ००२ ॥

जप्यं च ते प्रदास्यामि येन द्रक्ष्यसि शङ्करम् ॥ ००२ ॥

कृष्ण उवाच ॥

अब्रुवं तमहं ब्रह्मंस्त्वत्प्रसादान्महामुने ।

द्रक्ष्ये दितिजसंघानां मर्दनं त्रिदशेश्वरम् ॥ ००३ ॥

दिनेऽष्टमे च विप्रेण दीक्षितोऽहं यथाविधि ।
दण्डी मुण्डी कुशी चीरी घृताक्तो मेखली तथा ॥ ००४ ॥

मासमेकं फलाहारो द्वितीयं सलिलाशनः ।
तृतीयं च चतुर्थं च पञ्चमं चानिलाशनः ॥ ००५ ॥

एकपादेन तिष्ठंश्च ऊर्ध्वबाहुरतन्द्रितः ।
तेजः सूर्यसहस्रस्य अपश्यं दिवि भारत ॥ ००६ ॥

तस्य मध्यगतं चापि तेजसः पाण्डुनन्दन ।
इन्द्रायुधपिनद्धाङ्गं विद्युन्मालागवाक्षकम् ॥ ००७ ॥

नीलशैलचयप्रख्यं बलाकाभूषितं घनम् ॥ ००७ ॥

तमास्थितश्च भगवान्देव्या सह महाद्युतिः ।
तपसा तेजसा कान्त्या दीप्तया सह भार्यया ॥ ००८ ॥

रराज भगवांस्तत्र देव्या सह महेश्वरः ।
सोमेन सहितः सूर्यो यथा मेघस्थितस्तथा ॥ ००९ ॥

संहृष्टरोमा कौन्तेय विस्मयोत्फुल्ललोचनः ।
अपश्यं देवसंघानां गतिमार्तिहरं हरम् ॥ ०१० ॥

किरीटिनं गदिनं शूलपाणिं ; व्याघ्राजिनं जटिलं दण्डपाणिम् ।
पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रं ; शुभाङ्गदं व्यालयज्ञोपवीतम् ॥ ०११ ॥

दिव्यां मालामुरसानेकवर्णां ; समुद्वहन्तं गुल्फदेशावलम्बाम् ।
चन्द्रं यथा परिविष्टं ससंध्यं ; वर्षात्यये तद्वदपश्यमेनम् ॥ ०१२ ॥

प्रमथानां गणैश्चैव समन्तात्परिवारितम् ।
शरदीव सुदुष्प्रेक्ष्यं परिविष्टं दिवाकरम् ॥ ०१३ ॥

एकादश तथा चैनं रुद्राणां वृषवाहनम् ।
अस्तुवन्नियतात्मानः कर्मभिः शुभकर्मिणम् ॥ ०१४ ॥

आदित्या वसवः साध्या विश्वेदेवास्तथाश्विनौ ।
विश्वाभिः स्तुतिभिर्देवं विश्वदेवं समस्तुवन् ॥ ०१५ ॥

शतक्रतुश्च भगवान्विष्णुश्चादितिनन्दनौ ।
ब्रह्मा रथन्तरं साम ईरयन्ति भवान्तिके ॥ ०१६ ॥

योगीश्वराः सुबहवो योगदं पितरं गुरुम् ।
ब्रह्मर्षयश्च ससुतास्तथा देवर्षयश्च वै ॥ ०१७ ॥

पृथिवी चान्तरिक्षं च नक्षत्राणि ग्रहास्तथा ।
मासार्धमासा ऋतवो रात्र्यः संवत्सराः क्षणाः ॥ ०१८ ॥

मुहूर्ताश्च निमेषाश्च तथैव युगपर्ययाः ।
दिव्या राजन्नमस्यन्ति विद्याः सर्वा दिशस्तथा ॥ ०१९ ॥

सनत्कुमारो वेदाश्च इतिहासास्तथैव च ।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥ ०२० ॥

मनवः सप्तसोमश्च अथर्वा सबृहस्पतिः ।
भृगुर्दक्षः कश्यपश्च वसिष्ठः काश्य एव च ॥ ०२१ ॥

छन्दांसि दीक्षा यज्ञाश्च दक्षिणाः पावको हविः ।
यज्ञोपगानि द्रव्याणि मूर्तिमन्ति युधिष्ठिर ॥ ०२२ ॥

प्रजानां पतयः सर्वे सरितः पन्नगा नगाः ।

देवानां मातरः सर्वा देवपत्न्यः सकन्यकाः ॥ ०२३ ॥

सहस्राणि मुनीनां च अयुतान्यर्बुदानि च ।
नमस्यन्ति प्रभुं शान्तं पर्वताः सागरा दिशः ॥ ०२४ ॥

गन्धर्वाप्सरसश्चैव गीतवादित्रकोविदाः ।
दिव्यतानेन गायन्तः स्तुवन्ति भवमद्भुतम् ॥ ०२५ ॥

विद्याधरा दानवाश्च गुह्यका राक्षसास्तथा ॥ ०२५ ॥

सर्वाणि चैव भूतानि स्थावराणि चराणि च ।
नमस्यन्ति महाराज वाङ्मनःकर्मभिर्विभुम् ॥ ०२६ ॥

पुरस्ताद्विष्ठितः शर्वो ममासीत्त्रिदशेश्वरः ॥ ०२६ ॥

पुरस्ताद्विष्ठितं दृष्ट्वा ममेशानं च भारत ।
सप्रजापतिशक्रान्तं जगन्मामभ्युदैक्षत ॥ ०२७ ॥

ईक्षितुं च महादेवं न मे शक्तिरभूत्तदा ।
ततो मामब्रवीद्देवः पश्य कृष्ण वदस्व च ॥ ०२८ ॥

शिरसा वन्दिते देवे देवी प्रीता उमाभवत् ।
ततोऽहमस्तुवं स्थाणुं स्तुतं ब्रह्मादिभिः सुरैः ॥ ०२९ ॥

नमोऽस्तु ते शाश्वत सर्वयोने ; ब्रह्माधिपं त्वामृषयो वदन्ति ।
तपश्च सत्त्वं च रजस्तमश्च ; त्वामेव सत्यं च वदन्ति सन्तः ॥ ०३० ॥

त्वं वै ब्रह्मा च रुद्रश्च वरुणोऽग्निर्मनुर्भवः ।
धाता त्वष्टा विधाता च त्वं प्रभुः सर्वतोमुखः ॥ ०३१ ॥

त्वत्तो जातानि भूतानि स्थावराणि चराणि च ।

त्वमादिः सर्वभूतानां संहारश्च त्वमेव हि ॥ ०३२ ॥

ये चेन्द्रियार्थाश्च मनश्च कृत्स्नं ; ये वायवः सप्त तथैव चाग्निः ।
ये वा दिविस्था देवताश्चापि पुंसां ; तस्मात्परं त्वामृषयो वदन्ति ॥ ०३३ ॥

वेदा यज्ञाश्च सोमश्च दक्षिणा पावको हविः ।
यज्ञोपगं च यत्किञ्चिद्भगवांस्तदसंशयम् ॥ ०३४ ॥

इष्टं दत्तमधीतं च व्रतानि नियमाश्च ये ।
ह्रीः कीर्तिः श्रीर्द्युतिस्तुष्टिः सिद्धिश्चैव त्वदर्पणा ॥ ०३५ ॥

कामः क्रोधो भयं लोभो मदः स्तम्भोऽथ मत्सरः ।
आधयो व्याधयश्चैव भगवंस्तनयास्तव ॥ ०३६ ॥

कृतिर्विकारः प्रलयः प्रधानं प्रभवोऽव्ययः ।
मनसः परमा योनिः स्वभावश्चापि शाश्वतः ॥ ०३७ ॥

अव्यक्तः पावन विभो सहस्रांशो हिरण्मयः ॥ ०३७ ॥

आदिर्गुणानां सर्वेषां भवान्वै जीवनाश्रयः ।
महानात्मा मतिर्ब्रह्मा विश्वः शंभुः स्वयंभुवः ॥ ०३८ ॥

बुद्धिः प्रज्ञोपलब्धिश्च संवित्ख्यातिर्धृतिः स्मृतिः ।
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यसे ॥ ०३९ ॥

त्वां बुद्ध्वा ब्राह्मणो विद्वान्न प्रमोहं निगच्छति ।
हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृषिष्टुतः ॥ ०४० ॥

सर्वतःपाणिपादस्त्वं सर्वतोक्षिशिरोमुखः ।
सर्वतःश्रुतिमा.ण्ल्लोके सर्वमावृत्य तिष्ठसि ॥ ०४१ ॥

फलं त्वमसि तिग्मांशो निमेषादिषु कर्मसु ।
त्वं वै प्रभार्चिः पुरुषः सर्वस्य हृदि संस्थितः ॥ ०४२ ॥

अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ ०४२ ॥

त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नाः संश्रिताश्च ये ।
ध्यानिनो नित्ययोगाश्च सत्यसंधा जितेन्द्रियाः ॥ ०४३ ॥

यस्त्वां ध्रुवं वेदयते गुहाशयं ; प्रभुं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं ; स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ॥ ०४४ ॥

विदित्वा सप्त सूक्ष्माणि षडङ्गं त्वां च मूर्तितः ।
प्रधानविधियोगस्थस्त्वामेव विशते बुधः ॥ ०४५ ॥

एवमुक्ते मया पार्थ भवे चार्तिविनाशने ।
चराचरं जगत्सर्वं सिंहनादमथाकरोत् ॥ ०४६ ॥

सविप्रसंघाश्च सुरासुराश्च ; नागाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे ; महर्षयश्चैव तथा प्रणेमुः ॥ ०४७ ॥

मम मूर्ध्नि च दिव्यानां कुसुमानां सुगन्धिनाम् ।
राशयो निपतन्ति स्म वायुश्च सुसुखो ववौ ॥ ०४८ ॥

निरीक्ष्य भगवान्देवीमुमां मां च जगद्धितः ।
शतक्रतुं चाभिवीक्ष्य स्वयं मामाह शङ्करः ॥ ०४९ ॥

विद्मः कृष्ण परां भक्तिमस्मासु तव शत्रुहन् ।
क्रियतामात्मनः श्रेयः प्रीतिर्हि परमा त्वयि ॥ ०५० ॥

वृणीष्वाष्टौ वरान्कृष्ण दातास्मि तव सत्तम ।
ब्रूहि यादवशार्दूल यानिच्छसि सुदुर्लभान् ॥ ०५१ ॥

# अध्याय ०१६

कृष्ण उवाच ॥

मूर्ध्ना निपत्य नियतस्तेजःसंनिचये ततः ।
परमं हर्षमागम्य भगवन्तमथाब्रुवम् ॥ ००१ ॥

धर्मे दृढत्वं युधि शत्रुघातं ; यशस्तथाग्र्यं परमं बलं च ।
योगप्रियत्वं तव संनिकर्षं ; वृणे सुतानां च शतं शतानि ॥ ००२ ॥

एवमस्त्विति तद्वाक्यं मयोक्तः प्राह शङ्करः ।
ततो मां जगतो माता धरणी सर्वपावनी ।
उवाचोमा प्रणिहिता शर्वाणी तपसां निधिः ॥ ००४ ॥

दत्तो भगवता पुत्रः साम्बो नाम तवानघ ।
मत्तोऽप्यष्टौ वरानिष्टान्गृहाण त्वं ददामि ते ॥ ००५ ॥

प्रणम्य शिरसा सा च मयोक्ता पाण्डुनन्दन ॥ ००५ ॥

द्विजेष्वकोपं पितृतः प्रसादं ; शतं सुतानामुपभोगं परं च ।
कुले प्रीतिं मातृतश्च प्रसादं ; शमप्राप्तिं प्रवृणे चापि दाक्ष्यम् ॥ ००६ ॥

देव्युवाच ॥

एवं भविष्यत्यमरप्रभाव ; नाहं मृषा जातु वदे कदाचित् ।
भार्यासहस्राणि च षोडशैव ; तासु प्रियत्वं च तथाक्षयत्वम् ॥ ००७ ॥

प्रीतिं चाग्र्यां बान्धवानां सकाशा ;द्ददामि ते वपुषः काम्यतां च ।
भोक्ष्यन्ते वै सप्ततिर्वै शतानि ; गृहे तुभ्यमतिथीनां च नित्यम्  ॥ ००८  ॥

वासुदेव उवाच  ॥

एवं दत्त्वा वरान्देवो मम देवी च भारत ।
अन्तर्हितः क्षणे तस्मिन्सगणो भीमपूर्वज  ॥ ००९  ॥

एतदत्यद्भुतं सर्वं ब्राह्मणायातितेजसे ।
उपमन्यवे मया कृत्स्नमाख्यातं कौरवोत्तम  ॥ ०१०  ॥

नमस्कृत्वा तु स प्राह देवदेवाय सुव्रत ।
नास्ति शर्वसमो दाने नास्ति शर्वसमो रणे  ॥ ०११  ॥

नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः  ॥ ०११  ॥

ऋषिरासीत्कृते तात तण्डिरित्येव विश्रुतः ।
दश वर्षसहस्राणि तेन देवः समाधिना  ॥ ०१२  ॥

आराधितोऽभूद्भक्तेन तस्योदर्कं निशामय  ॥ ०१२  ॥

स दृष्टवान्महादेवमस्तौषीच्च स्तवैर्विभुम् ।
पवित्राणां पवित्रस्त्वं गतिर्गतिमतां वर  ॥ ०१३  ॥

अत्युग्रं तेजसां तेजस्तपसां परमं तपः  ॥ ०१३  ॥

विश्वावसुहिरण्याक्षपुरुहूतनमस्कृत ।
भूरिकल्याणद विभो पुरुसत्य नमोऽस्तु ते  ॥ ०१४  ॥

जातीमरणभीरूणां यतीनां यततां विभो ।

निर्वाणद सहस्रांशो नमस्तेऽस्तु सुखाश्रय ॥ ०१५ ॥

ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः ।
न विदुस्त्वां तु तत्त्वेन कुतो वेत्स्यामहे वयम् ॥ ०१६ ॥

त्वत्तः प्रवर्तते कालस्त्वयि कालश्च लीयते ।
कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेव हि ॥ ०१७ ॥

तनवस्ते स्मृतास्तिस्रः पुराणज्ञैः सुरर्षिभिः ।
अधिपौरुषमध्यात्ममधिभूताधिदैवतम् ॥ ०१८ ॥

अधिलोक्याधिविज्ञानमधियज्ञस्त्वमेव हि ॥ ०१८ ॥

त्वां विदित्वात्मदेहस्थं दुर्विदं दैवतैरपि ।
विद्वांसो यान्ति निर्मुक्ताः परं भावमनामयम् ॥ ०१९ ॥

अनिच्छतस्तव विभो जन्ममृत्युरनेकतः ।
द्वारं त्वं स्वर्गमोक्षाणामाक्षेप्ता त्वं ददासि च ॥ ०२० ॥

त्वमेव मोक्षः स्वर्गश्च कामः क्रोधस्त्वमेव हि ।
सत्त्वं रजस्तमश्चैव अधश्चोर्ध्वं त्वमेव हि ॥ ०२१ ॥

ब्रह्मा विष्णुश्च रुद्रश्च स्कन्देन्द्रौ सविता यमः ।
वरुणेन्दू मनुर्धाता विधाता त्वं धनेश्वरः ॥ ०२२ ॥

भूर्वायुर्ज्योतिरापश्च वाग्बुद्धिस्त्वं मतिर्मनः ।
कर्म सत्यानृते चोभे त्वमेवास्ति च नास्ति च ॥ ०२३ ॥

इन्द्रियाणीन्द्रियार्थाश्च तत्परं प्रकृतेर्ध्रुवम् ।
विश्वाविश्वपरो भावश्चिन्त्याचिन्त्यस्त्वमेव हि ॥ ०२४ ॥

यच्चैतत्परमं ब्रह्म यच्च तत्परमं पदम् ।
या गतिः सांख्ययोगानां स भवान्नात्र संशयः ॥ ०२५ ॥

नूनमद्य कृतार्थाः स्म नूनं प्राप्ताः सतां गतिम् ।
यां गतिं प्राप्नुवन्तीह ज्ञाननिर्मलबुद्धयः ॥ ०२६ ॥

अहो मूढाः स्म सुचिरमिमं कालमचेतसः ।
यन्न विद्मः परं देवं शाश्वतं यं विदुर्बुधाः ॥ ०२७ ॥

सोऽयमासादितः साक्षाद्बहुभिर्जन्मभिर्मया ।
भक्तानुग्रहकृद्देवो यं ज्ञात्वामृतमश्नुते ॥ ०२८ ॥

देवासुरमनुष्याणां यच्च गुह्यं सनातनम् ।
गुहायां निहितं ब्रह्म दुर्विज्ञेयं सुरैरपि ॥ ०२९ ॥

स एष भगवान्देवः सर्वकृत्सर्वतोमुखः ।
सर्वात्मा सर्वदर्शी च सर्वगः सर्ववेदिता ॥ ०३० ॥

प्राणकृत्प्राणभृत्प्राणी प्राणदः प्राणिनां गतिः ।
देहकृद्देहभृद्देही देहभुग्देहिनां गतिः ॥ ०३१ ॥

अध्यात्मगतिनिष्ठानां ध्यानिनामात्मवेदिनाम् ।
अपुनर्मारकामानां या गतिः सोऽयमीश्वरः ॥ ०३२ ॥

अयं च सर्वभूतानां शुभाशुभगतिप्रदः ।
अयं च जन्ममरणे विदध्यात्सर्वजन्तुषु ॥ ०३३ ॥

अयं च सिद्धिकामानामृषीणां सिद्धिदः प्रभुः ।
अयं च मोक्षकामानां द्विजानां मोक्षदः प्रभुः ॥ ०३४ ॥

भूराद्यान्सर्वभुवनानुत्पाद्य सदिवौकसः ।

विभर्ति देवस्तनुभिरष्टाभिश्च ददाति च ॥ ०३५ ॥

अतः प्रवर्तते सर्वमस्मिन्सर्वं प्रतिष्ठितम् ।
अस्मिंश्च प्रलयं याति अयमेकः सनातनः ॥ ०३६ ॥

अयं स सत्यकामानां सत्यलोकः परः सताम् ।
अपवर्गश्च मुक्तानां कैवल्यं चात्मवादिनाम् ॥ ०३७ ॥

अयं ब्रह्मादिभिः सिद्धैर्गुहायां गोपितः प्रभुः ।
देवासुरमनुष्याणां न प्रकाशो भवेदिति ॥ ०३८ ॥

तं त्वां देवासुरनरास्तत्त्वेन न विदुर्भवम् ।
मोहिताः खल्वनेनैव हृच्छयेन प्रवेशिताः ॥ ०३९ ॥

ये चैनं संप्रपद्यन्ते भक्तियोगेन भारत ।
तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ॥ ०४० ॥

यं ज्ञात्वा न पुनर्जन्म मरणं चापि विद्यते ।
यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ॥ ०४१ ॥

यं लब्ध्वा परमं लाभं मन्यते नाधिकं पुनः ।
प्राणसूक्ष्मां परां प्राप्तिमागच्छत्यक्षयावहाम् ॥ ०४२ ॥

यं सांख्या गुणतत्त्वज्ञाः सांख्यशास्त्रविशारदाः ।
सूक्ष्मज्ञानरताः पूर्वं ज्ञात्वा मुच्यन्ति बन्धनैः ॥ ०४३ ॥

यं च वेदविदो वेद्यं वेदान्तेषु प्रतिष्ठितम् ।
प्राणायामपरा नित्यं यं विशन्ति जपन्ति च ॥ ०४४ ॥

अयं स देवयानानामादित्यो द्वारमुच्यते ।
अयं च पितृयानानां चन्द्रमा द्वारमुच्यते ॥ ०४५ ॥

एष कालगतिश्चित्रा संवत्सरयुगादिषु ।
भावाभावौ तदात्वे च अयने दक्षिणोत्तरे ॥ ०४६ ॥

एवं प्रजापतिः पूर्वमाराध्य बहुभिः स्तवैः ।
वरयामास पुत्रत्वे नीललोहितसञ्ज्ञितम् ॥ ०४७ ॥

ऋग्भिर्यमनुशंसन्ति तन्त्रे कर्मणि बह्वृचः ।
यजुर्भिर्यं त्रिधा वेद्यं जुह्वत्यध्वर्यवोऽध्वरे ॥ ०४८ ॥

सामभिर्यं च गायन्ति सामगाः शुद्धबुद्धयः ।
यज्ञस्य परमा योनिः पतिश्चायं परः स्मृतः ॥ ०४९ ॥

रात्र्यहःश्रोत्रनयनः पक्षमासशिरोभुजः ।
ऋतुवीर्यस्तपोधैर्यो ह्यब्दगुह्योरुपादवान् ॥ ०५० ॥

मृत्युर्यमो हुताशश्च कालः संहारवेगवान् ।
कालस्य परमा योनिः कालश्चायं सनातनः ॥ ०५१ ॥

चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ।
ध्रुवः सप्तर्षयश्चैव भुवनाः सप्त एव च ॥ ०५२ ॥

प्रधानं महदव्यक्तं विशेषान्तं सवैकृतम् ।
ब्रह्मादि स्तम्बपर्यन्तं भूतादि सदसच्च यत् ॥ ०५३ ॥

अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यत्परम् ।
अस्य देवस्य यद्भागं कृत्स्नं संपरिवर्तते ॥ ०५४ ॥

एतत्परममानन्दं यत्तच्छाश्वतमेव च ।
एषा गतिर्विरक्तानामेष भावः परः सताम् ॥ ०५५ ॥

एतत्पदमनुद्विग्नमेतद्ब्रह्म सनातनम् ।
शास्त्रवेदाङ्गविदुषामेतद्ध्यानं परं पदम् ॥ ०५६ ॥

इयं सा परमा काष्ठा इयं सा परमा कला ।
इयं सा परमा सिद्धिरियं सा परमा गतिः ॥ ०५७ ॥

इयं सा परमा शान्तिरियं सा निर्वृतिः परा ।
यं प्राप्य कृतकृत्याः स्म इत्यमन्यन्त वेधसः ॥ ०५८ ॥

इयं तुष्टिरियं सिद्धिरियं श्रुतिरियं स्मृतिः ।
अध्यात्मगतिनिष्ठानां विदुषां प्राप्तिरव्यया ॥ ०५९ ॥

यजतां यज्ञकामानां यज्ञैर्विपुलदक्षिणैः ।
या गतिर्दैवतैर्दिव्या सा गतिस्त्वं सनातन ॥ ०६० ॥

जप्यहोमव्रतैः कृच्छ्रैर्नियमैर्देहपातनैः ।
तप्यतां या गतिर्देव वैराजे सा गतिर्भवान् ॥ ०६१ ॥

कर्मन्यासकृतानां च विरक्तानां ततस्ततः ।
या गतिर्ब्रह्मभवने सा गतिस्त्वं सनातन ॥ ०६२ ॥

अपुनर्मारकामानां वैराग्ये वर्ततां परे ।
विकृतीनां लयानां च सा गतिस्त्वं सनातन ॥ ०६३ ॥

ज्ञानविज्ञाननिष्ठानां निरुपाख्या निरञ्जना ।
कैवल्या या गतिर्देव परमा सा गतिर्भवान् ॥ ०६४ ॥

वेदशास्त्रपुराणोक्ताः पञ्चैता गतयः स्मृताः ।
त्वत्प्रसादाद्धि लभ्यन्ते न लभ्यन्तेऽन्यथा विभो ॥ ०६५ ॥

इति तण्डिस्तपोयोगात्तुष्टावेशानमव्ययम् ।

जगौ च परमं ब्रह्म यत्पुरा लोककृज्जगौ ॥ ०६६ ॥

ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः ।
न विदुस्त्वामिति ततस्तुष्टः प्रोवाच तं शिवः ॥ ०६७ ॥

अक्षयश्चाव्ययश्चैव भविता दुःखवर्जितः ।
यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ ०६८ ॥

ऋषीणामभिगम्यश्च सूत्रकर्ता सुतस्तव ।
मत्प्रसादाद्द्विजश्रेष्ठ भविष्यति न संशयः ॥ ०६९ ॥

कं वा कामं ददाम्यद्य ब्रूहि यद्वत्स काङ्क्षसे ।
प्राञ्जलिः स उवाचेदं त्वयि भक्तिर्दृढास्तु मे ॥ ०७० ॥

एवं दत्त्वा वरं देवो वन्द्यमानः सुरर्षिभिः ।
स्तूयमानश्च विबुधैस्तत्रैवान्तरधीयत ॥ ०७१ ॥

अन्तर्हिते भगवति सानुगे यादवेश्वर ।
ऋषिराश्रममागम्य ममैतत्प्रोक्तवानिह ॥ ०७२ ॥

यानि च प्रथितान्यादौ तण्डिराख्यातवान्मम ।
नामानि मानवश्रेष्ठ तानि त्वं शृणु सिद्धये ॥ ०७३ ॥

दश नामसहस्राणि वेदेष्वाह पितामहः ।
शर्वस्य शास्त्रेषु तथा दश नामशतानि वै ॥ ०७४ ॥

गुह्यानीमानि नामानि तण्डिर्भगवतोऽच्युत ।
देवप्रसादाद्देवेश पुरा प्राह महात्मने ॥ ०७५ ॥

# शिवसहस्त्रनाम

## अध्याय ०१७

वासुदेव उवाच ॥

ततः स प्रयतो भूत्वा मम तात युधिष्ठिर ।
प्राञ्जलिः प्राह विप्रर्षिर्नामसंहारमादितः ॥ ००१ ॥

उपमन्युरुवाच ॥

ब्रह्मप्रोक्तैरृषिप्रोक्तैर्वेदवेदाङ्गसंभवैः ।
सर्वलोकेषु विख्यातैः स्थाणुं स्तोष्यामि नामभिः ॥ ००२ ॥

महद्भिर्विहितैः सत्यैः सिद्धैः सर्वार्थसाधकैः ।
ऋषिणा तण्डिना भक्त्या कृतैर्देवकृतात्मना ॥ ००३ ॥

यथोक्तैर्लोकविख्यातैर्मुनिभिस्तत्त्वदर्शिभिः ।
प्रवरं प्रथमं स्वर्ग्यं सर्वभूतहितं शुभम् ॥ ००४ ॥

श्रुतैः सर्वत्र जगति ब्रह्मलोकावतारितैः ॥ ००४ ॥

यत्तद्रहस्यं परमं ब्रह्मप्रोक्तं सनातनम् ।
वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ॥ ००५ ॥

परत्वेन भवं देवं भक्तस्त्वं परमेश्वरम् ।
तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनम् ॥ ००६ ॥

न शक्यं विस्तरात्कृत्स्नं वक्तुं शर्वस्य केनचित् ।
युक्तेनापि विभूतीनामपि वर्षशतैरपि ॥ ००७ ॥

यस्यादिर्मध्यमन्तश्च सुरैरपि न गम्यते ।
कस्तस्य शक्नुयाद्वक्तुं गुणान्कात्स्न्येन माधव ॥ ००८ ॥

किं तु देवस्य महतः सङ्क्षिप्तार्थपदाक्षरम् ।
शक्तितश्चरितं वक्ष्ये प्रसादात्तस्य चैव हि ॥ ००९ ॥

अप्राप्येह ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः ।
यदा तेनाभ्यनुज्ञातः स्तुवत्येव सदा भवम् ॥ ०१० ॥

अनादिनिधनस्याहं सर्वयोनेर्महात्मनः ।
नाम्नां कञ्चित्समुद्देशं वक्ष्ये ह्यव्यक्तयोनिनः ॥ ०११ ॥

वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः ।
श्रृणु नामसमुद्देशं यदुक्तं पद्मयोनिना ॥ ०१२ ॥

दश नामसहस्राणि यान्याह प्रपितामहः ।
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ॥ ०१३ ॥

गिरेः सारं यथा हेम पुष्पात्सारं यथा मधु ।
घृतात्सारं यथा मण्डस्तथैतत्सारमुद्धृतम् ॥ ०१४ ॥

सर्वपाप्मापहमिदं चतुर्वेदसमन्वितम् ।
प्रयत्नेनाधिगन्तव्यं धार्यं च प्रयतात्मना ॥ ०१५ ॥

शान्तिकं पौष्टिकं चैव रक्षोघ्नं पावनं महत् ॥ ०१५ ॥

इदं भक्ताय दातव्यं श्रद्दधानास्तिकाय च ।
नाश्रद्दधानरूपाय नास्तिकायाजितात्मने ॥ ०१६ ॥

यश्चाभ्यसूयते देवं भूतात्मानं पिनाकिनम् ।
स कृष्ण नरकं याति सह पूर्वैः सहानुगैः ॥ ०१७ ॥

इदं ध्यानमिदं योगमिदं ध्येयमनुत्तमम् ।
इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमम् ॥ ०१८ ॥

इदं ज्ञात्वान्तकालेऽपि गच्छेद्धि परमां गतिम् ॥ ०१८ ॥

पवित्रं मङ्गलं पुण्यं कल्याणमिदमुत्तमम् ।
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् ॥ ०१९ ॥

इदं ब्रह्मा पुरा कृत्वा सर्वलोकपितामहः ।
सर्वस्तवानां दिव्यानां राजत्वे समकल्पयत् ॥ ०२० ॥

तदाप्रभृति चैवायमीश्वरस्य महात्मनः ।
स्तवराजेति विख्यातो जगत्यमरपूजितः ॥ ०२१ ॥

ब्रह्मलोकादयं चैव स्तवराजोऽवतारितः ॥ ०२१ ॥

यस्मात्तण्डिः पुरा प्राह तेन तण्डिकृतोऽभवत् ।
स्वर्गाच्चैवात्र भूलोकं तण्डिना ह्यवतारितः ॥ ०२२ ॥

सर्वमङ्गलमङ्गल्यं सर्वपापप्रणाशनम् ।
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् ॥ ०२३ ॥

ब्रह्मणामपि यद्ब्रह्म पराणामपि यत्परम् ।
तेजसामपि यत्तेजस्तपसामपि यत्तपः ॥ ०२४ ॥

शान्तीनामपि या शान्तिर्द्युतीनामपि या द्युतिः ।
दान्तानामपि यो दान्तो धीमतामपि या च धीः ॥ ०२५ ॥

देवानामपि यो देवो मुनीनामपि यो मुनिः ।
यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः ॥ ०२६ ॥

रुद्राणामपि यो रुद्रः प्रभुः प्रभवतामपि ।
योगिनामपि यो योगी कारणानां च कारणम्  ॥ ०२७  ॥

यतो लोकाः संभवन्ति न भवन्ति यतः पुनः ।
सर्वभूतात्मभूतस्य हरस्यामिततेजसः  ॥ ०२८  ॥

अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु ।
यच्छ्रुत्वा मनुजश्रेष्ठ सर्वान्कामानवाप्स्यसि  ॥ ०२९  ॥

स्थिरः स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः  ॥ ०३०  ॥

जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः ।
हरिश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः  ॥ ०३१  ॥

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानचारी भगवान्खचरो गोचरोऽर्दनः  ॥ ०३२  ॥

अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेशप्रच्छन्नः सर्वलोकप्रजापतिः  ॥ ०३३  ॥

महारूपो महाकायः सर्वरूपो महायशाः ।
महात्मा सर्वभूतश्च विरूपो वामनो मनुः  ॥ ०३४  ॥

लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः ।
पवित्रश्च महांश्चैव नियमो नियमाश्रयः  ॥ ०३५  ॥

सर्वकर्मा स्वयंभूश्च आदिरादिकरो निधिः ।
सहस्राक्षो विरूपाक्षः सोमो नक्षत्रसाधकः  ॥ ०३६  ॥

चन्द्रसूर्यगतिः केतुर्ग्रहो ग्रहपतिर्वरः ।
अद्रिरद्र्यालयः कर्ता मृगबाणार्पणोऽनघः ॥ ०३७ ॥

महातपा घोरतपा अदीनो दीनसाधकः ।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥ ०३८ ॥

योगी योज्यो महाबीजो महारेता महातपाः ।
सुवर्णरेताः सर्वज्ञः सुबीजो वृषवाहनः ॥ ०३९ ॥

दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपः स्वयंश्रेष्ठो बलवीरो बलो गणः ॥ ०४० ॥

गणकर्ता गणपतिर्दिग्वासाः काम्य एव च ।
पवित्रं परमं मन्त्रः सर्वभावकरो हरः ॥ ०४१ ॥

कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ।
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥ ०४२ ॥

स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः ।
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ ०४३ ॥

दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ।
सृगालरूपः सर्वार्थो मुण्डः कुण्डी कमण्डलुः ॥ ०४४ ॥

अजश्च मृगरूपश्च गन्धधारी कपर्द्यपि ।
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभस्तलः ॥ ०४५ ॥

त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहश्चरोऽथ नक्तं च तिग्ममन्युः सुवर्चसः ॥ ०४६ ॥

गजहा दैत्यहा लोको लोकधाता गुणाकरः ।

सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ॥ ०४७ ॥

कालयोगी महानादः सर्ववासश्चतुष्पथः ।
निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥ ०४८ ॥

बहुभूतो बहुधनः सर्वाधारोऽमितो गतिः ।
नृत्यप्रियो नित्यनर्तो नर्तकः सर्वलासकः ॥ ०४९ ॥

घोरो महातपाः पाशो नित्यो गिरिचरो नभः ।
सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः ॥ ०५० ॥

अमर्षणो मर्षणात्मा यज्ञहा कामनाशनः ।
दक्षयज्ञापहारी च सुसहो मध्यमस्तथा ॥ ०५१ ॥

तेजोपहारी बलहा मुदितोऽर्थो जितो वरः ।
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ॥ ०५२ ॥

न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ॥ ०५३ ॥

विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ ०५४ ॥

उग्रतेजा महातेजा जयो विजयकालवित् ।
ज्योतिषामयनं सिद्धिः संधिर्विग्रह एव च ॥ ०५५ ॥

शिखी दण्डी जटी ज्वाली मूर्तिजो मूर्धगो बली ।
वैणवी पणवी ताली कालः कालकटङ्कटः ॥ ०५६ ॥

नक्षत्रविग्रहविधिर्गुणवृद्धिर्लयोऽगमः ।
प्रजापतिर्दिशाबाहुर्विभागः सर्वतोमुखः ॥ ०५७ ॥

विमोचनः सुरगणो हिरण्यकवचोद्भवः ।
मेढ्रजो बलचारी च महाचारी स्तुतस्तथा ॥ ०५८ ॥

सर्वतूर्यनिनादी च सर्ववाद्यपरिग्रहः ।
व्यालरूपो बिलावासी हेममाली तरङ्गवित् ॥ ०५९ ॥

त्रिदशस्त्रिकालधृक्कर्मसर्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥ ०६० ॥

सांख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विभागश्च अतुल्यो यज्ञभागवित् ॥ ०६१ ॥

सर्वावासः सर्वचारी दुर्वासा वासवोऽमरः ।
हेमो हेमकरो यज्ञः सर्वधारी धरोत्तमः ॥ ०६२ ॥

लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ।
सङ्ग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ॥ ०६३ ॥

मुख्योऽमुख्यश्च देहश्च देहर्द्धिः सर्वकामदः ।
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ॥ ०६४ ॥

आकाशनिधिरूपश्च निपाती उरगः खगः ।
रौद्ररूपोंऽशुरादित्यो वसुरश्मिः सुवर्चसी ॥ ०६५ ॥

वसुवेगो महावेगो मनोवेगो निशाचरः ।
सर्वावासी श्रियावासी उपदेशकरो हरः ॥ ०६६ ॥

मुनिरात्मपतिर्लोके संभोज्यश्च सहस्रदः ।
पक्षी च पक्षिरूपी च अतिदीप्तो विशां पतिः ॥ ०६७ ॥

उन्मादो मदनाकारो अर्थार्थकररोमशः ।
वामदेवश्च वामश्च प्राग्दक्षिण्यश्च वामनः ॥ ०६८ ॥

सिद्धयोगापहारी च सिद्धः सर्वार्थसाधकः ।
भिक्षुश्च भिक्षुरूपश्च विषाणी मृदुरव्ययः ॥ ०६९ ॥

महासेनो विशाखश्च षष्टिभागो गवां पतिः ।
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ॥ ०७० ॥

ऋतुर्ऋतुकरः कालो मधुर्मधुकरोऽचलः ।
वानस्पत्यो वाजसेनो नित्यमाश्रमपूजितः ॥ ०७१ ॥

ब्रह्मचारी लोकचारी सर्वचारी सुचारवित् ।
ईशान ईश्वरः कालो निशाचारी पिनाकधृक् ॥ ०७२ ॥

नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः ।
भगस्याक्षिनिहन्ता च कालो ब्रह्मविदां वरः ॥ ०७३ ॥

चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ।
लिङ्गाध्यक्षः सुराध्यक्षो लोकाध्यक्षो युगावहः ॥ ०७४ ॥

बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ।
इतिहासकरः कल्पो गौतमोऽथ जलेश्वरः ॥ ०७५ ॥

दम्भो ह्यदम्भो वैदम्भो वश्यो वश्यकरः कविः ।
लोककर्ता पशुपतिर्महाकर्ता महौषधिः ॥ ०७६ ॥

अक्षरं परमं ब्रह्म बलवाञ्शक्र एव च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो मनोगतिः ॥ ०७७ ॥

बहुप्रसादः स्वपनो दर्पणोऽथ त्वमित्रजित् ।

वेदकारः सूत्रकारो विद्वान्समरमर्दनः ॥ ०७८ ॥

महामेघनिवासी च महाघोरो वशीकरः ।
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः ॥ ०७९ ॥

वृषणः शङ्करो नित्यो वर्चस्वी धूमकेतनः ।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ॥ ०८० ॥

स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्सङ्गश्च महाङ्गश्च महागर्भः परो युवा ॥ ०८१ ॥

कृष्णवर्णः सुवर्णश्च इन्द्रियः सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः ॥ ०८२ ॥

महामूर्धा महामात्रो महानेत्रो दिगालयः ।
महादन्तो महाकर्णो महामेढ्रो महाहनुः ॥ ०८३ ॥

महानासो महाकम्बुर्महाग्रीवः श्मशानधृक् ।
महावक्षा महोरस्को अन्तरात्मा मृगालयः ॥ ०८४ ॥

लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ ०८५ ॥

महानखो महारोमा महाकेशो महाजटः ।
असपत्नः प्रसादश्च प्रत्ययो गिरिसाधनः ॥ ०८६ ॥

स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥ ०८७ ॥

मण्डली मेरुधामा च देवदानवदर्पहा ।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ॥ ०८८ ॥

यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ।
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः ॥ ०८९ ॥

उपहारप्रियः शर्वः कनकः काञ्चनः स्थिरः ।
नाभिर्नन्दिकरो भाव्यः पुष्करस्थपतिः स्थिरः ॥ ०९० ॥

द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ।
नक्तं कलिश्च कालश्च मकरः कालपूजितः ॥ ०९१ ॥

सगणो गणकारश्च भूतभावनसारथिः ।
भस्मशायी भस्मगोप्ता भस्मभूतस्तरुर्गणः ॥ ०९२ ॥

अगणश्चैव लोपश्च महात्मा सर्वपूजितः ।
शङ्कुस्त्रिशङ्कुः संपन्नः शुचिर्भूतनिषेवितः ॥ ०९३ ॥

आश्रमस्थः कपोतस्थो विश्वकर्मा पतिर्वरः ।
शाखो विशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चयः ॥ ०९४ ॥

कपिलोऽकपिलः शूर आयुश्चैव परोऽपरः ।
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुसारथिः ॥ ०९५ ॥

परश्वधायुधो देव अर्थकारी सुबान्धवः ।
तुम्बवीणी महाकोप ऊर्ध्वरेता जलेशयः ॥ ०९६ ॥

उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ।
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ॥ ०९७ ॥

बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ।
स यज्ञारिः स कामारिर्महादंष्ट्रो महायुधः ॥ ०९८ ॥

बाहुस्त्वनिन्दितः शर्वः शङ्करः शङ्करोऽधनः ।
अमरेशो महादेवो विश्वदेवः सुरारिहा ॥ ०९९ ॥

अहिर्बुध्नो निर्ऋतिश्च चेकितानो हरिस्तथा ।
अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः ॥ १०० ॥

धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥ १०१ ॥

प्रभावः सर्वगो वायुरर्यमा सविता रविः ।
उदग्रश्च विधाता च मान्धाता भूतभावनः ॥ १०२ ॥

रतितीर्थश्च वाग्मी च सर्वकामगुणावहः ।
पद्मगर्भो महागर्भश्चन्द्रवक्त्रो मनोरमः ॥ १०३ ॥

बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ।
कुरुकर्ता कालरूपी कुरुभूतो महेश्वरः ॥ १०४ ॥

सर्वाशयो दर्भशायी सर्वेषां प्राणिनां पतिः ।
देवदेवमुखोऽसक्तः सदसत्सर्वरत्नवित् ॥ १०५ ॥

कैलासशिखरावासी हिमवद्गिरिसंश्रयः ।
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ॥ १०६ ॥

वणिजो वर्धनो वृक्षो नकुलश्चन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥ १०७ ॥

सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ॥ १०८ ॥

प्रभावात्मा जगत्कालस्तालो लोकहितस्तरुः ।

सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ॥ १०९ ॥

भूतालयो भूतपतिरहोरात्रमनिन्दितः ।
वाहिता सर्वभूतानां निलयश्च विभुर्भवः ॥ ११० ॥

अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः ।
धृतिमान्मतिमान्दक्षः सत्कृतश्च युगाधिपः ॥ १११ ॥

गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरः ।
हिरण्यबाहुश्च तथा गुहापालः प्रवेशिनाम् ॥ ११२ ॥

प्रतिष्ठायी महाहर्षो जितकामो जितेन्द्रियः ।
गन्धारश्च सुरालश्च तपःकर्मरतिर्धनुः ॥ ११३ ॥

महागीतो महानृत्तो ह्यप्सरोगणसेवितः ।
महाकेतुर्धनुर्धातुर्नैकसानुचरश्चलः ॥ ११४ ॥

आवेदनीय आवेशः सर्वगन्धसुखावहः ।
तोरणस्तारणो वायुः परिधावति चैकतः ॥ ११५ ॥

संयोगो वर्धनो वृद्धो महावृद्धो गणाधिपः ।
नित्य आत्मसहायश्च देवासुरपतिः पतिः ॥ ११६ ॥

युक्तश्च युक्तबाहुश्च द्विविधश्च सुपर्वणः ।
आषाढश्च सुषाढश्च ध्रुवो हरिहणो हरः ॥ ११७ ॥

वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः ।
शिरोहारी विमर्षश्च सर्वलक्षणभूषितः ॥ ११८ ॥

अक्षश्च रथयोगी च सर्वयोगी महाबलः ।
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ॥ ११९ ॥

निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः ।
रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित् ॥ १२० ॥

मूलो विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ।
आरोहणो निरोहश्च शैलहारी महातपाः ॥ १२१ ॥

सेनाकल्पो महाकल्पो युगायुगकरो हरिः ।
युगरूपो महारूपः पवनो गहनो नगः ॥ १२२ ॥

न्यायनिर्वापणः पादः पण्डितो ह्यचलोपमः ।
बहुमालो महामालः सुमालो बहुलोचनः ॥ १२३ ॥

विस्तारो लवणः कूपः कुसुमः सफलोदयः ।
वृषभो वृषभाङ्काङ्गो मणिबिल्वो जटाधरः ॥ १२४ ॥

इन्दुर्विसर्गः सुमुखः सुरः सर्वायुधः सहः ।
निवेदनः सुधाजातः सुगन्धारो महाधनुः ॥ १२५ ॥

गन्धमाली च भगवानुत्थानः सर्वकर्मणाम् ।
मन्थानो बहुलो बाहुः सकलः सर्वलोचनः ॥ १२६ ॥

तरस्ताली करस्ताली ऊर्ध्वसंहननो वहः ।
छत्रं सुच्छत्रो विख्यातः सर्वलोकाश्रयो महान् ॥ १२७ ॥

मुण्डो विरूपो विकृतो दण्डिमुण्डो विकुर्वणः ।
हर्यक्षः ककुभो वज्री दीप्तजिह्वः सहस्रपात् ॥ १२८ ॥

सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ।
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ॥ १२९ ॥

पवित्रं त्रिमधुर्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ।
ब्रह्मदण्डविनिर्माता शतघ्नी शतपाशधृक् ॥ १३० ॥

पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ।
गभस्तिर्ब्रह्मकृद्ब्रह्मा ब्रह्मविद्ब्राह्मणो गतिः ॥ १३१ ॥

अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयंभुवः ।
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ॥ १३२ ॥

चन्दनी पद्ममालाग्र्यः सुरभ्युत्तरणो नरः ।
कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृक् ॥ १३३ ॥

उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः ।
वरो वराहो वरदो वरेशः सुमहास्वनः ॥ १३४ ॥

महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ।
प्रीतात्मा प्रयतात्मा च संयतात्मा प्रधानधृक् ॥ १३५ ॥

सर्वपार्श्वसुतस्तार्क्ष्यो धर्मसाधारणो वरः ।
चराचरात्मा सूक्ष्मात्मा सुवृषो गोवृषेश्वरः ॥ १३६ ॥

साध्यर्षिर्वसुरादित्यो विवस्वान्सविता मृडः ।
व्यासः सर्वस्य सङ्क्षेपो विस्तरः पर्ययो नयः ॥ १३७ ॥

ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः ।
कला काष्ठा लवो मात्रा मुहूर्तोऽहः क्षपाः क्षणाः ॥ १३८ ॥

विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्त्वनिन्दितः ।
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ॥ १३९ ॥

स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ।

निर्वाणं ह्लादनं चैव ब्रह्मलोकः परा गतिः ॥ १४० ॥

देवासुरविनिर्माता देवासुरपरायणः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ १४१ ॥

देवासुरमहामात्रो देवासुरगणाश्रयः ।
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ॥ १४२ ॥

देवातिदेवो देवर्षिर्देवासुरवरप्रदः ।
देवासुरेश्वरो देवो देवासुरमहेश्वरः ॥ १४३ ॥

सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसंभवः ।
उद्भिदस्त्रिक्रमो वैद्यो विरजो विरजोम्बरः ॥ १४४ ॥

ईड्यो हस्ती सुरव्याघ्रो देवसिंहो नरर्षभः ।
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ १४५ ॥

प्रयुक्तः शोभनो वज्र ईशानः प्रभुरव्ययः ।
गुरुः कान्तो निजः सर्गः पवित्रः सर्ववाहनः ॥ १४६ ॥

शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ।
अभिरामः सुरगणो विरामः सर्वसाधनः ॥ १४७ ॥

ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चसः ।
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ॥ १४८ ॥

सिद्धार्थः सर्वभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः ।
व्रताधिपः परं ब्रह्म मुक्तानां परमा गतिः ॥ १४९ ॥

विमुक्तो मुक्ततेजाश्च श्रीमाञ्श्रीवर्धनो जगत् ।
यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ॥ १५० ॥

यं न ब्रह्मादयो देवा विदुर्यं न महर्षयः ।
तं स्तव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम्  ॥ १५१  ॥

भक्तिमेव पुरस्कृत्य मया यज्ञपतिर्वसुः ।
ततोऽभ्यनुज्ञां प्राप्यैव स्तुतो मतिमतां वरः  ॥ १५२  ॥

शिवमेभिः स्तुवन्देवं नामभिः पुष्टिवर्धनैः ।
नित्ययुक्तः शुचिर्भूत्वा प्राप्नोत्यात्मानमात्मना  ॥ १५३  ॥

एतद्धि परमं ब्रह्म स्वयं गीतं स्वयंभुवा ।
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परम्  ॥ १५४  ॥

स्तूयमानो महादेवः प्रीयते चात्मनामभिः ।
भक्तानुकम्पी भगवानात्मसंस्थान्करोति तान्  ॥ १५५  ॥

तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ।
आस्तिकाः श्रद्दधानाश्च बहुभिर्जन्मभिः स्तवैः  ॥ १५६  ॥

जाग्रतश्च स्वपन्तश्च व्रजन्तः पथि संस्थिताः ।
स्तुवन्ति स्तूयमानाश्च तुष्यन्ति च रमन्ति च  ॥ १५७  ॥

जन्मकोटिसहस्रेषु नानासंसारयोनिषु  ॥ १५७  ॥

जन्तोर्विशुद्धपापस्य भवे भक्तिः प्रजायते ।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः  ॥ १५८  ॥

कारणं भावितं तस्य सर्वमुक्तस्य सर्वतः ।
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते  ॥ १५९  ॥

निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी ।

तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ॥ १६० ॥

यया यान्ति परां सिद्धिं तद्भावगतचेतसः ॥ १६० ॥

ये सर्वभावोपगताः परत्वेनाभवन्नराः ।
प्रपन्नवत्सलो देवः संसारात्तान्समुद्धरेत् ॥ १६१ ॥

एवमन्ये न कुर्वन्ति देवाः संसारमोचनम् ।
मनुष्याणां महादेवादन्यत्रापि तपोबलात् ॥ १६२ ॥

इति तेनेन्द्रकल्पेन भगवान्सदसत्पतिः ।
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुद्धबुद्धिना ॥ १६३ ॥

स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ॥ १६४ ॥

मृत्युः प्रोवाच रुद्राणां रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि ॥ १६५ ॥

तण्डिः प्रोवाच शुक्राय गौतमायाह भार्गवः ।
वैवस्वताय मनवे गौतमः प्राह माधव ॥ १६६ ॥

नारायणाय साध्याय मनुरिष्टाय धीमते ।
यमाय प्राह भगवान्साध्यो नारायणोऽच्युतः ॥ १६७ ॥

नाचिकेताय भगवानाह वैवस्वतो यमः ।
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ॥ १६८ ॥

मार्कण्डेयान्मया प्राप्तं नियमेन जनार्दन ।
तवाप्यहममित्रघ्न स्तवं दद्म्यद्य विश्रुतम् ॥ १६९ ॥

स्वर्ग्यमारोग्यमायुष्यं धन्यं बल्यं तथैव च ॥ १६९ ॥

न तस्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः ।
पिशाचा यातुधानाश्च गुह्यका भुजगा अपि ॥ १७० ॥

यः पठेत शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥ १७१ ॥

---

# शिवस्तुतिमाहात्म्यम्

## अध्याय ०१८

वैशंपायन उवाच ॥

महायोगी ततः प्राह कृष्णद्वैपायनो मुनिः ।
पठस्व पुत्र भद्रं ते प्रीयतां ते महेश्वरः ॥ ००१ ॥

पुरा पुत्र मया मेरौ तप्यता परमं तपः ।
पुत्रहेतोर्महाराज स्तव एषोऽनुकीर्तितः ॥ ००२ ॥

लब्धवानस्मि तान्कामानहं वै पाण्डुनन्दन ।
तथा त्वमपि शर्वाद्धि सर्वान्कामानवाप्स्यसि ॥ ००३ ॥

चतुःशीर्षस्ततः प्राह शक्रस्य दयितः सखा ।
आलम्बायन इत्येव विश्रुतः करुणात्मकः ॥ ००४ ॥

मया गोकर्णमासाद्य तपस्तप्त्वा शतं समाः ।

अयोनिजानां दान्तानां धर्मज्ञानां सुवर्चसाम्  ॥ ००५  ॥

अजराणामदुःखानां शतवर्षसहस्त्रिणाम् ।
लब्धं पुत्रशतं शर्वात्पुरा पाण्डुनृपात्मज  ॥ ००६  ॥

वाल्मीकिश्चापि भगवान्युधिष्ठिरमभाषत ।
विवादे साम्नि मुनिभिर्ब्रह्मघ्नो वै भवानिति  ॥ ००७  ॥

उक्तः क्षणेन चाविष्टस्तेनाधर्मेण भारत  ॥ ००७  ॥

सोऽहमीशानमनघमस्तौषं शरणं गतः ।
मुक्तश्चास्म्यवशः पापात्ततो दुःखविनाशनः  ॥ ००८  ॥

आह मां त्रिपुरघ्नो वै यशस्तेऽग्र्यं भविष्यति  ॥ ००८  ॥

जामदग्न्यश्च कौन्तेयमाह धर्मभृतां वरः ।
ऋषिमध्ये स्थितस्तात तपन्निव विभावसुः  ॥ ००९  ॥

पितृविप्रवधेनाहमार्तो वै पाण्डवाग्रज ।
शुचिर्भूत्वा महादेवं गतवाञ्शरणं नृप  ॥ ०१०  ॥

नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः ।
परशुं च ददौ देवो दिव्यान्यस्त्राणि चैव मे  ॥ ०११  ॥

पापं न भविता तेऽद्य अजेयश्च भविष्यसि ।
न ते प्रभविता मृत्युर्यशस्वी च भविष्यसि  ॥ ०१२  ॥

आह मां भगवानेवं शिखण्डी शिवविग्रहः ।
यदवाप्तं च मे सर्वं प्रसादात्तस्य धीमतः  ॥ ०१३  ॥

असितो देवलश्चैव प्राह पाण्डुसुतं नृपम् ।

शापाच्छक्रस्य कौन्तेय चितो धर्मोऽनशन्मम ॥ ०१४ ॥

तन्मे धर्मं यशश्चाग्र्यमायुश्चैवाददद्भवः ॥ ०१४ ॥

ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा ।
प्राहाजमीढं भगवान्बृहस्पतिसमद्युतिः ॥ ०१५ ॥

वसिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः ।
शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्त्रिके ॥ ०१६ ॥

वर्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया ॥ ०१६ ॥

रथन्तरं द्विजश्रेष्ठ न सम्यगिति वर्तते ।
समीक्षस्व पुनर्बुद्ध्या हर्षं त्यक्त्वा द्विजोत्तम ॥ ०१७ ॥

अयज्ञवाहिनं पापमकार्षीस्त्वं सुदुर्मते ॥ ०१७ ॥

एवमुक्त्वा महाक्रोधात्प्राह रुष्टः पुनर्वचः ।
प्रज्ञया रहितो दुःखी नित्यं भीतो वनेचरः ॥ ०१८ ॥

दश वर्षसहस्राणि दशाष्टौ च शतानि च ॥ ०१८ ॥

नष्टपानीययवसे मृगैरन्यैश्च वर्जिते ।
अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते ॥ ०१९ ॥

भविता त्वं मृगः क्रूरो महादुःखसमन्वितः ॥ ०१९ ॥

तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः ।
ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः ॥ ०२० ॥

अजरश्चामरश्चैव भविता दुःखवर्जितः ।

साम्यं समस्तु ते सौख्यं युवयोर्वर्धतां क्रतुः ॥ ०२१ ॥

अनुग्रहानेवमेष करोति भगवान्विभुः ।
परं धाता विधाता च सुखदुःखे च सर्वदा ॥ ०२२ ॥

अचिन्त्य एष भगवान्कर्मणा मनसा गिरा ।
न मे तात युधिश्रेष्ठ विद्यया पण्डितः समः ॥ ०२३ ॥

जैगीषव्य उवाच ॥

ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा ।
यत्नेनाल्पेन बलिना वाराणस्यां युधिष्ठिर ॥ ०२४ ॥

गार्ग्य उवाच ॥

चतुःषष्ट्यङ्गमददात्कालज्ञानं ममाद्भुतम् ।
सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव ॥ ०२५ ॥

तुल्यं मम सहस्रं तु सुतानां ब्रह्मवादिनाम् ।
आयुश्चैव सपुत्रस्य संवत्सरशतायुतम् ॥ ०२६ ॥

पराशर उवाच ॥

प्रसाद्याहं पुरा शर्वं मनसाचिन्तयं नृप ।
महातपा महातेजा महायोगी महायशाः ॥ ०२७ ॥

वेदव्यासः श्रियावासो ब्रह्मण्यः करुणात्मकः ॥ ०२७ ॥

अपि नामेप्सितः पुत्रो मम स्याद्वै महेश्वरात् ।
इति मत्वा हृदि मतं प्राह मां सुरसत्तमः ॥ ०२८ ॥

मयि संभवतस्तस्य फलात्कृष्णो भविष्यति ।
सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति ॥ ०२९ ॥

वेदानां च स वै व्यस्ता कुरुवंशकरस्तथा ।
इतिहासस्य कर्ता च पुत्रस्ते जगतो हितः ॥ ०३० ॥

भविष्यति महेन्द्रस्य दयितः स महामुनिः ।
अजरश्चामरश्चैव पराशर सुतस्तव ॥ ०३१ ॥

एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
युधिष्ठिर महायोगी वीर्यवानक्षयोऽव्ययः ॥ ०३२ ॥

माण्डव्य उवाच ॥

अचौरश्चौरशङ्कायां शूले भिन्नो ह्यहं यदा ।
तत्रस्थेन स्तुतो देवः प्राह मां वै महेश्वरः ॥ ०३३ ॥

मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्बुदम् ।
रुजा शूलकृता चैव न ते विप्र भविष्यति ॥ ०३४ ॥

आधिभिर्व्याधिभिश्चैव वर्जितस्त्वं भविष्यसि ॥ ०३४ ॥

पादाच्चतुर्थात्संभूत आत्मा यस्मान्मुने तव ।
त्वं भविष्यस्यनुपमो जन्म वै सफलं कुरु ॥ ०३५ ॥

तीर्थाभिषेकं सफलं त्वमविघ्नेन चाप्स्यसि ।
स्वर्गं चैवाक्षयं विप्र विदधामि तवोर्जितम् ॥ ०३६ ॥

एवमुक्त्वा तु भगवान्वरेण्यो वृषवाहनः ।
महेश्वरो महाराज कृत्तिवासा महाद्युतिः ॥ ०३७ ॥

सगणो दैवतश्रेष्ठस्तत्रैवान्तरधीयत ॥ ०३७ ॥

गालव उवाच ॥

विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः ।
अब्रवीन्मां ततो माता दुःखिता रुदती भृशम् ॥ ०३८ ॥

कौशिकेनाभ्यनुज्ञातं पुत्रं वेदविभूषितम् ।
न तात तरुणं दान्तं पिता त्वां पश्यतेऽनघ ॥ ०३९ ॥

श्रुत्वा जनन्या वचनं निराशो गुरुदर्शने ।
नियतात्मा महादेवमपश्यं सोऽब्रवीच्च माम् ॥ ०४० ॥

पिता माता च ते त्वं च पुत्र मृत्युविवर्जिताः ।
भविष्यथ विश क्षिप्रं द्रष्टासि पितरं क्षये ॥ ०४१ ॥

अनुज्ञातो भगवता गृहं गत्वा युधिष्ठिर ।
अपश्यं पितरं तात इष्टिं कृत्वा विनिःसृतम् ॥ ०४२ ॥

उपस्पृश्य गृहीत्वेध्मं कुशांश्च शरणाद्गुरून् ।
तान्विसृज्य च मां प्राह पिता सास्राविलेक्षणः ॥ ०४३ ॥

प्रणमन्तं परिष्वज्य मूर्ध्नि चाघ्राय पाण्डव ।
दिष्ट्या दृष्टोऽसि मे पुत्र कृतविद्य इहागतः ॥ ०४४ ॥

वैशंपायन उवाच ॥

एतान्यत्यद्भुतान्येव कर्माण्यथ महात्मनः ।
प्रोक्तानि मुनिभिः श्रुत्वा विस्मयामास पाण्डवः ॥ ०४५ ॥

ततः कृष्णोऽब्रवीद्वाक्यं पुनर्मतिमतां वरः ।

युधिष्ठिरं धर्मनित्यं पुरुहूतमिवेश्वरः ॥ ०४६ ॥

आदित्यचन्द्रावनिलानलौ च ; द्यौर्भूमिरापो वसवोऽथ विश्वे ।
धातार्यमा शुक्रबृहस्पती च ; रुद्राः ससाध्या वरुणो वित्तगोपः ॥ ०४७ ॥

ब्रह्मा शक्रो मारुतो ब्रह्म सत्यं ; वेदा यज्ञा दक्षिणा वेदवाहाः ।
सोमो यष्टा यच्च हव्यं हविश्च ; रक्षा दीक्षा नियमा ये च केचित् ॥ ०४८ ॥

स्वाहा वषड्ब्राह्मणाः सौरभेया ; धर्मं चक्रं कालचक्रं चरं च ।
यशो दमो बुद्धिमती स्थितिश्च ; शुभाशुभं मुनयश्चैव सप्त ॥ ०४९ ॥

अग्र्या बुद्धिर्मनसा दर्शने च ; स्पर्शे सिद्धिः कर्मणां या च सिद्धिः ।
गणा देवानामूष्मपाः सोमपाश्च ; लेखाः सुयामास्तुषिता ब्रह्मकायाः ॥ ०५० ॥

आभास्वरा गन्धपा दृष्टिपाश्च ; वाचा विरुद्धाश्च मनोविरुद्धाः ।
शुद्धाश्च निर्वाणरताश्च देवाः ; स्पर्शाशना दर्शपा आज्यपाश्च ॥ ०५१ ॥

चिन्तागता ये च देवेषु मुख्या ; ये चाप्यन्ये देवताश्चाजमीढ ।
सुपर्णगन्धर्वपिशाचदानवा ; यक्षास्तथा पन्नगाश्चारणाश्च ॥ ०५२ ॥

सूक्ष्मं स्थूलं मृदु यच्चाप्यसूक्ष्मं ; सुखं दुःखं सुखदुःखान्तरं च ।
सांख्यं योगं यत्पराणां परं च ; शर्वाज्जातं विद्धि यत्कीर्तितं मे ॥ ०५३ ॥

तत्संभूता भूतकृतो वरेण्याः ; सर्वे देवा भुवनस्यास्य गोपाः ।
आविश्येमां धरणीं येऽभ्यरक्ष ;न्पुरातनीं तस्य देवस्य सृष्टिम् ॥ ०५४ ॥

विचिन्वन्तं मनसा तोष्टुवीमि ; किञ्चित्तत्त्वं प्राणहेतोर्नतोऽस्मि ।
ददातु देवः स वरानिहेष्टा ;नभिष्टुतो नः प्रभुरव्ययः सदा ॥ ०५५ ॥

इमं स्तवं संनियम्येन्द्रियाणि ; शुचिर्भूत्वा यः पुरुषः पठेत ।

अभग्नयोगो नियतोऽब्दमेकं ; स प्राप्नुयादश्वमेधे फलं यत्  ॥ ०५६  ॥

वेदान्कृत्स्नान्ब्राह्मणः प्राप्नुयाच्च ; जयेद्राजा पृथिवीं चापि कृत्स्नाम् ।
वैश्यो लाभं प्राप्नुयान्नैपुणं च ; शूद्रो गतिं प्रेत्य तथा सुखं च  ॥ ०५७  ॥

स्तवराजमिमं कृत्वा रुद्राय दधिरे मनः ।
सर्वदोषापहं पुण्यं पवित्रं च यशस्विनम्  ॥ ०५८  ॥

यावन्त्यस्य शरीरेषु रोमकूपाणि भारत ।
तावद्वर्षसहस्राणि स्वर्गे वसति मानवः  ॥ ०५९  ॥

---

# अष्टावक्रदिक्संवादः

## अध्याय ०१९

युधिष्ठिर उवाच  ॥

यदिदं सहधर्मेति प्रोच्यते भरतर्षभ ।
पाणिग्रहणकाले तु स्त्रीणामेतत्कथं स्मृतम्  ॥ ००१  ॥

आर्ष एष भवेद्धर्मः प्राजापत्योऽथ वासुरः ।
यदेतत्सहधर्मेति पूर्वमुक्तं महर्षिभिः  ॥ ००२  ॥

संदेहः सुमहानेष विरुद्ध इति मे मतिः ।
इह यः सहधर्मो वै प्रेत्यायं विहितः क्व नु  ॥ ००३  ॥

स्वर्गे मृतानां भवति सहधर्मः पितामह ।

पूर्वमेकस्तु म्रियते क्व चैकस्तिष्ठते वद  ॥ ००४  ॥

नानाकर्मफलोपेता नानाकर्मनिवासिनः ।
नानानिरयनिष्ठान्ता मानुषा बहवो यदा  ॥ ००५  ॥

अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति ।
यदानृताः स्त्रियस्तात सहधर्मः कुतः स्मृतः  ॥ ००६  ॥

अनृताः स्त्रिय इत्येवं वेदेष्वपि हि पठ्यते ।
धर्मोऽयं पौर्विकी सञ्ज्ञा उपचारः क्रियाविधिः  ॥ ००७  ॥

गह्वरं प्रतिभात्येतन्मम चिन्तयतोऽनिशम् ।
निःसंदेहमिदं सर्वं पितामह यथा श्रुतिः  ॥ ००८  ॥

यदेतद्यादृशं चैतद्यथा चैतत्प्रवर्तितम् ।
निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे  ॥ ००९  ॥

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अष्टावक्रस्य संवादं दिशया सह भारत  ॥ ०१०  ॥

निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः ।
ऋषेरथ वदान्यस्य कन्यां वव्रे महात्मनः  ॥ ०११  ॥

सुप्रभां नाम वै नाम्ना रूपेणाप्रतिमां भुवि ।
गुणप्रबर्हां शीलेन साध्वीं चारित्रशोभनाम्  ॥ ०१२  ॥

सा तस्य दृष्ट्वैव मनो जहार शुभलोचना ।
वनराजी यथा चित्रा वसन्ते कुसुमाचिता  ॥ ०१३  ॥

ऋषिस्तमाह देया मे सुता तुभ्यं शृणुष्व मे ।
गच्छ तावद्दिशं पुण्यामुत्तरां द्रक्ष्यसे ततः ॥ ०१४ ॥

अष्टावक्र उवाच ॥

किं द्रष्टव्यं मया तत्र वक्तुमर्हति मे भवान् ।
तथेदानीं मया कार्यं यथा वक्ष्यति मां भवान् ॥ ०१५ ॥

वदान्य उवाच ॥

धनदं समतिक्रम्य हिमवन्तं तथैव च ।
रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितम् ॥ ०१६ ॥

प्रहृष्टैः पार्षदैर्जुष्टं नृत्यद्भिर्विविधाननैः ।
दिव्याङ्गरागैः पैशाचैर्वन्यैर्नानाविधैस्तथा ॥ ०१७ ॥

पाणितालसतालैश्च शम्यातालैः समैस्तथा ।
संप्रहृष्टैः प्रनृत्यद्भिः शर्वस्तत्र निषेव्यते ॥ ०१८ ॥

इष्टं किल गिरौ स्थानं तद्दिव्यमनुशुश्रुम ।
नित्यं संनिहितो देवस्तथा पारिषदाः शुभाः ॥ ०१९ ॥

तत्र देव्या तपस्तप्तं शङ्करार्थं सुदुश्चरम् ।
अतस्तदिष्टं देवस्य तथोमाया इति श्रुतिः ॥ ०२० ॥

तत्र कूपो महान्पार्श्वे देवस्योत्तरतस्तथा ।
ऋतवः कालरात्रिश्च ये दिव्या ये च मानुषाः ॥ ०२१ ॥

सर्वे देवमुपासन्ते रूपिणः किल तत्र ह ।
तदतिक्रम्य भवनं त्वया यातव्यमेव हि ॥ ०२२ ॥

ततो नीलं वनोद्देशं द्रक्ष्यसे मेघसंनिभम् ।
रमणीयं मनोग्राहि तत्र द्रक्ष्यसि वै स्त्रियम्  ॥ ०२३  ॥

तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठिताम् ।
द्रष्टव्या सा त्वया तत्र संपूज्या चैव यत्नतः  ॥ ०२४  ॥

तां दृष्ट्वा विनिवृत्तस्त्वं ततः पाणिं ग्रहीष्यसि ।
यद्येष समयः सत्यः साध्यतां तत्र गम्यताम्  ॥ ०२५  ॥

---

# अध्याय ०२०

अष्टावक्र उवाच  ॥

तथास्तु साधयिष्यामि तत्र यास्याम्यसंशयम् ।
यत्र त्वं वदसे साधो भवान्भवतु सत्यवाक्  ॥ ००१  ॥

भीष्म उवाच  ॥

ततोऽगच्छत्स भगवानुत्तरामुत्तमां दिशम् ।
हिमवन्तं गिरिश्रेष्ठं सिद्धचारणसेवितम्  ॥ ००२  ॥

स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिम् ।
अभ्यगच्छन्नदीं पुण्यां बाहुदां धर्मदायिनीम्  ॥ ००३  ॥

अशोके विमले तीर्थे स्नात्वा तर्प्य च देवताः ।
तत्र वासाय शयने कौश्ये सुखमुवास ह  ॥ ००४  ॥

ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः ।

स्नात्वा प्रादुश्चकाराग्निं हुत्वा चैव विधानतः ॥ ००५ ॥

रुद्राणीकूपमासाद्य ह्रदे तत्र समाश्वसत् ।
विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ॥ ००६ ॥

सोऽपश्यत्काञ्चनद्वारं दीप्यमानमिव श्रिया ।
मन्दाकिनीं च नलिनीं धनदस्य महात्मनः ॥ ००७ ॥

अथ ते राक्षसाः सर्वे येऽभिरक्षन्ति पद्मिनीम् ।
प्रत्युत्थिता भगवन्तं मणिभद्रपुरोगमाः ॥ ००८ ॥

स तान्प्रत्यर्चयामास राक्षसान्भीमविक्रमान् ।
निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ॥ ००९ ॥

ते राक्षसास्तदा राजन्भगवन्तमथाब्रुवन् ।
असौ वैश्रवणो राजा स्वयमायाति तेऽन्तिकम् ॥ ०१० ॥

विदितो भगवानस्य कार्यमागमने च यत् ।
पश्यैनं त्वं महाभागं ज्वलन्तमिव तेजसा ॥ ०११ ॥

ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम् ।
विधिवत्कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ॥ ०१२ ॥

सुखं प्राप्तो भवान्कच्चित्किं वा मत्तश्चिकीर्षसि ।
ब्रूहि सर्वं करिष्यामि यन्मां त्वं वक्ष्यसि द्विज ॥ ०१३ ॥

भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम ।
सत्कृतः कृतकार्यश्च भवान्यास्यत्यविघ्नतः ॥ ०१४ ॥

प्राविशद्भवनं स्वं वै गृहीत्वा तं द्विजोत्तमम् ।
आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च ॥ ०१५ ॥

अथोपविष्टयोस्तत्र मणिभद्रपुरोगमाः ।
निषेदुस्तत्र कौबेरा यक्षगन्धर्वराक्षसाः ॥ ०१६ ॥

ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत् ।
भवच्छन्दं समाज्ञाय नृत्येरन्नप्सरोगणाः ॥ ०१७ ॥

आतिथ्यं परमं कार्यं शुश्रूषा भवतस्तथा ।
संवर्ततामित्युवाच मुनिर्मधुरया गिरा ॥ ०१८ ॥

अथोर्वरा मिश्रकेशी रम्भा चैवोर्वशी तथा ।
अलम्बुसा घृताची च चित्रा चित्राङ्गदा रुचिः ॥ ०१९ ॥

मनोहरा सुकेशी च सुमुखी हासिनी प्रभा ।
विद्युता प्रशमा दान्ता विद्योता रतिरेव च ॥ ०२० ॥

एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः ।
अवादयंश्च गन्धर्वा वाद्यानि विविधानि च ॥ ०२१ ॥

अथ प्रवृत्ते गान्धर्वे दिव्ये ऋषिरुपावसत् ।
दिव्यं संवत्सरं तत्र रमन्वै सुमहातपाः ॥ ०२२ ॥

ततो वैश्रवणो राजा भगवन्तमुवाच ह ।
साग्रः संवत्सरो यातस्तव विप्रेह पश्यतः ॥ ०२३ ॥

हार्योऽयं विषयो ब्रह्मन्गान्धर्वो नाम नामतः ।
छन्दतो वर्ततां विप्र यथा वदति वा भवान् ॥ ०२४ ॥

अतिथिः पूजनीयस्त्वमिदं च भवतो गृहम् ।
सर्वमाज्ञाप्यतामाशु परवन्तो वयं त्वयि ॥ ०२५ ॥

अथ वैश्रवणं प्रीतो भगवान्प्रत्यभाषत ।
अर्चितोऽस्मि यथान्यायं गमिष्यामि धनेश्वर ॥ ०२६ ॥

प्रीतोऽस्मि सदृशं चैव तव सर्वं धनाधिप ।
तव प्रसादाद्भगवन्महर्षेश्च महात्मनः ॥ ०२७ ॥

नियोगादद्य यास्यामि वृद्धिमानृद्धिमान्भव ॥ ०२७ ॥

अथ निष्क्रम्य भगवान्प्रययावुत्तरामुखः ।
कैलासं मन्दरं हैमं सर्वाननुचचार ह ॥ ०२८ ॥

तानतीत्य महाशैलान्कैरातं स्थानमुत्तमम् ।
प्रदक्षिणं ततश्चक्रे प्रयतः शिरसा नमन् ॥ ०२९ ॥

धरणीमवतीर्याथ पूतात्मासौ तदाभवत् ॥ ०२९ ॥

स तं प्रदक्षिणं कृत्वा त्रिः शैलं चोत्तरामुखः ।
समेन भूमिभागेन ययौ प्रीतिपुरस्कृतः ॥ ०३० ॥

ततोऽपरं वनोद्देशं रमणीयमपश्यत ।
सर्वर्तुभिर्मूलफलैः पक्षिभिश्च समन्वितम् ॥ ०३१ ॥

रमणीयैर्वनोद्देशैस्तत्र तत्र विभूषितम् ॥ ०३१ ॥

तत्राश्रमपदं दिव्यं ददर्श भगवानथ ।
शैलांश्च विविधाकारान्काञ्चनान्रत्नभूषितान् ॥ ०३२ ॥

मणिभूमौ निविष्टाश्च पुष्करिण्यस्तथैव च ॥ ०३२ ॥

अन्यान्यपि सुरम्याणि ददर्श सुबहून्यथ ।
भृशं तस्य मनो रेमे महर्षेर्भावितात्मनः ॥ ०३३ ॥

स तत्र काञ्चनं दिव्यं सर्वरत्नमयं गृहम् ।
ददर्शाद्भुतसङ्काशं धनदस्य गृहाद्वरम् ॥ ०३४ ॥

महान्तो यत्र विविधाः प्रासादाः पर्वतोपमाः ।
विमानानि च रम्याणि रत्नानि विविधानि च ॥ ०३५ ॥

मन्दारपुष्पैः सङ्कीर्णा तथा मन्दाकिनी नदी ।
स्वयंप्रभाश्च मणयो वज्रैर्भूमिश्च भूषिता ॥ ०३६ ॥

नानाविधैश्च भवनैर्विचित्रमणितोरणैः ।
मुक्ताजालपरिक्षिप्तैर्मणिरत्नविभूषितैः ॥ ०३७ ॥

मनोदृष्टिहरै रम्यैः सर्वतः संवृतं शुभैः ॥ ०३७ ॥

ऋषिः समन्ततोऽपश्यत्तत्र तत्र मनोरमम् ।
ततोऽभवत्तस्य चिन्ता क्व मे वासो भवेदिति ॥ ०३८ ॥

अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ।
अतिथिं मामनुप्राप्तमनुजानन्तु येऽत्र वै ॥ ०३९ ॥

अथ कन्यापरिवृता गृहात्तस्माद्विनिःसृताः ।
नानारूपाः सप्त विभो कन्याः सर्वा मनोहराः ॥ ०४० ॥

यां यामपश्यत्कन्यां स सा सा तस्य मनोऽहरत् ।
नाशक्नुवद्धारयितुं मनोऽथास्यावसीदति ॥ ०४१ ॥

ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः ।
अथ तं प्रमदाः प्राहुर्भगवान्प्रविशत्विति ॥ ०४२ ॥

स च तासां सुरूपाणां तस्यैव भवनस्य च ।

कौतूहलसमाविष्टः प्रविवेश गृहं द्विजः ॥ ०४३ ॥

तत्रापश्यज्जरायुक्तामरजोम्बरधारिणीम् ।
वृद्धां पर्यङ्कमासीनां सर्वाभरणभूषिताम् ॥ ०४४ ॥

स्वस्तीति चाथ तेनोक्ता सा स्त्री प्रत्यवदत्तदा ।
प्रत्युत्थाय च तं विप्रमास्यतामित्युवाच ह ॥ ०४५ ॥

अष्टावक्र उवाच ॥

सर्वाः स्वानालयान्यान्तु एका मामुपतिष्ठतु ।
सुप्रज्ञाता सुप्रशान्ता शेषा गच्छन्तु च्छन्दतः ॥ ०४६ ॥

ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा ।
निराक्रामन्गृहात्तस्मात्सा वृद्धाथ व्यतिष्ठत ॥ ०४७ ॥

अथ तां संविशन्प्राह शयने भास्वरे तदा ।
त्वयापि सुप्यतां भद्रे रजनी ह्यतिवर्तते ॥ ०४८ ॥

संलापात्तेन विप्रेण तथा सा तत्र भाषिता ।
द्वितीये शयने दिव्ये संविवेश महाप्रभे ॥ ०४९ ॥

अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा ।
व्यपदिश्य महर्षेर्वै शयनं चाध्यरोहत ॥ ०५० ॥

स्वागतं स्वागतेनास्तु भगवांस्तामभाषत ।
सोपागूहद्भुजाभ्यां तु ऋषिं प्रीत्या नरर्षभ ॥ ०५१ ॥

निर्विकारमृषिं चापि काष्ठकुड्योपमं तदा ।
दुःखिता प्रेक्ष्य सञ्जल्पमकार्षीदृषिणा सह ॥ ०५२ ॥

ब्रह्मन्न कामकारोऽस्ति स्त्रीणां पुरुषतो धृतिः ।
कामेन मोहिता चाहं त्वां भजन्तीं भजस्व माम् ॥ ०५३ ॥

प्रहृष्टो भव विप्रर्षे समागच्छ मया सह ।
उपगूह च मां विप्र कामार्ताहं भृशं त्वयि ॥ ०५४ ॥

एतद्धि तव धर्मात्मंस्तपसः पूज्यते फलम् ।
प्रार्थितं दर्शनादेव भजमानां भजस्व माम् ॥ ०५५ ॥

सद्म चेदं वनं चेदं यच्चान्यदपि पश्यसि ।
प्रभुत्वं तव सर्वत्र मयि चैव न संशयः ॥ ०५६ ॥

सर्वान्कामान्विधास्यामि रमस्व सहितो मया ।
रमणीये वने विप्र सर्वकामफलप्रदे ॥ ०५७ ॥

त्वद्वशाहं भविष्यामि रंस्यसे च मया सह ।
सर्वान्कामानुपाश्नानो ये दिव्या ये च मानुषाः ॥ ०५८ ॥

नातः परं हि नारीणां कार्यं किञ्चन विद्यते ।
यथा पुरुषसंसर्गः परमेतद्धि नः फलम् ॥ ०५९ ॥

आत्मच्छन्देन वर्तन्ते नार्यो मन्मथचोदिताः ।
न च दह्यन्ति गच्छन्त्यः सुतप्तैरपि पांसुभिः ॥ ०६० ॥

अष्टावक्र उवाच ॥

परदारानहं भद्रे न गच्छेयं कथञ्चन ।
दूषितं धर्मशास्त्रेषु परदाराभिमर्शनम् ॥ ०६१ ॥

भद्रे निवेष्टुकामं मां विद्धि सत्येन वै शपे ।
विषयेष्वनभिज्ञोऽहं धर्मार्थं किल संततिः ॥ ०६२ ॥

एवं लोकान्गमिष्यामि पुत्रैरिति न संशयः ।
भद्रे धर्मं विजानीष्व ज्ञात्वा चोपरमस्व ह ॥ ०६३ ॥

स्त्र्युवाच ॥

नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज ।
प्रियाः स्त्रीणां यथा कामो रतिशीला हि योषितः ॥ ०६४ ॥

सहस्रैका यता नारी प्राप्नोतीह कदाचन ।
तथा शतसहस्रेषु यदि काचित्पतिव्रता ॥ ०६५ ॥

नैता जानन्ति पितरं न कुलं न च मातरम् ।
न भ्रातॄन्न च भर्तारं न पुत्रान्न च देवरान् ॥ ०६६ ॥

लीलायन्त्यः कुलं घ्नन्ति कूलानीव सरिद्वराः ।
दोषांश्च मन्दान्मन्दासु प्रजापतिरभाषत ॥ ०६७ ॥

भीष्म उवाच ॥

ततः स ऋषिरेकाग्रस्तां स्त्रियं प्रत्यभाषत ।
आस्यतां रुचिरं छन्दः किं वा कार्यं ब्रवीहि मे ॥ ०६८ ॥

सा स्त्री प्रोवाच भगवन्द्रक्ष्यसे देशकालतः ।
वस तावन्महाप्राज्ञ कृतकृत्यो गमिष्यसि ॥ ०६९ ॥

ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर ।
वत्स्येऽहं यावदुत्साहो भवत्या नात्र संशयः ॥ ०७० ॥

अथर्षिरभिसंप्रेक्ष्य स्त्रियं तां जरयान्विताम् ।
चिन्तां परमिकां भेजे संतप्त इव चाभवत् ॥ ०७१ ॥

यद्यदङ्गं हि सोऽपश्यत्तस्या विप्रर्षभस्तदा ।
नारमत्तत्र तत्रास्य दृष्टी रूपपराजिता ॥ ०७२ ॥

देवतेयं गृहस्यास्य शापान्नूनं विरूपिता ।
अस्याश्च कारणं वेत्तुं न युक्तं सहसा मया ॥ ०७३ ॥

इति चिन्ताविषक्तस्य तमर्थं ज्ञातुमिच्छतः ।
व्यगमत्तदहःशेषं मनसा व्याकुलेन तु ॥ ०७४ ॥

अथ सा स्त्री तदोवाच भगवन्पश्य वै रवेः ।
रूपं संध्याभ्रसंयुक्तं किमुपस्थाप्यतां तव ॥ ०७५ ॥

स उवाच तदा तां स्त्रीं स्नानोदकमिहानय ।
उपासिष्ये ततः संध्यां वाग्यतो नियतेन्द्रियः ॥ ०७६ ॥

---

# अध्याय ०२१

भीष्म उवाच ॥

अथ सा स्त्री तमुक्त्वा तु विप्रमेवं भवत्विति ।
तैलं दिव्यमुपादाय स्नानशाटीमुपानयत् ॥ ००१ ॥

अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना ।
अथास्य तैलेनाङ्गानि सर्वाण्येवाभ्यमृक्षयत् ॥ ००२ ॥

शनैश्चोत्सादितस्तत्र स्नानशालामुपागमत् ।
भद्रासनं ततश्चित्रं ऋषिरन्वाविशन्नवम् ॥ ००३ ॥

अथोपविष्टश्च यदा तस्मिन्भद्रासने तदा ।
स्नापयामास शनकैस्तमृषिं सुखहस्तवत् ॥ ००४ ॥

दिव्यं च विधिवच्चक्रे सोपचारं मुनेस्तदा ॥ ००४ ॥

स तेन सुसुखोष्णेन तस्या हस्तसुखेन च ।
व्यतीतां रजनीं कृत्स्नां नाजानात्स महाव्रतः ॥ ००५ ॥

तत उत्थाय स मुनिस्तदा परमविस्मितः ।
पूर्वस्यां दिशि सूर्यं च सोऽपश्यदुदितं दिवि ॥ ००६ ॥

तस्य बुद्धिरियं किं नु मोहस्तत्त्वमिदं भवेत् ।
अथोपास्य सहस्रांशुं किं करोमीत्युवाच ताम् ॥ ००७ ॥

सा चामृतरसप्रख्यमृषेरन्नमुपाहरत् ।
तस्य स्वादुतयान्नस्य न प्रभूतं चकार सः ॥ ००८ ॥

व्यगमच्चाप्यहःशेषं ततः संध्यागमत्पुनः ॥ ००८ ॥

अथ स्त्री भगवन्तं सा सुप्यतामित्यचोदयत् ।
तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ॥ ००९ ॥

अष्टावक्र उवाच ॥

न भद्रे परदारेषु मनो मे संप्रसज्जति ।
उत्तिष्ठ भद्रे भद्रं ते स्वप वै विरमस्व च ॥ ०१० ॥

भीष्म उवाच ॥

सा तदा तेन विप्रेण तथा धृत्या निवर्तिता ।

स्वतन्त्रास्मीत्युवाचैनं न धर्मच्छलमस्ति ते ॥ ०११ ॥

अष्टावक्र उवाच ॥

नास्ति स्वतन्त्रता स्त्रीणामस्वतन्त्रा हि योषितः ।
प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति ॥ ०१२ ॥

स्त्र्युवाच ॥

बाधते मैथुनं विप्र मम भक्तिं च पश्य वै ।
अधर्मं प्राप्स्यसे विप्र यन्मां त्वं नाभिनन्दसि ॥ ०१३ ॥

अष्टावक्र उवाच ॥

हरन्ति दोषजातानि नरं जातं यथेच्छकम् ।
प्रभवामि सदा धृत्या भद्रे स्वं शयनं व्रज ॥ ०१४ ॥

स्त्र्युवाच ॥

शिरसा प्रणमे विप्र प्रसादं कर्तुमर्हसि ।
भूमौ निपतमानायाः शरणं भव मेऽनघ ॥ ०१५ ॥

यदि वा दोषजातं त्वं परदारेषु पश्यसि ।
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ॥ ०१६ ॥

न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहम् ।
स्वतन्त्रां मां विजानीहि योऽधर्मः सोऽस्तु वै मयि ॥ ०१७ ॥

अष्टावक्र उवाच ॥

स्वतन्त्रा त्वं कथं भद्रे ब्रूहि कारणमत्र वै ।

नास्ति लोके हि काचित्स्त्री या वै स्वातन्त्र्यमर्हति ॥ ०१८ ॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्राश्च स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥ ०१९ ॥

स्त्र्युवाच ॥

कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः ।
कुरु मा विमतिं विप्र श्रद्धां विजहि मा मम ॥ ०२० ॥

अष्टावक्र उवाच ॥

यथा मम तथा तुभ्यं यथा तव तथा मम ।
जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं नु किं भवेत् ॥ ०२१ ॥

आश्चर्यं परमं हीदं किं नु श्रेयो हि मे भवेत् ।
दिव्याभरणवस्त्रा हि कन्येयं मामुपस्थिता ॥ ०२२ ॥

किं त्वस्याः परमं रूपं जीर्णमासीत्कथं पुनः ।
कन्यारूपमिहाद्यैव किमिहात्रोत्तरं भवेत् ॥ ०२३ ॥

यथा परं शक्तिधृतेर्न व्युत्थास्ये कथञ्चन ।
न रोचये हि व्युत्थानं धृत्यैवं साधयाम्यहम् ॥ ०२४ ॥

---

# अध्याय ०२२

युधिष्ठिर उवाच ॥

न बिभेति कथं सा स्त्री शापस्य परमद्युतेः ।
कथं निवृत्तो भगवांस्तद्भवान्प्रब्रवीतु मे ॥ ००१ ॥

भीष्म उवाच ॥

अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथम् ।
न चानृतं ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया ॥ ००२ ॥

स्त्र्युवाच ॥

द्यावापृथिवीमात्रैषा काम्या ब्राह्मणसत्तम ।
शृणुष्वावहितः सर्वं यदिदं सत्यविक्रम ॥ ००३ ॥

उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलं च ते ।
अव्युत्थानेन ते लोका जिताः सत्यपराक्रम ॥ ००४ ॥

जिज्ञासेयं प्रयुक्ता मे स्थिरीकर्तुं तवानघ ।
स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ॥ ००५ ॥

तुष्टः पितामहस्तेऽद्य तथा देवाः सवासवाः ।
स त्वं येन च कार्येण संप्राप्तो भगवानिह ॥ ००६ ॥

प्रेषितस्तेन विप्रेण कन्यापित्रा द्विजर्षभ ।
तवोपदेशं कर्तुं वै तच्च सर्वं कृतं मया ॥ ००७ ॥

क्षेमी गमिष्यसि गृहाञ्श्रमश्च न भविष्यति ।
कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च भविष्यति ॥ ००८ ॥

काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तरम् ।
अनतिक्रमणीयैषा कृत्स्नैर्लोकैस्त्रिभिः सदा ॥ ००९ ॥

गच्छस्व सुकृतं कृत्वा किं वान्यच्छ्रोतुमिच्छसि ।
यावद्ब्रवीमि विप्रर्षे अष्टावक्र यथातथम्  ॥ ०१०  ॥

ऋषिणा प्रसादिता चास्मि तव हेतोर्द्विजर्षभ ।
तस्य संमाननार्थं मे त्वयि वाक्यं प्रभाषितम्  ॥ ०११  ॥

श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलिः स्थितः ।
अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत्  ॥ ०१२  ॥

गृहमागम्य विश्रान्तः स्वजनं प्रतिपूज्य च ।
अभ्यगच्छत तं विप्रं न्यायतः कुरुनन्दन  ॥ ०१३  ॥

पृष्टश्च तेन विप्रेण दृष्टं त्वेतन्निदर्शनम् ।
प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना  ॥ ०१४  ॥

भवताहमनुज्ञातः प्रस्थितो गन्धमादनम् ।
तस्य चोत्तरतो देशे दृष्टं तद्दैवतं महत्  ॥ ०१५  ॥

तया चाहमनुज्ञातो भवांश्चापि प्रकीर्तितः ।
श्रावितश्चापि तद्वाक्यं गृहमभ्यागतः प्रभो  ॥ ०१६  ॥

तमुवाच ततो विप्रः प्रतिगृह्णीष्व मे सुताम् ।
नक्षत्रतिथिसंयोगे पात्रं हि परमं भवान्  ॥ ०१७  ॥

भीष्म उवाच  ॥

अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां प्रभो ।
कन्यां परमधर्मात्मा प्रीतिमांश्चाभवत्तदा  ॥ ०१८  ॥

कन्यां तां प्रतिगृह्यैव भार्यां परमशोभनाम् ।
उवास मुदितस्तत्र आश्रमे स्वे गतज्वरः  ॥ ०१९  ॥

# पात्रपरीक्शा

## अध्याय ०२३

युधिष्ठिर उवाच ॥

किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनम् ।
ब्राह्मणं लिङ्गिनं चैव ब्राह्मणं वाप्यलिङ्गिनम् ॥ ००१ ॥

भीष्म उवाच ॥

स्ववृत्तिमभिपन्नाय लिङ्गिने वेतराय वा ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥ ००२ ॥

युधिष्ठिर उवाच ॥

श्रद्धया परया पूतो यः प्रयच्छेद्द्विजातये ।
हव्यं कव्यं तथा दानं को दोषः स्यात्पितामह ॥ ००३ ॥

भीष्म उवाच ॥

श्रद्धापूतो नरस्तात दुर्दान्तोऽपि न संशयः ।
पूतो भवति सर्वत्र किं पुनस्त्वं महीपते ॥ ००४ ॥

युधिष्ठिर उवाच ॥

न ब्राह्मणं परीक्षेत दैवेषु सततं नरः ।
कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः ॥ ००५ ॥

भीष्म उवाच ॥

न ब्राह्मणः साधयते हव्यं दैवात्प्रसिध्यति ।
देवप्रसादादिज्यन्ते यजमाना न संशयः ॥ ००६ ॥

ब्राह्मणा भरतश्रेष्ठ सततं ब्रह्मवादिनः ।
मार्कण्डेयः पुरा प्राह इह लोकेषु बुद्धिमान् ॥ ००७ ॥

युधिष्ठिर उवाच ॥

अपूर्वोऽप्यथ वा विद्वान्संबन्धी वाथ यो भवेत् ।
तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः ॥ ००८ ॥

भीष्म उवाच ॥

कुलीनः कर्मकृद्वैद्यस्तथा चाप्यानृशंस्यवान् ।
ह्रीमानृजुः सत्यवादी पात्रं पूर्वे च ते त्रयः ॥ ००९ ॥

तत्रेदं शृणु मे पार्थ चतुर्णां तेजसां मतम् ।
पृथिव्याः काश्यपस्याग्नेर्मार्कण्डेयस्य चैव हि ॥ ०१० ॥

पृथिव्युवाच ॥

यथा महार्णवे क्षिप्तः क्षिप्रं लोष्टो विनश्यति ।
तथा दुश्चरितं सर्वं त्रय्यावृत्त्या विनश्यति ॥ ०११ ॥

काश्यप उवाच ॥

सर्वे च वेदाः सह षड्भिरङ्गैः ; सांख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति ; शीलव्यपेतस्य नरस्य राजन् ॥ ०१२ ॥

अग्निरुवाच ॥

अधीयानः पण्डितं मन्यमानो ; यो विद्यया हन्ति यशः परेषाम् ।
ब्रह्मन्स तेनाचरते ब्रह्महत्यां ; लोकास्तस्य ह्यन्तवन्तो भवन्ति ॥ ०१३ ॥

मार्कण्डेय उवाच ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
नाभिजानामि यद्यस्य सत्यस्यार्धमवाप्नुयात् ॥ ०१४ ॥

भीष्म उवाच ॥

इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः ।
पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः ॥ ०१५ ॥

युधिष्ठिर उवाच ॥

यदिदं ब्राह्मणा लोके व्रतिनो भुञ्जते हविः ।
भुक्तं ब्राह्मणकामाय कथं तत्सुकृतं भवेत् ॥ ०१६ ॥

भीष्म उवाच ॥

आदिष्टिनो ये राजेन्द्र ब्राह्मणा वेदपारगाः ।
भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति ते ॥ ०१७ ॥

युधिष्ठिर उवाच ॥

अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।

किं निश्चितं भवेत्तत्र तन्मे ब्रूहि पितामह ॥ ०१८ ॥

भीष्म उवाच ॥

अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ ०१९ ॥

ये तु धर्मं प्रशंसन्तश्चरन्ति पृथिवीमिमाम् ।
अनाचरन्तस्तद्धर्मं सङ्करे निरताः प्रभो ॥ ०२० ॥

तेभ्यो रत्नं हिरण्यं वा गामश्वान्वा ददाति यः ।
दश वर्षाणि विष्ठां स भुङ्क्ते निरयमाश्रितः ॥ ०२१ ॥

मेदानां पुल्कसानां च तथैवान्तावसायिनाम् ।
कृतं कर्माकृतं चापि रागमोहेन जल्पताम् ॥ ०२२ ॥

वैश्वदेवं च ये मूढा विप्राय ब्रह्मचारिणे ।
ददतीह न राजेन्द्र ते लोकान्भुञ्जतेऽशुभान् ॥ ०२३ ॥

युधिष्ठिर उवाच ॥

किं परं ब्रह्मचर्यस्य किं परं धर्मलक्षणम् ।
किं च श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह ॥ ०२४ ॥

भीष्म उवाच ॥

ब्रह्मचर्यं परं तात मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितो धर्मः शमः शौचस्य लक्षणम् ॥ ०२५ ॥

युधिष्ठिर उवाच ॥

कस्मिन्काले चरेद्धर्मं कस्मिन्कालेऽर्थमाचरेत् ।
कस्मिन्काले सुखी च स्यात्तन्मे ब्रूहि पितामह ॥ ०२६ ॥

भीष्म उवाच ॥

काल्यमर्थं निषेवेत ततो धर्ममनन्तरम् ।
पश्चात्कामं निषेवेत न च गच्छेत्प्रसङ्गिताम् ॥ ०२७ ॥

ब्राह्मणांश्चाभिमन्येत गुरूंश्चाप्यभिपूजयेत् ।
सर्वभूतानुलोमश्च मृदुशीलः प्रियंवदः ॥ ०२८ ॥

अधिकारे यदनृतं राजगामि च पैशुनम् ।
गुरोश्चालीककरणं समं तद्ब्रह्महत्यया ॥ ०२९ ॥

प्रहरेन्न नरेन्द्रेषु न गां हन्यात्तथैव च ।
भ्रूणहत्यासमं चैतदुभयं यो निषेवते ॥ ०३० ॥

नाग्निं परित्यजेज्जातु न च वेदान्परित्यजेत् ।
न च ब्राह्मणमाक्रोशेत्समं तद्ब्रह्महत्यया ॥ ०३१ ॥

युधिष्ठिर उवाच ॥

कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम् ।
कीदृशानां च भोक्तव्यं तन्मे ब्रूहि पितामह ॥ ०३२ ॥

भीष्म उवाच ॥

अक्रोधना धर्मपराः सत्यनित्या दमे रताः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥ ०३३ ॥

अमानिनः सर्वसहा दृष्टार्था विजितेन्द्रियाः ।

सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥ ०३४ ॥

अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वकर्मनिरता ये च तेभ्यो दत्तं महाफलम् ॥ ०३५ ॥

साङ्गांश्च चतुरो वेदान्योऽधीयीत द्विजर्षभः ।
षड्भ्यो निवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥ ०३६ ॥

ये त्वेवङ्गुणजातीयास्तेभ्यो दत्तं महाफलम् ।
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ॥ ०३७ ॥

प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत कुलं कृत्स्नमेकोऽपीह द्विजर्षभः ॥ ०३८ ॥

गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् ।
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ॥ ०३९ ॥

तारयेत कुलं कृत्स्नमेकोऽपीह द्विजोत्तमः ।
किमङ्ग पुनरेकं वै तस्मात्पात्रं समाचरेत् ॥ ०४० ॥

निशम्य च गुणोपेतं ब्राह्मणं साधुसंमतम् ।
दूरादानाययेत्कृत्ये सर्वतश्चाभिपूजयेत् ॥ ०४१ ॥

# दैवपित्र्यदानफलम्

## अध्याय ०२४

युधिष्ठिर उवाच ॥

श्राद्धकाले च दैवे च धर्मे चापि पितामह ।
इच्छामीह त्वयाख्यातं विहितं यत्सुरर्षिभिः ॥ ००१ ॥

भीष्म उवाच ॥

दैवं पूर्वाह्णिके कुर्यादपराह्णे तु पैतृकम् ।
मङ्गलाचारसंपन्नः कृतशौचः प्रयत्नवान् ॥ ००२ ॥

मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तितः ।
कालहीनं तु यद्दानं तं भागं रक्षसां विदुः ॥ ००३ ॥

लङ्घितं चावलीढं च कलिपूर्वं च यत्कृतम् ।
रजस्वलाभिर्दृष्टं च तं भागं रक्षसां विदुः ॥ ००४ ॥

अवघुष्टं च यद्भुक्तमव्रतेन च भारत ।
परामृष्टं शुना चैव तं भागं रक्षसां विदुः ॥ ००५ ॥

केशकीटावपतितं क्षुतं श्वभिरवेक्षितम् ।
रुदितं चावधूतं च तं भागं रक्षसां विदुः ॥ ००६ ॥

निरोङ्कारेण यद्भुक्तं सशस्त्रेण च भारत ।
दुरात्मना च यद्भुक्तं तं भागं रक्षसां विदुः ॥ ००७ ॥

परोच्छिष्टं च यद्भुक्तं परिभुक्तं च यद्भवेत् ।

दैवे पित्र्ये च सततं तं भागं रक्षसां विदुः ॥ ००८ ॥

गर्हितं निन्दितं चैव परिविष्टं समन्युना ।
दैवं वाप्यथ वा पैत्र्यं तं भागं रक्षसां विदुः ॥ ००९ ॥

मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविष्यते ।
त्रिभिर्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः ॥ ०१० ॥

आज्याहुतिं विना चैव यत्किञ्चित्परिविष्यते ।
दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ॥ ०११ ॥

ये भागा रक्षसां प्रोक्तास्त उक्ता भरतर्षभ ।
अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ॥ ०१२ ॥

यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च ।
दैवे वाप्यथ वा पित्र्ये राजन्नार्हन्ति केतनम् ॥ ०१३ ॥

श्वित्री कुष्ठी च क्लीबश्च तथा यक्ष्महतश्च यः ।
अपस्मारी च यश्चान्धो राजन्नार्हन्ति सत्कृतिम् ॥ ०१४ ॥

चिकित्सका देवलका वृथानियमधारिणः ।
सोमविक्रयिणश्चैव श्राद्धे नार्हन्ति केतनम् ॥ ०१५ ॥

गायना नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका योधकाश्चैव राजन्नार्हन्ति केतनम् ॥ ०१६ ॥

होतारो वृषलानां च वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनम् ॥ ०१७ ॥

अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत ।
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥ ०१८ ॥

अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः ।
ब्राह्मणः सर्वविद्योऽपि राजन्नार्हति केतनम् ॥ ०१९ ॥

अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये ।
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम् ॥ ०२० ॥

अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत ।
पुत्रिकापूर्वपुत्राश्च श्राद्धे नार्हन्ति केतनम् ॥ ०२१ ॥

ऋणकर्ता च यो राजन्यश्च वार्धुषिको द्विजः ।
प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनम् ॥ ०२२ ॥

स्त्रीपूर्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ ।
अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् ॥ ०२३ ॥

श्राद्धे दैवे च निर्दिष्टा ब्राह्मणा भरतर्षभ ।
दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः ॥ ०२४ ॥

चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः ।
सावित्रीज्ञाः क्रियावन्तस्ते राजन्केतनक्षमाः ॥ ०२५ ॥

क्षात्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम् ।
न त्वेव वणिजं तात श्राद्धेषु परिकल्पयेत् ॥ ०२६ ॥

अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् ।
अस्तेनश्चातिथिज्ञश्च स राजन्केतनक्षमः ॥ ०२७ ॥

सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ ।
भिक्षावृत्तिः क्रियावांश्च स राजन्केतनक्षमः ॥ ०२८ ॥

उदितास्तमितो यश्च तथैवास्तमितोदितः ।
अहिंस्रश्चाल्पदोषश्च स राजन्केतनक्षमः ॥ ०२९ ॥

अकल्कको ह्यतर्कश्च ब्राह्मणो भरतर्षभ ।
ससञ्ज्ञो भैक्ष्यवृत्तिश्च स राजन्केतनक्षमः ॥ ०३० ॥

अव्रती कितवः स्तेनः प्राणिविक्रय्यथो वणिक् ।
पश्चाच्च पीतवान्सोमं स राजन्केतनक्षमः ॥ ०३१ ॥

अर्जयित्वा धनं पूर्वं दारुणैः कृषिकर्मभिः ।
भवेत्सर्वातिथिः पश्चात्स राजन्केतनक्षमः ॥ ०३२ ॥

ब्रह्मविक्रयनिर्दिष्टं स्त्रिया यच्चार्जितं धनम् ।
अदेयं पितृदेवेभ्यो यच्च क्लैब्यादुपार्जितम् ॥ ०३३ ॥

क्रियमाणेऽपवर्गे तु यो द्विजो भरतर्षभ ।
न व्याहरति यद्युक्तं तस्याधर्मो गवानृतम् ॥ ०३४ ॥

श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।
सोमक्षयश्च मांसं च यदारण्यं युधिष्ठिर ॥ ०३५ ॥

श्राद्धापवर्गे विप्रस्य स्वधा वै स्वदिता भवेत् ।
क्षत्रियस्याप्यथो ब्रूयात्प्रीयन्तां पितरस्त्विति ॥ ०३६ ॥

अपवर्गे तु वैश्यस्य श्राद्धकर्मणि भारत ।
अक्षय्यमभिधातव्यं स्वस्ति शूद्रस्य भारत ॥ ०३७ ॥

पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं क्षत्रियस्य विधीयते ॥ ०३८ ॥

वैश्यस्य चैव वक्तव्यं प्रीयन्तां देवता इति ॥ ०३८ ॥

कर्मणामानुपूर्वीं च विधिपूर्वकृतं शृणु ।
जातकर्मादिकान्सर्वांस्त्रिषु वर्णेषु भारत ॥ ०३९ ॥

ब्रह्मक्षत्रे हि मन्त्रोक्ता वैश्यस्य च युधिष्ठिर ॥ ०३९ ॥

विप्रस्य रशना मौञ्जी मौर्वी राजन्यगामिनी ।
बाल्वजीत्येव वैश्यस्य धर्म एष युधिष्ठिर ॥ ०४० ॥

दातुः प्रतिग्रहीतुश्च धर्माधर्माविमौ शृणु ।
ब्राह्मणस्यानृतेऽधर्मः प्रोक्तः पातकसञ्ज्ञितः ॥ ०४१ ॥

चतुर्गुणः क्षत्रियस्य वैश्यस्याष्टगुणः स्मृतः ॥ ०४१ ॥

नान्यत्र ब्राह्मणोऽश्नीयात्पूर्वं विप्रेण केतितः ।
यवीयान्पशुहिंसायां तुल्यधर्मो भवेत्स हि ॥ ०४२ ॥

अथ राजन्यवैश्याभ्यां यद्यश्नीयात्तु केतितः ।
यवीयान्पशुहिंसायां भागार्धं समवाप्नुयात् ॥ ०४३ ॥

दैवं वाप्यथ वा पित्र्यं योऽश्नीयाद्ब्राह्मणादिषु ।
अस्नातो ब्राह्मणो राजंस्तस्याधर्मो गवानृतम् ॥ ०४४ ॥

आशौचो ब्राह्मणो राजन्योऽश्नीयाद्ब्राह्मणादिषु ।
ज्ञानपूर्वमथो लोभात्तस्याधर्मो गवानृतम् ॥ ०४५ ॥

अन्नेनान्नं च यो लिप्सेत्कर्मार्थं चैव भारत ।
आमन्त्रयति राजेन्द्र तस्याधर्मोऽनृतं स्मृतम् ॥ ०४६ ॥

अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्युधिष्ठिर ।
मन्त्रवत्परिविष्यन्ते तेष्वधर्मो गवानृतम् ॥ ०४७ ॥

युधिष्ठिर उवाच ॥

पित्र्यं वाप्यथ वा दैवं दीयते यत्पितामह ।
एतदिच्छाम्यहं श्रोतुं दत्तं येषु महाफलम् ॥ ०४८ ॥

भीष्म उवाच ॥

येषां दाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः ।
उच्छेषपरिशेषं हि तान्भोजय युधिष्ठिर ॥ ०४९ ॥

चारित्रनियता राजन्ये कृशाः कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ ०५० ॥

तद्भक्तास्तद्गृहा राजंस्तद्धनास्तदपाश्रयाः ।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ॥ ०५१ ॥

तस्करेभ्यः परेभ्यो वा ये भयार्ता युधिष्ठिर ।
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ॥ ०५२ ॥

अकल्ककस्य विप्रस्य भैक्षोत्करकृतात्मनः ।
बटवो यस्य भिक्षन्ति तेभ्यो दत्तं महाफलम् ॥ ०५३ ॥

हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे ।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ॥ ०५४ ॥

व्रतिनो नियमस्थाश्च ये विप्राः श्रुतसंमताः ।
तत्समाप्त्यर्थमिच्छन्ति तेषु दत्तं महाफलम् ॥ ०५५ ॥

अव्युत्क्रान्ताश्च धर्मेषु पाषण्डसमयेषु च ।
कृशप्राणाः कृशधनास्तेषु दत्तं महाफलम् ॥ ०५६ ॥

कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः ।
स्पृहयन्ति च भुक्तान्नं तेषु दत्तं महाफलम् ॥ ०५७ ॥

तपस्विनस्तपोनिष्ठास्तेषां भैक्षचराश्च ये ।
अर्थिनः किञ्चिदिच्छन्ति तेषु दत्तं महाफलम् ॥ ०५८ ॥

महाफलविधिर्दाने श्रुतस्ते भरतर्षभ ।
निरयं येन गच्छन्ति स्वर्गं चैव हि तच्छृणु ॥ ०५९ ॥

गुर्वर्थं वाभयार्थं वा वर्जयित्वा युधिष्ठिर ।
येऽनृतं कथयन्ति स्म ते वै निरयगामिनः ॥ ०६० ॥

परदाराभिहर्तारः परदाराभिमर्शिनः ।
परदारप्रयोक्तारस्ते वै निरयगामिनः ॥ ०६१ ॥

ये परस्वापहर्तारः परस्वानां च नाशकाः ।
सूचकाश्च परेषां ये ते वै निरयगामिनः ॥ ०६२ ॥

प्रपाणां च सभानां च सङ्क्रमाणां च भारत ।
अगाराणां च भेत्तारो नरा निरयगामिनः ॥ ०६३ ॥

अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम् ।
वञ्चयन्ति नरा ये च ते वै निरयगामिनः ॥ ०६४ ॥

वृत्तिच्छेदं गृहच्छेदं दारच्छेदं च भारत ।
मित्रच्छेदं तथाशायास्ते वै निरयगामिनः ॥ ०६५ ॥

सूचकाः संधिभेत्तारः परवृत्त्युपजीवकाः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥ ०६६ ॥

पाषण्डा दूषकाश्चैव समयानां च दूषकाः ।
ये प्रत्यवसिताश्चैव ते वै निरयगामिनः ॥ ०६७ ॥

कृताशं कृतनिर्वेशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ॥ ०६८ ॥

पर्यश्नन्ति च ये दारानग्निभृत्यातिथींस्तथा ।
उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ॥ ०६९ ॥

वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥ ०७० ॥

चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः ।
विकर्मभिश्च जीवन्ति ते वै निरयगामिनः ॥ ०७१ ॥

केशविक्रयिका राजन्विषविक्रयिकाश्च ये ।
क्षीरविक्रयिकाश्चैव ते वै निरयगामिनः ॥ ०७२ ॥

ब्राह्मणानां गवां चैव कन्यानां च युधिष्ठिर ।
येऽन्तरं यान्ति कार्येषु ते वै निरयगामिनः ॥ ०७३ ॥

शस्त्रविक्रयकाश्चैव कर्तारश्च युधिष्ठिर ।
शल्यानां धनुषां चैव ते वै निरयगामिनः ॥ ०७४ ॥

शल्यैर्वा शङ्कुभिर्वापि श्वभ्रैर्वा भरतर्षभ ।
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥ ०७५ ॥

उपाध्यायांश्च भृत्यांश्च भक्तांश्च भरतर्षभ ।
ये त्यजन्त्यसमर्थांस्तांस्ते वै निरयगामिनः ॥ ०७६ ॥

अप्राप्तदमकाश्चैव नासानां वेधकास्तथा ।

बन्धकाश्च पशूनां ये ते वै निरयगामिनः ॥ ०७७ ॥

अगोप्तारश्छलद्रव्या बलिषड्भागतत्पराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥ ०७८ ॥

क्षान्तान्दान्तांस्तथा प्राज्ञान्दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥ ०७९ ॥

बालानामथ वृद्धानां दासानां चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥ ०८० ॥

एते पूर्वर्षिभिर्दृष्टाः प्रोक्ता निरयगामिनः ।
भागिनः स्वर्गलोकस्य वक्ष्यामि भरतर्षभ ॥ ०८१ ॥

सर्वेष्वेव तु कार्येषु दैवपूर्वेषु भारत ।
हन्ति पुत्रान्पशून्कृत्स्नान्ब्राह्मणातिक्रमः कृतः ॥ ०८२ ॥

दानेन तपसा चैव सत्येन च युधिष्ठिर ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ ०८३ ॥

शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत ।
ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ॥ ०८४ ॥

भयात्पापात्तथाबाधाद्दारिद्र्याद्व्याधिधर्षणात् ।
यत्कृते प्रतिमुच्यन्ते ते नराः स्वर्गगामिनः ॥ ०८५ ॥

क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ।
मङ्गलाचारयुक्ताश्च ते नराः स्वर्गगामिनः ॥ ०८६ ॥

निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च ।
निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ॥ ०८७ ॥

आश्रमाणां च कर्तारः कुलानां चैव भारत ।
देशानां नगराणां च ते नराः स्वर्गगामिनः ॥ ०८८ ॥

वस्त्राभरणदातारो भक्षपानान्नदास्तथा ।
कुटुम्बानां च दातारस्ते नराः स्वर्गगामिनः ॥ ०८९ ॥

सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ०९० ॥

मातरं पितरं चैव शुश्रूषन्ति जितेन्द्रियाः ।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः ॥ ०९१ ॥

आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥ ०९२ ॥

अपराद्धेषु सस्नेहा मृदवो मित्रवत्सलाः ।
आराधनसुखाश्चापि ते नराः स्वर्गगामिनः ॥ ०९३ ॥

सहस्रपरिवेष्टारस्तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां पुरुषाः स्वर्गगामिनः ॥ ०९४ ॥

सुवर्णस्य च दातारो गवां च भरतर्षभ ।
यानानां वाहनानां च ते नराः स्वर्गगामिनः ॥ ०९५ ॥

वैवाहिकानां कन्यानां प्रेष्याणां च युधिष्ठिर ।
दातारो वाससां चैव ते नराः स्वर्गगामिनः ॥ ०९६ ॥

विहारावसथोद्यानकूपारामसभाप्रदाः ।
वप्राणां चैव कर्तारस्ते नराः स्वर्गगामिनः ॥ ०९७ ॥

निवेशनानां क्षेत्राणां वसतीनां च भारत ।
दातारः प्रार्थितानां च ते नराः स्वर्गगामिनः ॥ ०९८ ॥

रसानामथ बीजानां धान्यानां च युधिष्ठिर ।
स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥ ०९९ ॥

यस्मिन्कस्मिन्कुले जाता बहुपुत्राः शतायुषः ।
सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः ॥ १०० ॥

एतदुक्तममुत्रार्थं दैवं पित्र्यं च भारत ।
धर्माधर्मौ च दानस्य यथा पूर्वर्षिभिः कृतौ ॥ १०१ ॥

---

# ब्रह्मघातिस्वरूपम्

## अध्याय ०२५

युधिष्ठिर उवाच ॥

इदं मे तत्त्वतो राजन्वक्तुमर्हसि भारत ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ ००१ ॥

भीष्म उवाच ॥

व्यासमामन्त्र्य राजेन्द्र पुरा यत्पृष्टवानहम् ।
तत्तेऽहं संप्रवक्ष्यामि तदिहैकमनाः शृणु ॥ ००२ ॥

चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने ।

अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ ००३ ॥

इति पृष्टो महाराज पराशरशरीरजः ।
अब्रवीन्निपुणो धर्मे निःसंशयमनुत्तमम् ॥ ००४ ॥

ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात्तं विद्याद्ब्रह्मघातिनम् ॥ ००५ ॥

मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम् ॥ ००६ ॥

गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप ।
उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम् ॥ ००७ ॥

यः प्रवृत्तां श्रुतिं सम्यक्शास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥ ००८ ॥

आत्मजां रूपसंपन्नां महतीं सदृशे वरे ।
न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातिनम् ॥ ००९ ॥

अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु ।
दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम् ॥ ०१० ॥

चक्षुषा विप्रहीनस्य पङ्गुलस्य जडस्य वा ।
हरेत यो वै सर्वस्वं तं विद्याद्ब्रह्मघातिनम् ॥ ०११ ॥

आश्रमे वा वने वा यो ग्रामे वा यदि वा पुरे ।
अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातिनम् ॥ ०१२ ॥

# तीर्थप्रशंसा

## अध्याय ०२६

युधिष्ठिर उवाच ॥

तीर्थानां दर्शनं श्रेयः स्नानं च भरतर्षभ ।
श्रवणं च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः ॥ ००१ ॥

पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ ।
वक्तुमर्हसि मे तानि श्रोतास्मि नियतः प्रभो ॥ ००२ ॥

भीष्म उवाच ॥

इममङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते ।
श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्ममुत्तमम् ॥ ००३ ॥

तपोवनगतं विप्रमभिगम्य महामुनिम् ।
पप्रच्छाङ्गिरसं वीर गौतमः संशितव्रतः ॥ ००४ ॥

अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तत्सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ॥ ००५ ॥

उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने ।
प्रेत्यभावे महाप्राज्ञ तद्यथास्ति तथा वद ॥ ००६ ॥

अङ्गिरा उवाच ॥

सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालिनीम् ।
विगाह्य वै निराहारो निर्ममो मुनिवद्भवेत् ॥ ००७ ॥

काश्मीरमण्डले नद्यो याः पतन्ति महानदम् ।
ता नदीः सिन्धुमासाद्य शीलवान्स्वर्गमाप्नुयात्  ॥ ००८  ॥

पुष्करं च प्रभासं च नैमिषं सागरोदकम् ।
देविकामिन्द्रमार्गं च स्वर्णबिन्दुं विगाह्य च  ॥ ००९  ॥

विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः  ॥ ००९  ॥

हिरण्यबिन्दुं विक्षोभ्य प्रयतश्चाभिवाद्य तम् ।
कुशेशयं च देवत्वं पूयते तस्य किल्बिषम्  ॥ ०१०  ॥

इन्द्रतोयां समासाद्य गन्धमादनसंनिधौ ।
करतोयां कुरङ्गेषु त्रिरात्रोपोषितो नरः  ॥ ०११  ॥

अश्वमेधमवाप्नोति विगाह्य नियतः शुचिः  ॥ ०११  ॥

गङ्गाद्वारे कुशावर्ते बिल्वके नेमिपर्वते ।
तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत्  ॥ ०१२  ॥

अपां ह्रद उपस्पृश्य वाजपेयफलं लभेत् ।
ब्रह्मचारी जितक्रोधः सत्यसंधस्त्वहिंसकः  ॥ ०१३  ॥

यत्र भागीरथी गङ्गा भजते दिशमुत्तराम् ।
महेश्वरस्य निष्ठाने यो नरस्त्वभिषिच्यते  ॥ ०१४  ॥

एकमासं निराहारः स्वयं पश्यति देवताः  ॥ ०१४  ॥

सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् ।
सुधां वै लभते भोक्तुं यो नरो जायते पुनः  ॥ ०१५  ॥

महाश्रम उपस्पृश्य योऽग्निहोत्रपरः शुचिः ।

एकमासं निराहारः सिद्धिं मासेन स व्रजेत् ॥ ०१६ ॥

महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः ।
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया ॥ ०१७ ॥

कन्याकूप उपस्पृश्य बलाकायां कृतोदकः ।
देवेषु कीर्तिं लभते यशसा च विराजते ॥ ०१८ ॥

देशकाल उपस्पृश्य तथा सुन्दरिकाह्रदे ।
अश्विभ्यां रूपवर्चस्यं प्रेत्य वै लभते नरः ॥ ०१९ ॥

महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ।
पक्षमेकं निराहारः स्वर्गमाप्नोति निर्मलः ॥ ०२० ॥

वैमानिक उपस्पृश्य किङ्किणीकाश्रमे तथा ।
निवासेऽप्सरसां दिव्ये कामचारी महीयते ॥ ०२१ ॥

कालिकाश्रममासाद्य विपाशायां कृतोदकः ।
ब्रह्मचारी जितक्रोधस्त्रिरात्रान्मुच्यते भवात् ॥ ०२२ ॥

आश्रमे कृत्तिकानां तु स्नात्वा यस्तर्पयेत्पितॄन् ।
तोषयित्वा महादेवं निर्मलः स्वर्गमाप्नुयात् ॥ ०२३ ॥

महापुर उपस्पृश्य त्रिरात्रोपोषितो नरः ।
त्रसानां स्थावराणां च द्विपदानां भयं त्यजेत् ॥ ०२४ ॥

देवदारुवने स्नात्वा धूतपाप्मा कृतोदकः ।
देवलोकमवाप्नोति सप्तरात्रोषितः शुचिः ॥ ०२५ ॥

कौशन्ते च कुशस्तम्बे द्रोणशर्मपदे तथा ।
आपःप्रपतने स्नातः सेव्यते सोऽप्सरोगणैः ॥ ०२६ ॥

चित्रकूटे जनस्थाने तथा मन्दाकिनीजले ।
विगाह्य वै निराहारो राजलक्ष्मीं निगच्छति ॥ ०२७ ॥

श्यामायास्त्वाश्रमं गत्वा उष्य चैवाभिषिच्य च ।
त्रींस्त्रिरात्रान्स संधाय गन्धर्वनगरे वसेत् ॥ ०२८ ॥

रमण्यां च उपस्पृश्य तथा वै गन्धतारिके ।
एकमासं निराहारस्त्वन्तर्धानफलं लभेत् ॥ ०२९ ॥

कौशिकीद्वारमासाद्य वायुभक्षस्त्वलोलुपः ।
एकविंशतिरात्रेण स्वर्गमारोहते नरः ॥ ०३० ॥

मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति ।
विगाहति ह्यनालम्बमन्धकं वै सनातनम् ॥ ०३१ ॥

नैमिषे स्वर्गतीर्थे च उपस्पृश्य जितेन्द्रियः ।
फलं पुरुषमेधस्य लभेन्मासं कृतोदकः ॥ ०३२ ॥

गङ्गाह्रद उपस्पृश्य तथा चैवोत्पलावने ।
अश्वमेधमवाप्नोति तत्र मासं कृतोदकः ॥ ०३३ ॥

गङ्गायमुनयोस्तीर्थे तथा कालञ्जरे गिरौ ।
षष्टिह्रद उपस्पृश्य दानं नान्यद्विशिष्यते ॥ ०३४ ॥

दश तीर्थसहस्राणि तिस्रः कोट्यस्तथापराः ।
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ ॥ ०३५ ॥

माघमासं प्रयागे तु नियतः संशितव्रतः ।
स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ॥ ०३६ ॥

मरुद्गण उपस्पृश्य पितॄणामाश्रमे शुचिः ।
वैवस्वतस्य तीर्थे च तीर्थभूतो भवेन्नरः ॥ ०३७ ॥

तथा ब्रह्मशिरो गत्वा भागीरथ्यां कृतोदकः ।
एकमासं निराहारः सोमलोकमवाप्नुयात् ॥ ०३८ ॥

कपोतके नरः स्नात्वा अष्टावक्रे कृतोदकः ।
द्वादशाहं निराहारो नरमेधफलं लभेत् ॥ ०३९ ॥

मुञ्जपृष्ठं गयां चैव निर्ऋतिं देवपर्वतम् ।
तृतीयां क्रौञ्चपादीं च ब्रह्महत्या विशुध्यति ॥ ०४० ॥

कलश्यां वाप्युपस्पृश्य वेद्यां च बहुशोजलाम् ।
अग्नेः पुरे नरः स्नात्वा विशालायां कृतोदकः ॥ ०४१ ॥

देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते ॥ ०४१ ॥

पुरापवर्तनं नन्दां महानन्दां च सेव्य वै ।
नन्दने सेव्यते दान्तस्त्वप्सरोभिरहिंसकः ॥ ०४२ ॥

उर्वशीकृत्तिकायोगे गत्वा यः सुसमाहितः ।
लौहित्ये विधिवत्स्नात्वा पुण्डरीकफलं लभेत् ॥ ०४३ ॥

रामह्रद उपस्पृश्य विशालायां कृतोदकः ।
द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ॥ ०४४ ॥

महाह्रद उपस्पृश्य शुद्धेन मनसा नरः ।
एकमासं निराहारो जमदग्निगतिं लभेत् ॥ ०४५ ॥

विन्ध्ये संताप्य चात्मानं सत्यसंधस्त्वहिंसकः ।
षण्मासं पदमास्थाय मासेनैकेन शुध्यति ॥ ०४६ ॥

नर्मदायामुपस्पृश्य तथा सूर्पारकोदके ।
एकपक्षं निराहारो राजपुत्रो विधीयते  ॥ ०४७  ॥

जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः ।
अहोरात्रेण चैकेन सिद्धिं समधिगच्छति  ॥ ०४८  ॥

कोकामुखे विगाह्यापो गत्वा चण्डालिकाश्रमम् ।
शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश  ॥ ०४९  ॥

वैवस्वतस्य सदनं न स गच्छेत्कदाचन ।
यस्य कन्याह्रदे वासो देवलोकं स गच्छति  ॥ ०५०  ॥

प्रभासे त्वेकरात्रेण अमावास्यां समाहितः ।
सिध्यतेऽत्र महाबाहो यो नरो जायते पुनः  ॥ ०५१  ॥

उज्जानक उपस्पृश्य आर्ष्टिषेणस्य चाश्रमे ।
पिङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते  ॥ ०५२  ॥

कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम् ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितः शुचिः  ॥ ०५३  ॥

पिण्डारक उपस्पृश्य एकरात्रोषितो नरः ।
अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः  ॥ ०५४  ॥

तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
पुण्डरीकमवाप्नोति प्रभातां शर्वरीं शुचिः  ॥ ०५५  ॥

मैनाके पर्वते स्नात्वा तथा संध्यामुपास्य च ।
कामं जित्वा च वै मासं सर्वमेधफलं लभेत्  ॥ ०५६  ॥

विख्यातो हिमवान्पुण्यः शङ्करश्वशुरो गिरिः ।
आकरः सर्वरत्नानां सिद्धचारणसेवितः ॥ ०५७ ॥

शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके ।
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ॥ ०५८ ॥

अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा ।
ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनम् ॥ ०५९ ॥

कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किञ्चिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥ ०६० ॥

यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।
मनसा तानि गम्यानि सर्वतीर्थसमासतः ॥ ०६१ ॥

इदं मेध्यमिदं धन्यमिदं स्वर्ग्यमिदं सुखम् ।
इदं रहस्यं देवानामाप्लाव्यानां च पावनम् ॥ ०६२ ॥

इदं दद्याद्द्विजातीनां साधूनामात्मजस्य वा ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य वा ॥ ०६३ ॥

दत्तवान्गौतमस्येदमङ्गिरा वै महातपाः ।
गुरुभिः समनुज्ञातः काश्यपेन च धीमता ॥ ०६४ ॥

महर्षीणामिदं जप्यं पावनानां तथोत्तमम् ।
जपंश्चाभ्युत्थितः शश्वन्निर्मलः स्वर्गमाप्नुयात् ॥ ०६५ ॥

इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतम् ।
उत्तमे च कुले जन्म लभेज्जातिं च संस्मरेत् ॥ ०६६ ॥

# ग ण्गाप्रशंसनम्

## अध्याय ०२७

वैशंपायन उवाच ॥

बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समम् ।
पराक्रमे शक्रसममादित्यसमतेजसम् ॥ ००१ ॥

गाङ्गेयमर्जुनेनाजौ निहतं भूरिवर्चसम् ।
भ्रातृभिः सहितोऽन्यैश्च पर्युपास्ते युधिष्ठिरः ॥ ००२ ॥

शयानं वीरशयने कालाकाङ्क्षिणमच्युतम् ।
आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ॥ ००३ ॥

अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यः सुमतिः स्वायुरात्मवान् ॥ ००४ ॥

विश्वामित्रः स्थूलशिराः संवर्तः प्रमतिर्दमः ।
उशना बृहस्पतिर्व्यासश्च्यवनः काश्यपो ध्रुवः ॥ ००५ ॥

दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
भरद्वाजश्च रैभ्यश्च यवक्रीतस्त्रितस्तथा ॥ ००६ ॥

स्थूलाक्षः शकलाक्षश्च कण्वो मेधातिथिः कृशः ।
नारदः पर्वतश्चैव सुधन्वाथैकतो द्वितः ॥ ००७ ॥

नितंभूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः ।

जामदग्न्यस्तथा रामः काम्यश्चेत्येवमादयः ॥ ००८ ॥

समागता महात्मानो भीष्मं द्रष्टुं महर्षयः ॥ ००८ ॥

तेषां महात्मनां पूजामागतानां युधिष्ठिरः ।
भ्रातृभिः सहितश्चक्रे यथावदनुपूर्वशः ॥ ००९ ॥

ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः ।
भीष्माश्रिताः सुमधुराः सर्वेन्द्रियमनोहराः ॥ ०१० ॥

भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनाम् ।
मेने दिविस्थमात्मानं तुष्ट्या परमया युतः ॥ ०११ ॥

ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः ।
अन्तर्धानं गताः सर्वे सर्वेषामेव पश्यताम् ॥ ०१२ ॥

तानृषीन्सुमहाभागानन्तर्धानगतानपि ।
पाण्डवास्तुष्टुवुः सर्वे प्रणेमुश्च मुहुर्मुहुः ॥ ०१३ ॥

प्रसन्नमनसः सर्वे गाङ्गेयं कुरुसत्तमाः ।
उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः ॥ ०१४ ॥

प्रभावात्तपसस्तेषामृषीणां वीक्ष्य पाण्डवाः ।
प्रकाशन्तो दिशः सर्वा विस्मयं परमं ययुः ॥ ०१५ ॥

महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते ।
पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ॥ ०१६ ॥

कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः ।
धर्म्यं धर्मसुतः प्रश्नं पर्यपृच्छद्युधिष्ठिरः ॥ ०१७ ॥

के देशाः के जनपदा आश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह ॥ ०१८ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शिलोञ्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर ॥ ०१९ ॥

इमां कश्चित्परिक्रम्य पृथिवीं शैलभूषिताम् ।
असकृद्द्विपदां श्रेष्ठः श्रेष्ठस्य गृहमेधिनः ॥ ०२० ॥

शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनार्चितः ।
कृतकृत्य उपातिष्ठत्सिद्धं तमतिथिं तदा ॥ ०२१ ॥

तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः ।
चक्रतुर्वेदसंबद्धास्तच्छेषकृतलक्षणाः ॥ ०२२ ॥

शिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य यत्नतः ।
प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ॥ ०२३ ॥

शिलवृत्तिरुवाच ॥

के देशाः के जनपदाः केऽऽश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥ ०२४ ॥

सिद्ध उवाच ॥

ते देशास्ते जनपदास्तेऽऽश्रमास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥ ०२५ ॥

तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।

गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत्  ॥ ०२६  ॥

स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते  ॥ ०२७  ॥

सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति तेऽचलाः  ॥ ०२८  ॥

पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम्  ॥ ०२९  ॥

स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि  ॥ ०३०  ॥

यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गं प्राप्य महीयते  ॥ ०३१  ॥

अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथापहत्य पाप्मानं भाति गङ्गाजलोक्षितः  ॥ ०३२  ॥

विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शुभैः  ॥ ०३३  ॥

वर्णाश्रमा यथा सर्वे स्वधर्मज्ञानवर्जिताः ।
क्रतवश्च यथासोमास्तथा गङ्गां विना जगत्  ॥ ०३४  ॥

यथा हीनं नभोऽर्केण भूः शैलैः खं च वायुना ।
तथा देशा दिशश्चैव गङ्गाहीना न संशयः  ॥ ०३५  ॥

त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः  ॥ ०३६  ॥

यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते ॥ ०३७ ॥

इन्दुव्रतसहस्रं तु चरेद्यः कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ॥ ०३८ ॥

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥ ०३९ ॥

लम्बेतावाक्शिरा यस्तु युगानामयुतं पुमान् ।
तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ॥ ०४० ॥

अग्नौ प्राप्तं प्रधूयेत यथा तूलं द्विजोत्तम ।
तथा गङ्गावगाढस्य सर्वं पापं प्रधूयते ॥ ०४१ ॥

भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥ ०४२ ॥

भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ॥ ०४३ ॥

अप्रतिष्ठाश्च ये केचिदधर्मशरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च ॥ ०४४ ॥

प्रकृष्टैरशुभैर्ग्रस्तानेनेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान्प्रेत्य तारयेत् ॥ ०४५ ॥

ते संविभक्ता मुनिभिर्नूनं देवैः सवासवैः ।
येऽभिगच्छन्ति सततं गङ्गामभिगतां सुरैः ॥ ०४६ ॥

विनयाचारहीनाश्च अशिवाश्च नराधमाः ।
ते भवन्ति शिवा विप्र ये वै गङ्गां समाश्रिताः ॥ ०४७ ॥

यथा सुराणाममृतं पितॄणां च यथा स्वधा ।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥ ०४८ ॥

उपासते यथा बाला मातरं क्षुधयार्दिताः ।
श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥ ०४९ ॥

स्वायंभुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ ०५० ॥

यथोपजीविनां धेनुर्देवादीनां धरा स्मृता ।
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ॥ ०५१ ॥

देवाः सोमार्कसंस्थानि यथा सत्रादिभिर्मखैः ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥ ०५२ ॥

जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितः ।
मन्यते पुरुषोऽऽत्मानं दिविष्ठमिव शोभितम् ॥ ०५३ ॥

जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशात्सुनिर्मलम् ॥ ०५४ ॥

गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा ।
स्पृशते सोऽपि पाप्मानं सद्य एवापमार्जति ॥ ०५५ ॥

व्यसनैरभितप्तस्य नरस्य विनशिष्यतः ।
गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति ॥ ०५६ ॥

हंसारावैः कोकरवै रवैरन्यैश्च पक्षिणाम् ।

पस्पर्ध गङ्गा गन्धर्वान्पुलिनैश्च शिलोच्चयान्  ॥ ०५७  ॥

हंसादिभिः सुबहुभिर्विविधैः पक्षिभिर्वृताम् ।
गङ्गां गोकुलसंबाधां दृष्ट्वा स्वर्गोऽपि विस्मृतः  ॥ ०५८  ॥

न सा प्रीतिर्दिविष्ठस्य सर्वकामानुपाश्नतः ।
अभवद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम्  ॥ ०५९  ॥

वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेत्पूतस्तत्र मे नास्ति संशयः  ॥ ०६०  ॥

सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे ।
पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वावगाह्य च  ॥ ०६१  ॥

श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः  ॥ ०६२  ॥

दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात् ।
पुनात्यपुण्यान्पुरुषाञ्शतशोऽथ सहस्रशः  ॥ ०६३  ॥

य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा  ॥ ०६४  ॥

न सुतैर्न च वित्तेन कर्मणा न च तत्फलम् ।
प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात्  ॥ ०६५  ॥

जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम्  ॥ ०६६  ॥

भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम् ।
देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः  ॥ ०६७  ॥

वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ।
विद्यावद्भिः श्रितां गङ्गां पुमान्को नाम नाश्रयेत् ॥ ०६८ ॥

उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः ।
चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥ ०६९ ॥

न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आ देहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ ०७० ॥

गगनाद्यां महापुण्यां पतन्तीं वै महेश्वरः ।
दधार शिरसा देवीं तामेव दिवि सेवते ॥ ०७१ ॥

अलङ्कृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः ।
यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान्भवेत् ॥ ०७२ ॥

दिवि ज्योतिर्यथादित्यः पितृणां चैव चन्द्रमाः ।
देवेशश्च यथा नृणां गङ्गेह सरितां तथा ॥ ०७३ ॥

मात्रा पित्रा सुतैर्दारैर्वियुक्तस्य धनेन वा ।
न भवेद्धि तथा दुःखं यथा गङ्गावियोगजम् ॥ ०७४ ॥

नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः ।
तथा प्रसादो भवति गङ्गां वीक्ष्य यथा नृणाम् ॥ ०७५ ॥

पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति ।
गङ्गां त्रिपथगां दृष्ट्वा तथा दृष्टिः प्रसीदति ॥ ०७६ ॥

तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।
गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ॥ ०७७ ॥

भूःस्थैः खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि ।
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ॥ ०७८ ॥

त्रिषु लोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः ।
यत्पुत्रान्सगरस्यैषा भस्माख्याननयद्दिवम् ॥ ०७९ ॥

वाय्वीरिताभिः सुमहास्वनाभि ;र्द्रुताभिरत्यर्थसमुच्छ्रिताभिः ।
गङ्गोर्मिभिर्भानुमतीभिरिद्धः ; सहस्ररश्मिप्रतिमो विभाति ॥ ०८० ॥

पयस्विनीं घृतिनीमत्युदारां ; समृद्धिनीं वेगिनीं दुर्विगाह्याम् ।
गङ्गां गत्वा यैः शरीरं विसृष्टं ; गता धीरास्ते विबुधैः समत्वम् ॥ ०८१ ॥

अन्धाञ्जडान्द्रव्यहीनांश्च गङ्गा ; यशस्विनी बृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च ; निषेविता सर्वकामैर्युनक्ति ॥ ०८२ ॥

ऊर्जावतीं मधुमतीं महापुण्यां त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवं गताः ॥ ०८३ ॥

यो वत्स्यति द्रक्ष्यति वापि मर्त्य ;स्तस्मै प्रयच्छन्ति सुखानि देवाः ।
तद्भाविताः स्पर्शने दर्शने य ;स्तस्मै देवा गतिमिष्टां दिशन्ति ॥ ०८४ ॥

दक्षां पृथ्वीं बृहतीं विप्रकृष्टां ; शिवामृतां सुरसां सुप्रसन्नाम् ।
विभावरीं सर्वभूतप्रतिष्ठां ; गङ्गां गता ये त्रिदिवं गतास्ते ॥ ०८५ ॥

ख्यातिर्यस्याः खं दिवं गां च नित्यं ; पुरा दिशो विदिशश्चावतस्थे ।
तस्या जलं सेव्य सरिद्वराया ; मर्त्याः सर्वे कृतकृत्या भवन्ति ॥ ०८६ ॥

इयं गङ्गेति नियतं प्रतिष्ठा ; गुहस्य रुक्मस्य च गर्भयोषा ।
प्रातस्त्रिमार्गा घृतवहा विपाप्मा ; गङ्गावतीर्णा वियतो विश्वतोया ॥ ०८७ ॥

सुतावनीध्रस्य हरस्य भार्या ; दिवो भुवश्चापि कक्ष्यानुरूपा ।

भव्या पृथिव्या भाविनी भाति राज ;न्गङ्गा लोकानां पुण्यदा वै त्रयाणाम्  ॥ ०८८ ॥

मधुप्रवाहा घृतरागोद्धृताभि ;र्महोर्मिभिः शोभिता ब्राह्मणैश्च ।
दिवश्च्युता शिरसात्ता भवेन ; गङ्गावनीध्रास्त्रिदिवस्य माला  ॥ ०८९  ॥

योनिर्वरिष्ठा विरजा वितन्वी ; शुष्मा इरा वारिवहा यशोदा ।
विश्वावती चाकृतिरिष्टिरिद्धा ; गङ्गोक्षितानां भुवनस्य पन्थाः  ॥ ०९०  ॥

क्षान्त्या मह्या गोपने धारणे च ; दीप्त्या कृशानोस्तपनस्य चैव ।
तुल्या गङ्गा संमता ब्राह्मणानां ; गुहस्य ब्रह्मण्यतया च नित्यम्  ॥ ०९१  ॥

ऋषिष्टुतां विष्णुपदीं पुराणीं ; सुपुण्यतोयां मनसापि लोके ।
सर्वात्मना जाह्नवीं ये प्रपन्ना ;स्ते ब्रह्मणः सदनं संप्रयाताः  ॥ ०९२  ॥

लोकानिमान्नयति या जननीव पुत्रा ;न्सर्वात्मना सर्वगुणोपपन्ना ।
स्वस्थानमिष्टमिह ब्राह्ममभीप्समानै ;र्गङ्गा सदैवात्मवशैरुपास्या  ॥ ०९३  ॥

उस्रां जुष्टां मिषतीं विश्वतोया ;मिरां वज्रीं रेवतीं भूधराणाम् ।
शिष्टाश्रयाममृतां ब्रह्मकान्तां ; गङ्गां श्रयेदात्मवान्सिद्धिकामः  ॥ ०९४  ॥

प्रसाद्य देवान्सविभून्समस्ता ;न्भगीरथस्तपसोग्रेण गङ्गाम् ।
गामानयत्तामभिगम्य शश्व ;न्पुमान्भयं नेह नामुत्र विद्यात्  ॥ ०९५  ॥

उदाहृतः सर्वथा ते गुणानां ; मयैकदेशः प्रसमीक्ष्य बुद्ध्या ।
शक्तिर्न मे काचिदिहास्ति वक्तुं ; गुणान्सर्वान्परिमातुं तथैव  ॥ ०९६  ॥

मेरोः समुद्रस्य च सर्वरत्नैः ; संख्योपलानामुदकस्य वापि ।
वक्तुं शक्यं नेह गङ्गाजलानां ; गुणाख्यानं परिमातुं तथैव  ॥ ०९७  ॥

तस्मादिमान्परया श्रद्धयोक्ता ;न्गुणान्सर्वाञ्जाह्नवीजांस्तथैव ।

भजेद्वाचा मनसा कर्मणा च ; भक्त्या युक्तः परया श्रद्दधानः ॥ ०९८ ॥

लोकानिमांस्त्रीन्यशसा वितत्य ; सिद्धिं प्राप्य महतीं तां दुरापाम् ।
गङ्गाकृतानचिरेणैव लोका ;न्यथेष्टमिष्टान्विचरिष्यसि त्वम् ॥ ०९९ ॥

तव मम च गुणैर्महानुभावा ; जुषतु मतिं सततं स्वधर्मयुक्तैः ।
अभिगतजनवत्सला हि गङ्गा ; भजति युनक्ति सुखैश्च भक्तिमन्तम् ॥ १०० ॥

भीष्म उवाच ॥

इति परममतिर्गुणाननेका ;ञ्शिलरतये त्रिपथानुयोगरूपान् ।
बहुविधमनुशास्य तथ्यरूपा ;न्गगनतलं द्युतिमान्विवेश सिद्धः ॥ १०१ ॥

शिलवृत्तिस्तु सिद्धस्य वाक्यैः संबोधितस्तदा ।
गङ्गामुपास्य विधिवत्सिद्धिं प्राप्तः सुदुर्लभाम् ॥ १०२ ॥

तस्मात्त्वमपि कौन्तेय भक्त्या परमया युतः ।
गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ १०३ ॥

वैशंपायन उवाच ॥

श्रुत्वेतिहासं भीष्मोक्तं गङ्गायाः स्तवसंयुतम् ।
युधिष्ठिरः परां प्रीतिमगच्छद्भ्रातृभिः सह ॥ १०४ ॥

इतिहासमिमं पुण्यं श्रृणुयाद्यः पठेत वा ।
गङ्गायाः स्तवसंयुक्तं स मुच्येत्सर्वकिल्बिषैः ॥ १०५ ॥

# मत ण्गोपाख्यानम्

## अध्याय ०२८

युधिष्ठिर उवाच ॥

प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान् ।
गुणैः समुदितः सर्वैर्वयसा च समन्वितः ॥ ००१ ॥

तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतां वर ॥ ००१ ॥

क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयात्केन तन्मे व्याख्यातुमर्हसि ॥ ००२ ॥

तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्तन्मे ब्रूहि पितामह ॥ ००३ ॥

भीष्म उवाच ॥

ब्राह्मण्यं तात दुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ॥ ००४ ॥

बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥ ००५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ॥ ००६ ॥

द्विजातेः कस्यचित्तात तुल्यवर्णः सुतः प्रभुः ।
मतङ्गो नाम नाम्नाभूत्सर्वैः समुदितो गुणैः ॥ ००७ ॥

स यज्ञकारः कौन्तेय पित्रा सृष्टः परंतप ।
प्रायाद्गर्दभयुक्तेन रथेनेहाशुगामिना ॥ ००८ ॥

स बालं गर्दभं राजन्वहन्तं मातुरन्तिके ।
निरविध्यत्प्रतोदेन नासिकायां पुनः पुनः ॥ ००९ ॥

तं तु तीव्रव्रणं दृष्ट्वा गर्दभी पुत्रगृद्धिनी ।
उवाच मा शुचः पुत्र चण्डालस्त्वाधितिष्ठति ॥ ०१० ॥

ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते ।
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥ ०११ ॥

अयं तु पापप्रकृतिर्बाले न कुरुते दयाम् ।
स्वयोनिं मानयत्येष भावो भावं निगच्छति ॥ ०१२ ॥

एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः ।
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥ ०१३ ॥

ब्रूहि रासभि कल्याणि माता मे येन दूषिता ।
कथं मां वेत्सि चण्डालं क्षिप्रं रासभि शंस मे ॥ ०१४ ॥

केन जातोऽस्मि चण्डालो ब्राह्मण्यं येन मेऽनशत् ।
तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः ॥ ०१५ ॥

गर्दभ्युवाच ॥

ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह ।
जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ॥ ०१६ ॥

एवमुक्तो मतङ्गस्तु प्रत्युपायाद्गृहं प्रति ।

तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत्  ॥ ०१७  ॥

मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि ।
कस्मात्प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव  ॥ ०१८  ॥

मतङ्ग उवाच  ॥

अयोनिरग्र्ययोनिर्वा यः स्यात्स कुशली भवेत् ।
कुशलं तु कुतस्तस्य यस्येयं जननी पितः  ॥ ०१९  ॥

ब्राह्मण्यां वृषलाज्जातं पितर्वेदयतीह माम् ।
अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत्  ॥ ०२०  ॥

एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।
ततो गत्वा महारण्यमतप्यत महत्तपः  ॥ ०२१  ॥

ततः संतापयामास विबुधांस्तपसान्वितः ।
मतङ्गः सुसुखं प्रेप्सुः स्थानं सुचरितादपि  ॥ ०२२  ॥

तं तथा तपसा युक्तमुवाच हरिवाहनः ।
मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान्  ॥ ०२३  ॥

वरं ददानि ते हन्त वृणीष्व त्वं यदिच्छसि ।
यच्चाप्यवाप्यमन्यत्ते सर्वं प्रब्रूहि माचिरम्  ॥ ०२४  ॥

मतङ्ग उवाच  ॥

ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः ।
गच्छेयं तदवाप्येह वर एष वृतो मया  ॥ ०२५  ॥

एतच्छ्रुत्वा तु वचनं तमुवाच पुरंदरः ।

ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः ॥ ०२६ ॥

श्रेष्ठं यत्सर्वभूतेषु तपो यन्नातिवर्तते ।
तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि ॥ ०२७ ॥

देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम् ।
चण्डालयोनौ जातेन न तत्प्राप्यं कथञ्चन ॥ ०२८ ॥

---

# इन्द्रमत ण्गसंवादः

## अध्याय ०२९

भीष्म उवाच ॥

एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ।
अतिष्ठदेकपादेन वर्षाणां शतमच्युत ॥ ००१ ॥

तमुवाच ततः शक्रः पुनरेव महायशाः ।
मतङ्ग परमं स्थानं प्रार्थयन्नतिदुर्लभम् ॥ ००२ ॥

मा कृथाः साहसं पुत्र नैष धर्मपथस्तव ।
अप्राप्यं प्रार्थयानो हि नचिराद्विनशिष्यसि ॥ ००३ ॥

मतङ्ग परमं स्थानं वार्यमाणो मया सकृत् ।
चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ॥ ००४ ॥

तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति ।

स जायते पुल्कसो वा चण्डालो वा कदाचन ॥ ००५ ॥

पुंश्चलः पापयोनिर्वा यः कश्चिदिह लक्ष्यते ।
स तस्यामेव सुचिरं मतङ्ग परिवर्तते ॥ ००६ ॥

ततो दशगुणे काले लभते शूद्रतामपि ।
शूद्रयोनावपि ततो बहुशः परिवर्तते ॥ ००७ ॥

ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि ।
वैश्यतायां चिरं कालं तत्रैव परिवर्तते ॥ ००८ ॥

ततः षष्टिगुणे काले राजन्यो नाम जायते ।
राजन्यत्वे चिरं कालं तत्रैव परिवर्तते ॥ ००९ ॥

ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् ।
ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्तते ॥ ०१० ॥

ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ।
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ॥ ०११ ॥

ततस्तु त्रिशते काले लभते द्विजतामपि ।
तां च प्राप्य चिरं कालं तत्रैव परिवर्तते ॥ ०१२ ॥

ततश्चतुःशते काले श्रोत्रियो नाम जायते ।
श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते ॥ ०१३ ॥

तदैव क्रोधहर्षौ च कामद्वेषौ च पुत्रक ।
अतिमानातिवादौ तमाविशन्ति द्विजाधमम् ॥ ०१४ ॥

तांश्चेज्जयति शत्रून्स तदा प्राप्नोति सद्गतिम् ।

अथ ते वै जयन्त्येनं तालाग्रादिव पात्यते ॥ ०१५ ॥

मतङ्ग संप्रधार्यैतद्यदहं त्वामचूचुदम् ।
वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम् ॥ ०१६ ॥

---

# अध्याय ०३०

भीष्म उवाच ॥

एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ।
अतिष्ठत गयां गत्वा सोऽङ्गुष्ठेन शतं समाः ॥ ००१ ॥

सुदुष्करं वहन्योगं कृशो धमनिसंततः ।
त्वगस्थिभूतो धर्मात्मा स पपातेति नः श्रुतम् ॥ ००२ ॥

तं पतन्तमभिद्रुत्य परिजग्राह वासवः ।
वराणामीश्वरो दाता सर्वभूतहिते रतः ॥ ००३ ॥

शक्र उवाच ॥

मतङ्ग ब्राह्मणत्वं ते संवृतं परिपन्थिभिः ।
पूजयन्सुखमाप्नोति दुःखमाप्नोत्यपूजयन् ॥ ००४ ॥

ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः ।
ब्राह्मणेभ्योऽनुतृप्यन्ति पितरो देवतास्तथा ॥ ००५ ॥

ब्राह्मणः सर्वभूतानां मतङ्ग पर उच्यते ।

ब्राह्मणः कुरुते तद्धि यथा यद्यच्च वाञ्छति ॥ ००६ ॥

बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति ॥ ००७ ॥

मतङ्ग उवाच ॥

किं मां तुदसि दुःखार्तं मृतं मारयसे च माम् ।
तं तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषते ॥ ००८ ॥

ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैः शतक्रतो ।
सुदुर्लभं तदावाप्य नानुतिष्ठन्ति मानवाः ॥ ००९ ॥

यः पापेभ्यः पापतमस्तेषामधम एव सः ।
ब्राह्मण्यं योऽवजानीते धनं लब्ध्वेव दुर्लभम् ॥ ०१० ॥

दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम् ।
दुरवापमवाप्यैतन्नानुतिष्ठन्ति मानवाः ॥ ०११ ॥

एकारामो ह्यहं शक्र निर्द्वंद्वो निष्परिग्रहः ।
अहिंसादमदानस्थः कथं नार्हामि विप्रताम् ॥ ०१२ ॥

यथाकामविहारी स्यां कामरूपी विहङ्गमः ।
ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम् ॥ ०१३ ॥

यथा ममाक्षया कीर्तिर्भवेच्चापि पुरंदर ॥ ०१३ ॥

इन्द्र उवाच ॥

छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि ।
भीष्म उवाच ॥

एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत ।
प्राणांस्त्यक्त्वा मतङ्गोऽपि प्राप तत्स्थानमुत्तमम्  ॥ ०१५  ॥

एवमेतत्परं स्थानं ब्राह्मण्यं नाम भारत ।
तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा  ॥ ०१६  ॥

---

# वीतहव्योपाख्यानम्

## अध्याय ०३१

युधिष्ठिर उवाच  ॥

श्रुतं मे महदाख्यानमेतत्कुरुकुलोद्वह ।
सुदुष्प्रापं ब्रवीषि त्वं ब्राह्मण्यं वदतां वर  ॥ ००१  ॥

विश्वामित्रेण च पुरा ब्राह्मण्यं प्राप्तमित्युत ।
श्रूयते वदसे तच्च दुष्प्रापमिति सत्तम  ॥ ००२  ॥

वीतहव्यश्च राजर्षिः श्रुतो मे विप्रतां गतः ।
तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो  ॥ ००३  ॥

स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तम ।
वरेण तपसा वापि तन्मे व्याख्यातुमर्हति  ॥ ००४  ॥

भीष्म उवाच  ॥

श्रृणु राजन्यथा राजा वीतहव्यो महायशाः ।

क्षत्रियः सन्पुनः प्राप्तो ब्राह्मण्यं लोकसत्कृतम्  ॥ ००५  ॥

मनोर्महात्मनस्तात प्रजाधर्मेण शासतः ।
बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः  ॥ ००६  ॥

तस्यान्ववाये द्वौ राजन्राजानौ संबभूवतुः ।
हेहयस्तालजङ्घश्च वत्सेषु जयतां वर  ॥ ००७  ॥

हेहयस्य तु पुत्राणां दशसु स्त्रीषु भारत ।
शतं बभूव प्रख्यातं शूराणामनिवर्तिनाम्  ॥ ००८  ॥

तुल्यरूपप्रभावाणां विदुषां युद्धशालिनाम् ।
धनुर्वेदे च वेदे च सर्वत्रैव कृतश्रमाः  ॥ ००९  ॥

काशिष्वपि नृपो राजन्दिवोदासपितामहः ।
हर्यश्व इति विख्यातो बभूव जयतां वरः  ॥ ०१०  ॥

स वीतहव्यदायादैरागत्य पुरुषर्षभ ।
गङ्गायमुनयोर्मध्ये सङ्ग्रामे विनिपातितः  ॥ ०११  ॥

तं तु हत्वा नरवरं हेहयास्ते महारथाः ।
प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः  ॥ ०१२  ॥

हर्यश्वस्य तु दायादः काशिराजोऽभ्यषिच्यत ।
सुदेवो देवसङ्काशः साक्षाद्धर्म इवापरः  ॥ ०१३  ॥

स पालयन्नेव महीं धर्मात्मा काशिनन्दनः ।
तैर्वीतहव्यैरागत्य युधि सर्वैर्विनिर्जितः  ॥ ०१४  ॥

तमप्याजौ विनिर्जित्य प्रतिजग्मुर्यथागतम् ।
सौदेविस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत  ॥ ०१५  ॥

दिवोदासस्तु विज्ञाय वीर्यं तेषां महात्मनाम् ।
वाराणसीं महातेजा निर्ममे शक्रशासनात्  ॥ ०१६  ॥

विप्रक्षत्रियसंबाधां वैश्यशूद्रसमाकुलाम् ।
नैकद्रव्योच्चयवतीं समृद्धविपणापणाम्  ॥ ०१७  ॥

गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम ।
गोमत्या दक्षिणे चैव शक्रस्येवामरावतीम्  ॥ ०१८  ॥

तत्र तं राजशार्दूलं निवसन्तं महीपतिम् ।
आगत्य हेहया भूयः पर्यधावन्त भारत  ॥ ०१९  ॥

स निष्पत्य ददौ युद्धं तेभ्यो राजा महाबलः ।
देवासुरसमं घोरं दिवोदासो महाद्युतिः  ॥ ०२०  ॥

स तु युद्धे महाराज दिनानां दशतीर्दश ।
हतवाहनभूयिष्ठस्ततो दैन्यमुपागमत्  ॥ ०२१  ॥

हतयोधस्ततो राजन्क्षीणकोशश्च भूमिपः ।
दिवोदासः पुरीं हित्वा पलायनपरोऽभवत्  ॥ ०२२  ॥

स त्वाश्रममुपागम्य भरद्वाजस्य धीमतः ।
जगाम शरणं राजा कृताञ्जलिररिंदम  ॥ ०२३  ॥

राजोवाच  ॥

भगवन्वैतहव्यैर्मे युद्धे वंशः प्रणाशितः ।
अहमेकः परिद्यूनो भवन्तं शरणं गतः  ॥ ०२४  ॥

शिष्यस्नेहेन भगवन्स मां रक्षितुमर्हसि ।

निःशेषो हि कृतो वंशो मम तैः पापकर्मभिः ॥ ०२५ ॥

तमुवाच महाभागो भरद्वाजः प्रतापवान् ।
न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम् ॥ ०२६ ॥

अहमिष्टिं करोम्यद्य पुत्रार्थं ते विशां पते ।
वैतहव्यसहस्राणि यथा त्वं प्रसहिष्यसि ॥ ०२७ ॥

तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम् ।
अथास्य तनयो जज्ञे प्रतर्दन इति श्रुतः ॥ ०२८ ॥

स जातमात्रो ववृधे समाः सद्यस्त्रयोदश ।
वेदं चाधिजगे कृत्स्नं धनुर्वेदं च भारत ॥ ०२९ ॥

योगेन च समाविष्टो भरद्वाजेन धीमता ।
तेजो लौक्यं स सङ्गृह्य तस्मिन्देशे समाविशत् ॥ ०३० ॥

ततः स कवची धन्वी बाणी दीप्त इवानलः ।
प्रययौ स धनुर्धुन्वन्विवर्षुरिव तोयदः ॥ ०३१ ॥

तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ ।
मेने च मनसा दग्धान्वैतहव्यान्स पार्थिवः ॥ ०३२ ॥

ततस्तं यौवराज्येन स्थापयित्वा प्रतर्दनम् ।
कृतकृत्यं तदात्मानं स राजा अभ्यनन्दत ॥ ०३३ ॥

ततस्तु वैतहव्यानां वधाय स महीपतिः ।
पुत्रं प्रस्थापयामास प्रतर्दनमरिंदमम् ॥ ०३४ ॥

सरथः स तु संतीर्य गङ्गामाशु पराक्रमी ।
प्रययौ वीतहव्यानां पुरीं परपुरञ्जयः ॥ ०३५ ॥

वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतम् ।
निर्ययुर्नगराकारै रथैः पररथारुजैः ॥ ०३६ ॥

निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः ।
प्रतर्दनं समाजघ्नुः शरवर्षैरुदायुधाः ॥ ०३७ ॥

अस्त्रैश्च विविधाकारै रथौघैश्च युधिष्ठिर ।
अभ्यवर्षन्त राजानं हिमवन्तमिवाम्बुदाः ॥ ०३८ ॥

अस्त्रैरस्त्राणि संवार्य तेषां राजा प्रतर्दनः ।
जघान तान्महातेजा वज्रानलसमैः शरैः ॥ ०३९ ॥

कृत्तोत्तमाङ्गास्ते राजन्भल्लैः शतसहस्रशः ।
अपतन्रुधिरार्द्राङ्गा निकृत्ता इव किंशुकाः ॥ ०४० ॥

हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ ।
प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ॥ ०४१ ॥

ययौ भृगुं च शरणं वीतहव्यो नराधिपः ।
अभयं च ददौ तस्मै राज्ञे राजन्भृगुस्तथा ॥ ०४२ ॥

ततो ददावासनं च तस्मै शिष्यो भृगोस्तदा ॥ ०४२ ॥

अथानुपदमेवाशु तत्रागच्छत्प्रतर्दनः ।
स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ॥ ०४३ ॥

भो भोः केऽत्राश्रमे सन्ति भृगोः शिष्या महात्मनः ।
द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति ॥ ०४४ ॥

स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा ।

पूजयामास च ततो विधिना परमेण ह  ॥ ०४५  ॥

उवाच चैनं राजेन्द्र किं कार्यमिति पार्थिवम् ।
स चोवाच नृपस्तस्मै यदागमनकारणम्  ॥ ०४६  ॥

अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्यताम् ।
अस्य पुत्रैर्हि मे ब्रह्मन्कृत्स्नो वंशः प्रणाशितः  ॥ ०४७  ॥

उत्सादितश्च विषयः काशीनां रत्नसञ्चयः  ॥ ०४७  ॥

एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया ।
अस्येदानीं वधाद्ब्रह्मन्भविष्याम्यनृणः पितुः  ॥ ०४८  ॥

तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः ।
नेहास्ति क्षत्रियः कश्चित्सर्वे हीमे द्विजातयः  ॥ ०४९  ॥

एवं तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः ।
पादावुपस्पृश्य शनैः प्रहसन्वाक्यमब्रवीत्  ॥ ०५०  ॥

एवमप्यस्मि भगवन्कृतकृत्यो न संशयः ।
यदेष राजा वीर्येण स्वजातिं त्याजितो मया  ॥ ०५१  ॥

अनुजानीहि मां ब्रह्मन्ध्यायस्व च शिवेन माम् ।
त्याजितो हि मया जातिमेष राजा भृगूद्वह  ॥ ०५२  ॥

ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः ।
यथागतं महाराज मुक्त्वा विषमिवोरगः  ॥ ०५३  ॥

भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च  ॥ ०५४  ॥

तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ॥ ०५५ ॥

ऋग्वेदे वर्तते चाग्र्या श्रुतिरत्र विशां पते ।
यत्र गृत्समदो ब्रह्मन्ब्राह्मणैः स महीयते ॥ ०५६ ॥

स ब्रह्मचारी विप्रर्षिः श्रीमान्गृत्समदोऽभवत् ।
पुत्रो गृत्समदस्यापि सुचेता अभवद्द्विजः ॥ ०५७ ॥

वर्चाः सुतेजसः पुत्रो विहव्यस्तस्य चात्मजः ।
विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः ॥ ०५८ ॥

वितत्यस्य सुतः सत्यः सन्तः सत्यस्य चात्मजः ।
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः ॥ ०५९ ॥

तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः ।
प्रकाशस्य च वागिन्द्रो बभूव जयतां वरः ॥ ०६० ॥

तस्यात्मजश्च प्रमतिर्वेदवेदाङ्गपारगः ।
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ॥ ०६१ ॥

प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत ।
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ॥ ०६२ ॥

एवं विप्रत्वमगमद्वीतहव्यो नराधिपः ।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥ ०६३ ॥

तथैव कथितो वंशो मया गार्त्समदस्तव ।
विस्तरेण महाराज किमन्यदनुपृच्छसि ॥ ०६४ ॥

# पूज्यपुरुषवर्णनम्

## अध्याय ०३२

युधिष्ठिर उवाच ॥

के पूज्याः के नमस्कार्या मानवैर्भरतर्षभ ।
विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यताम् ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं वासुदेवस्य चोभयोः ॥ ००२ ॥

नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान् ।
केशवः परिपप्रच्छ भगवन्कान्नमस्यसि ॥ ००३ ॥

बहुमानः परः केषु भवतो यान्नमस्यसि ।
शक्यं चेच्छ्रोतुमिच्छामि ब्रूह्येतद्धर्मवित्तम ॥ ००४ ॥

नारद उवाच ॥

शृणु गोविन्द यानेतान्पूजयाम्यरिमर्दन ।
त्वत्तोऽन्यः कः पुमा.ण्ल्लोके श्रोतुमेतदिहार्हति ॥ ००५ ॥

वरुणं वायुमादित्यं पर्जन्यं जातवेदसम् ।
स्थाणुं स्कन्दं तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च ॥ ००६ ॥

वाचस्पतिं चन्द्रमसमपः पृथ्वीं सरस्वतीम् ।
सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो ॥ ००७ ॥

तपोधनान्वेदविदो नित्यं वेदपरायणान् ।
महार्हान्वृष्णिशार्दूल सदा संपूजयाम्यहम् ॥ ००८ ॥

अभुक्त्वा देवकार्याणि कुर्वते येऽविकत्थनाः ।
संतुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो ॥ ००९ ॥

सम्यग्ददति ये चेष्टान्क्षान्ता दान्ता जितेन्द्रियाः ।
सस्यं धनं क्षितिं गाश्च तान्नमस्यामि यादव ॥ ०१० ॥

ये ते तपसि वर्तन्ते वने मूलफलाशनाः ।
असञ्चयाः क्रियावन्तस्तान्नमस्यामि यादव ॥ ०११ ॥

ये भृत्यभरणे सक्ताः सततं चातिथिप्रियाः ।
भुञ्जन्ते देवशेषाणि तान्नमस्यामि यादव ॥ ०१२ ॥

ये वेदं प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मवादिनः ।
याजनाध्यापने युक्ता नित्यं तान्पूजयाम्यहम् ॥ ०१३ ॥

प्रसन्नहृदयाश्चैव सर्वसत्त्वेषु नित्यशः ।
आ पृष्ठतापात्स्वाध्याये युक्तास्तान्पूजयाम्यहम् ॥ ०१४ ॥

गुरुप्रसादे स्वाध्याये यतन्ते ये स्थिरव्रताः ।
शुश्रूषवोऽनसूयन्तस्तान्नमस्यामि यादव ॥ ०१५ ॥

सुव्रता मुनयो ये च ब्रह्मण्याः सत्यसङ्गराः ।
वोढारो हव्यकव्यानां तान्नमस्यामि यादव ॥ ०१६ ॥

भैक्ष्यचर्यासु निरताः कृशा गुरुकुलाश्रयाः ।

निःसुखा निर्धना ये च तान्नमस्यामि यादव ॥ ०१७ ॥

निर्ममा निष्प्रतिद्वंद्वा निर्ह्रीका निष्प्रयोजनाः ।
अहिंसानिरता ये च ये च सत्यव्रता नराः ॥ ०१८ ॥

दान्ताः शमपराश्चैव तान्नमस्यामि केशव ॥ ०१८ ॥

देवतातिथिपूजायां प्रसक्ता गृहमेधिनः ।
कपोतवृत्तयो नित्यं तान्नमस्यामि यादव ॥ ०१९ ॥

येषां त्रिवर्गः कृत्येषु वर्तते नोपहीयते ।
शिष्टाचारप्रवृत्ताश्च तान्नमस्याम्यहं सदा ॥ ०२० ॥

ब्राह्मणास्त्रिषु लोकेषु ये त्रिवर्गमनुष्ठिताः ।
अलोलुपाः पुण्यशीलास्तान्नमस्यामि केशव ॥ ०२१ ॥

अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा ।
व्रतैश्च विविधैर्युक्तास्तान्नमस्यामि माधव ॥ ०२२ ॥

अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च ।
सर्वभूतात्मयोनींश्च तान्नमस्याम्यहं द्विजान् ॥ ०२३ ॥

नित्यमेतान्नमस्यामि कृष्ण लोककरानृषीन् ।
लोकज्येष्ठाञ्ज्ञाननिष्ठांस्तमोघ्ना.ण्लोकभास्करान् ॥ ०२४ ॥

तस्मात्त्वमपि वार्ष्णेय द्विजान्पूजय नित्यदा ।
पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ ॥ ०२५ ॥

अस्मि.ण्लोके सदा ह्येते परत्र च सुखप्रदाः ।
त एते मान्यमाना वै प्रदास्यन्ति सुखं तव ॥ ०२६ ॥

ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च ।
नित्यं सत्ये च निरता दुर्गाण्यतितरन्ति ते ॥ ०२७ ॥

नित्यं शमपरा ये च तथा ये चानसूयकाः ।
नित्यं स्वाध्यायिनो ये च दुर्गाण्यतितरन्ति ते ॥ ०२८ ॥

सर्वान्देवान्नमस्यन्ति ये चैकं देवमाश्रिताः ।
श्रद्दधानाश्च दान्ताश्च दुर्गाण्यतितरन्ति ते ॥ ०२९ ॥

तथैव विप्रप्रवरान्नमस्कृत्य यतव्रतान् ।
भवन्ति ये दानरता दुर्गाण्यतितरन्ति ते ॥ ०३० ॥

अग्नीनाधाय विधिवत्प्रयता धारयन्ति ये ।
प्राप्ताः सोमाहुतिं चैव दुर्गाण्यतितरन्ति ते ॥ ०३१ ॥

मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा ।
यथा त्वं वृष्णिशार्दूलेत्युक्त्वैवं विरराम सः ॥ ०३२ ॥

तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन् ।
सम्यक्पूजय येन त्वं गतिमिष्टामवाप्स्यसि ॥ ०३३ ॥

---

# ब्राह्मणप्रशंसा

## अध्याय ०३३

युधिष्ठिर उवाच ॥

किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह ।
किं कुर्वन्कर्म नृपतिरुभौ लोकौ समश्नुते ॥ ००१ ॥

भीष्म उवाच ॥

एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता ॥ ००२ ॥

श्रोत्रियान्ब्राह्मणान्वृद्धान्नित्यमेवाभिपूजयेत् ॥ ००२ ॥

पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सान्त्वेन भोगदानेन नमस्कारैस्तथार्चयेत् ॥ ००३ ॥

एतत्कृत्यतमं राज्ञो नित्यमेवेति लक्षयेत् ।
यथात्मानं यथा पुत्रांस्तथैतान्परिपालयेत् ॥ ००४ ॥

ये चाप्येषां पूज्यतमास्तान्दृढं प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ ००५ ॥

ते पूज्यास्ते नमस्कार्यास्ते रक्ष्याः पितरो यथा ।
तेष्वेव यात्रा लोकस्य भूतानामिव वासवे ॥ ००६ ॥

अभिचारैरुपायैश्च दहेयुरपि तेजसा ।
निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः ॥ ००७ ॥

नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ॥ ००८ ॥

विद्यन्तेषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ॥ ००९ ॥

प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे ।
सन्ति चैषामतिशठास्तथान्येऽतितपस्विनः ॥ ०१० ॥

कृषिगोरक्ष्यमप्यन्ये भैक्षमन्येऽप्यनुष्ठिताः ।
चोराश्चान्येऽनृताश्चान्ये तथान्ये नटनर्तकाः ॥ ०११ ॥

सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥ ०१२ ॥

नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम् ।
धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्तयेत् ॥ ०१३ ॥

पितृणां देवतानां च मनुष्योरगरक्षसाम् ।
पुरोहिता महाभागा ब्राह्मणा वै नराधिप ॥ ०१४ ॥

नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥ ०१५ ॥

अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत् ॥ ०१६ ॥

परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः ।
निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरावराः ॥ ०१७ ॥

परिकुप्यन्ति ते राजन्सततं द्विषतां द्विजाः ॥ ०१७ ॥

ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते ।
ब्राह्मणैर्यः पराक्रुष्टः पराभूयात्क्षणाद्धि सः ॥ ०१८ ॥

शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ ०१९ ॥

द्रमिळाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कौलाः सर्पा माहिषकास्तास्ताः क्षत्रियजातयः ॥ ०२० ॥

वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ।
श्रेयान्पराजयस्तेभ्यो न जयो जयतां वर ॥ ०२१ ॥

यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम् ।
ब्रह्मवध्या महान्दोष इत्याहुः परमर्षयः ॥ ०२२ ॥

परिवादो द्विजातीनां न श्रोतव्यः कथञ्चन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥ ०२३ ॥

न स जातो जनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥ ०२४ ॥

दुर्ग्रहो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥ ०२५ ॥

---

# पृथिवीवासुदेवसंवादः

## अध्याय ०३४

भीष्म उवाच ॥

ब्राह्मणानेव सततं भृशं संप्रतिपूजयेत् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ००१ ॥

एते भोगैरलङ्कारैरन्यैश्चैव किमिच्छकैः ।
सदा पूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः ॥ ००२ ॥

अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥ ००२ ॥

जायतां ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः ।
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ॥ ००३ ॥

ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितव्रतम् ।
वासयेत गृहे राजन्न तस्मात्परमस्ति वै ॥ ००४ ॥

ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः ।
पितरः सर्वभूतानां नैतेभ्यो विद्यते परम् ॥ ००५ ॥

आदित्यश्चन्द्रमा वायुर्भूमिरापोऽम्बरं दिशः ।
सर्वे ब्राह्मणमाविश्य सदान्नमुपभुञ्जते ॥ ००६ ॥

न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते ।
देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः ॥ ००७ ॥

ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा ।
तथैव देवता राजन्नात्र कार्या विचारणा ॥ ००८ ॥

तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः ।
न च प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम् ॥ ००९ ॥

येन येनैव हविषा ब्राह्मणांस्तर्पयेन्नरः ।
तेन तेनैव प्रीयन्ते पितरो देवतास्तथा ॥ ०१० ॥

ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः ।

यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति ॥ ०११ ॥

वेदैष मार्गं स्वर्गस्य तथैव नरकस्य च ।
आगतानागते चोभे ब्राह्मणो द्विपदां वरः ॥ ०१२ ॥

ब्राह्मणो भरतश्रेष्ठ स्वधर्मं वेद मेधया ॥ ०१२ ॥

ये चैनमनुवर्तन्ते ते न यान्ति पराभवम् ।
न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवम् ॥ ०१३ ॥

ये ब्राह्मणमुखात्प्राप्तं प्रतिगृह्णन्ति वै वचः ।
कृतात्मानो महात्मानस्ते न यान्ति पराभवम् ॥ ०१४ ॥

क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च ॥ ०१५ ॥

भृगवोऽजयंस्तालजङ्घान्नीपानङ्गिरसोऽजयन् ।
भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ ॥ ०१६ ॥

चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः ।
प्रक्षिप्याथ च कुम्भान्वै पारगामिनमारभेत् ॥ ०१७ ॥

यत्किञ्चित्कथ्यते लोके श्रूयते पश्यतेऽपि वा ।
सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु ॥ ०१८ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ ॥ ०१९ ॥

वासुदेव उवाच ॥

मातरं सर्वभूतानां पृच्छे त्वा संशयं शुभे ।

केन स्वित्कर्मणा पापं व्यपोहति नरो गृही ॥ ०२० ॥

पृथिव्युवाच ॥

ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमम् ।
ब्राह्मणान्सेवमानस्य रजः सर्वं प्रणश्यति ॥ ०२१ ॥

अतो भूतिरतः कीर्तिरतो बुद्धिः प्रजायते ।
अपरेषां परेषां च परेभ्यश्चैव ये परे ॥ ०२२ ॥

ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते ।
अथ यो ब्राह्मणाक्रुष्टः पराभवति सोऽचिरात् ॥ ०२३ ॥

यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति ।
तथा दुश्चरितं कर्म पराभावाय कल्पते ॥ ०२४ ॥

पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम् ।
तथा भगसहस्रेण महेन्द्रं परिचिह्नितम् ॥ ०२५ ॥

तेषामेव प्रभावेन सहस्रनयनो ह्यसौ ।
शतक्रतुः समभवत्पश्य माधव यादृशम् ॥ ०२६ ॥

इच्छन्भूतिं च कीर्तिं च लोकांश्च मधुसूदन ।
ब्राह्मणानुमते तिष्ठेत्पुरुषः शुचिरात्मवान् ॥ ०२७ ॥

इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः ।
साधु साध्वित्यथेत्युक्त्वा मेदिनीं प्रत्यपूजयत् ॥ ०२८ ॥

एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान् ।
सततं पूजयेथास्त्वं ततः श्रेयोऽभिपत्स्यसे ॥ ०२९ ॥

# अध्याय ०३५

भीष्म उवाच ॥

जन्मनैव महाभागो ब्राह्मणो नाम जायते ।
नमस्यः सर्वभूतानामतिथिः प्रसृताग्रभुक् ॥ ००१ ॥

सर्वान्नः सुहृदस्तात ब्राह्मणाः सुमनोमुखाः ।
गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्ति पूजिताः ॥ ००२ ॥

सर्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः ।
गीर्भिर्दारुणयुक्ताभिरभिहन्युरपूजिताः ॥ ००३ ॥

अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
सृष्ट्वा द्विजातीन्धाता हि यथापूर्वं समादधत् ॥ ००४ ॥

न वोऽन्यदिह कर्तव्यं किञ्चिदूर्ध्वं यथाविधि ।
गुप्ता गोपायत ब्रह्म श्रेयो वस्तेन शोभनम् ॥ ००५ ॥

स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति ।
प्रमाणं सर्वभूतानां प्रग्रहं च गमिष्यथ ॥ ००६ ॥

न शौद्रं कर्म कर्तव्यं ब्राह्मणेन विपश्चिता ।
शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते ॥ ००७ ॥

श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी ।
स्वाध्यायेनैव माहात्म्यं विमलं प्रतिपत्स्यथ ॥ ००८ ॥

हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः ।
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्यानुकल्पिताः ॥ ००९ ॥

श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया ।
दमस्वाध्यायनिरताः सर्वान्कामानवाप्स्यथ ॥ ०१० ॥

यच्चैव मानुषे लोके यच्च देवेषु किञ्चन ।
सर्वं तत्तपसा साध्यं ज्ञानेन विनयेन च ॥ ०११ ॥

इत्येता ब्रह्मगीतास्ते समाख्याता मयानघ ।
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता ॥ ०१२ ॥

भूयस्तेषां बलं मन्ये यथा राज्ञस्तपस्विनः ।
दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः ॥ ०१३ ॥

सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथापरे ।
वराहमृगसत्त्वाश्च गजसत्त्वास्तथापरे ॥ ०१४ ॥

कर्पासमृदवः केचित्तथान्ये मकरस्पृशः ।
विभाष्यघातिनः केचित्तथा चक्षुर्हणोऽपरे ॥ ०१५ ॥

सन्ति चाशीविषनिभाः सन्ति मन्दास्तथापरे ।
विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर ॥ ०१६ ॥

मेकला द्रमिडाः काशाः पौण्ड्राः कोल्लगिरास्तथा ।
शौण्डिका दरदा दर्वाश्चौराः शबरबर्बराः ॥ ०१७ ॥

किराता यवनाश्चैव तास्ताः क्षत्रियजातयः ।
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् ॥ ०१८ ॥

ब्राह्मणानां परिभवादसुराः सलिलेशयाः ।
ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः ॥ ०१९ ॥

अशक्यं स्प्रष्टुमाकाशमचाल्यो हिमवान्गिरिः ।
अवार्या सेतुना गङ्गा दुर्जया ब्राह्मणा भुवि ॥ ०२० ॥

न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥ ०२१ ॥

तान्पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम् ॥ ०२२ ॥

प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ ।
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वयानघ ॥ ०२३ ॥

---

# अध्याय ०३६

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शक्रशम्बरसंवादं तन्निबोध युधिष्ठिर ॥ ००१ ॥

शक्रो ह्यज्ञातरूपेण जटी भूत्वा रजोरुणः ।
विरूपं रूपमास्थाय प्रश्नं पप्रच्छ शम्बरम् ॥ ००२ ॥

केन शम्बर वृत्तेन स्वजात्यानधितिष्ठसि ।
श्रेष्ठं त्वां केन मन्यन्ते तन्मे प्रब्रूहि पृच्छतः ॥ ००३ ॥

शम्बर उवाच ॥

नासूयामि सदा विप्रान्ब्रह्माणं च पितामहम् ।
शास्त्राणि वदतो विप्रान्संमन्यामि यथासुखम् ॥ ००४ ॥

श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित् ।
अभ्यर्च्याननुपृच्छामि पादौ गृह्णामि धीमताम् ॥ ००५ ॥

ते विश्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ॥ ००६ ॥

ते मा शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकम् ।
समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ००७ ॥

यच्च भाषन्ति ते तुष्टास्तत्तद्गृह्णामि मेधया ।
समाधिमात्मनो नित्यमनुलोममचिन्तयन् ॥ ००८ ॥

सोऽहं वागग्रसृष्टानां रसानामवलेहकः ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ००९ ॥

एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्तते ॥ ०१० ॥

एतत्कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा ।
युद्धं पिता मे हृष्टात्मा विस्मितः प्रत्यपद्यत ॥ ०११ ॥

दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम् ।
पर्यपृच्छत्कथमिमे सिद्धा इति निशाकरम् ॥ ०१२ ॥

सोम उवाच ॥

ब्राह्मणास्तपसा सर्वे सिध्यन्ते वाग्बलाः सदा ।
भुजवीर्या हि राजानो वागस्त्राश्च द्विजातयः ॥ ०१३ ॥

प्रवसन्वाप्यधीयीत बह्वीर्दुर्वसतीर्वसन् ।
निर्मन्युरपि निर्मानो यतिः स्यात्समदर्शनः ॥ ०१४ ॥

अपि चेज्जातिसंपन्नः सर्वान्वेदान्पितुर्गृहे ।
श्लाघमान इवाधीयेद्ग्राम्य इत्येव तं विदुः ॥ ०१५ ॥

भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ०१६ ॥

अतिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः ।
गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ॥ ०१७ ॥

इत्येतन्मे पिता श्रुत्वा सोमादद्भुतदर्शनात् ।
ब्राह्मणान्पूजयामास तथैवाहं महाव्रतान् ॥ ०१८ ॥

भीष्म उवाच ॥

श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतम् ।
द्विजान्संपूजयामास महेन्द्रत्वमवाप च ॥ ०१९ ॥

# पात्रपरीक्षा

## अध्याय ०३७

युधिष्ठिर उवाच ॥

अपूर्वं वा भवेत्पात्रमथ वापि चिरोषितम् ।
दूरादभ्यागतं वापि किं पात्रं स्यात्पितामह ॥ ००१ ॥

भीष्म उवाच ॥

क्रिया भवति केषाञ्चिदुपांशुव्रतमुत्तमम् ।
यो यो याचेत यत्किञ्चित्सर्वं दद्याम इत्युत ॥ ००२ ॥

अपीडयन्भृत्यवर्गमित्येवमनुशुश्रुम ।
पीडयन्भृत्यवर्गं हि आत्मानमपकर्षति ॥ ००३ ॥

अपूर्वं वापि यत्पात्रं यच्चापि स्याच्चिरोषितम् ।
दूरादभ्यागतं चापि तत्पात्रं च विदुर्बुधाः ॥ ००४ ॥

युधिष्ठिर उवाच ॥

अपीडया च भृत्यानां धर्मस्याहिंसया तथा ।
पात्रं विद्याम तत्त्वेन यस्मै दत्तं न संतपेत् ॥ ००५ ॥

भीष्म उवाच ॥

ऋत्विक्पुरोहिताचार्याः शिष्याः संबन्धिबान्धवाः ।
सर्वे पूज्याश्च मान्याश्च श्रुतवृत्तोपसंहिताः ॥ ००६ ॥

अतोऽन्यथा वर्तमानाः सर्वे नार्हन्ति सत्क्रियाम् ।

तस्मान्नित्यं परीक्षेत पुरुषान्प्रणिधाय वै  ॥ ००७  ॥

अक्रोधः सत्यवचनमहिंसा दम आर्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा तपः शमः  ॥ ००८  ॥

यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत ।
भावतो विनिविष्टानि तत्पात्रं मानमर्हति  ॥ ००९  ॥

तथा चिरोषितं चापि संप्रत्यागतमेव च ।
अपूर्वं चैव पूर्वं च तत्पात्रं मानमर्हति  ॥ ०१०  ॥

अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
सर्वत्र चानवस्थानमेतन्नाशनमात्मनः  ॥ ०११  ॥

भवेत्पण्डितमानी यो ब्राह्मणो वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्  ॥ ०१२  ॥

हेतुवादान्ब्रुवन्सत्सु विजेताहेतुवादिकः ।
आक्रोष्टा चातिवक्ता च ब्राह्मणानां सदैव हि  ॥ ०१३  ॥

सर्वाभिशङ्की मूढश्च बालः कटुकवागपि ।
बोद्धव्यस्तादृशस्तात नरश्वानं हि तं विदुः  ॥ ०१४  ॥

यथा श्वा भषितुं चैव हन्तुं चैवावसृज्यते ।
एवं संभाषणार्थाय सर्वशास्त्रवधाय च  ॥ ०१५  ॥

अल्पश्रुताः कुतर्काश्च दृष्टाः स्पृष्टाः कुपण्डिताः  ॥ ०१५  ॥

श्रुतिस्मृतीतिहासादिपुराणारण्यवेदिनः ।
अनुरुन्ध्याद्बहुज्ञांश्च सारज्ञांश्चैव पण्डितान्  ॥ ०१६  ॥

लोकयात्रा च द्रष्टव्या धर्मश्चात्महितानि च ।
एवं नरो वर्तमानः शाश्वतीरेधते समाः ॥ ०१७ ॥

ऋणमुन्मुच्य देवानामृषीणां च तथैव च ।
पितृणामथ विप्राणामतिथीनां च पञ्चमम् ॥ ०१८ ॥

पर्यायेण विशुद्धेन सुनिर्णिक्तेन कर्मणा ।
एवं गृहस्थः कर्माणि कुर्वन्धर्मान्न हीयते ॥ ०१९ ॥

---

# स्त्रीस्वभावकथनम्

## अध्याय ०३८

युधिष्ठिर उवाच ॥

स्त्रीणां स्वभावमिच्छामि श्रोतुं भरतसत्तम ।
स्त्रियो हि मूलं दोषाणां लघुचित्ताः पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं पुंश्चल्या पञ्चचूडया ॥ ००२ ॥

लोकाननुचरन्धीमान्देवर्षिर्नारदः पुरा ।
ददर्शाप्सरसं ब्राह्मीं पञ्चचूडामनिन्दिताम् ॥ ००३ ॥

तां दृष्ट्वा चारुसर्वाङ्गीं पप्रच्छाप्सरसं मुनिः ।

संशयो हृदि मे कश्चित्तन्मे ब्रूहि सुमध्यमे ॥ ००४ ॥

एवमुक्ता तु सा विप्रं प्रत्युवाचाथ नारदम् ।
विषये सति वक्ष्यामि समर्थां मन्यसे च माम् ॥ ००५ ॥

नारद उवाच ॥

न त्वामविषये भद्रे नियोक्ष्यामि कथञ्चन ।
स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं वरानने ॥ ००६ ॥

भीष्म उवाच ॥

एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा ।
प्रत्युवाच न शक्ष्यामि स्त्री सती निन्दितुं स्त्रियः ॥ ००७ ॥

विदितास्ते स्त्रियो याश्च यादृशाश्च स्वभावतः ।
न मामर्हसि देवर्षे नियोक्तुं प्रश्न ईदृशे ॥ ००८ ॥

तामुवाच स देवर्षिः सत्यं वद सुमध्यमे ।
मृषावादे भवेद्दोषः सत्ये दोषो न विद्यते ॥ ००९ ॥

इत्युक्ता सा कृतमतिरभवच्चारुहासिनी ।
स्त्रीदोषाञ्शाश्वतान्सत्यान्भाषितुं संप्रचक्रमे ॥ ०१० ॥

पञ्चचूडोवाच ॥

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ॥ ०११ ॥

न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै ।
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ ह ॥ ०१२ ॥

समाज्ञातानृद्धिमतः प्रतिरूपान्वशे स्थितान् ।
पतीनन्तरमासाद्य नालं नार्यः प्रतीक्षितुम्  ॥ ०१३  ॥

असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो ।
पापीयसो नरान्यद्वै लज्जां त्यक्त्वा भजामहे  ॥ ०१४  ॥

स्त्रियं हि यः प्रार्थयते संनिकर्षं च गच्छति ।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः  ॥ ०१५  ॥

अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु  ॥ ०१६  ॥

नासां कश्चिदगम्योऽस्ति नासां वयसि संस्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते  ॥ ०१७  ॥

न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथञ्चन ।
न ज्ञातिकुलसंबन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु  ॥ ०१८  ॥

यौवने वर्तमानानां मृष्टाभरणवाससाम् ।
नारीणां स्वैरवृत्तानां स्पृहयन्ति कुलस्त्रियः  ॥ ०१९  ॥

याश्च शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः ।
अपि ताः संप्रसज्जन्ते कुब्जान्धजडवामनैः  ॥ ०२०  ॥

पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता नराः ।
स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने  ॥ ०२१  ॥

यदि पुंसां गतिर्ब्रह्म कथञ्चिन्नोपपद्यते ।
अप्यन्योन्यं प्रवर्तन्ते न हि तिष्ठन्ति भर्तृषु  ॥ ०२२  ॥

अलाभात्पुरुषाणां हि भयात्परिजनस्य च ।
वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः ॥ ०२३ ॥

चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा ।
प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रियः ॥ ०२४ ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ०२५ ॥

इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम् ।
दृष्ट्वैव पुरुषं हृद्यं योनिः प्रक्लिद्यते स्त्रियः ॥ ०२६ ॥

कामानामपि दातारं कर्तारं मानसान्त्वयोः ।
रक्षितारं न मृष्यन्ति भर्तारं परमं स्त्रियः ॥ ०२७ ॥

न कामभोगान्बहुलान्नालङ्कारार्थसञ्चयान् ।
तथैव बहु मन्यन्ते यथा रत्यामनुग्रहम् ॥ ०२८ ॥

अन्तकः शमनो मृत्युः पातालं वडवामुखम् ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ ०२९ ॥

यतश्च भूतानि महान्ति पञ्च ; यतश्च लोका विहिता विधात्रा ।
यतः पुमांसः प्रमदाश्च निर्मिता ;स्तदैव दोषाः प्रमदासु नारद ॥ ०३० ॥

---

# अध्याय ०३९

युधिष्ठिर उवाच ॥

इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभीक्ष्णशः ।
मोहेन परमाविष्टा दैवादिष्टेन पार्थिव ॥ ००१ ॥

स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकम् ॥ ००१ ॥

अत्र मे संशयस्तीव्रो हृदि संपरिवर्तते ।
कथमासां नराः सङ्गं कुर्वते कुरुनन्दन ॥ ००२ ॥

स्त्रियो वा तेषु रज्यन्ते विरज्यन्तेऽथ वा पुनः ॥ ००२ ॥

इति ताः पुरुषव्याघ्र कथं शक्याः स्म रक्षितुम् ।
प्रमदाः पुरुषेणेह तन्मे व्याख्यातुमर्हसि ॥ ००३ ॥

एता हि मयमायाभिर्वञ्चयन्तीह मानवान् ।
न चासां मुच्यते कश्चित्पुरुषो हस्तमागतः ॥ ००४ ॥

गावो नवतृणानीव गृह्णन्त्येव नवान्नवान् ॥ ००४ ॥

शम्बरस्य च या माया या माया नमुचेरपि ।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ ००५ ॥

हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ।
अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः ॥ ००६ ॥

उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्त्रीबुद्ध्या न विशिष्येते ताः स्म रक्ष्याः कथं नरैः ॥ ००७ ॥

अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् ।
इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ॥ ००८ ॥

स्त्रीणां बुद्ध्युपनिष्कर्षादर्थशास्त्राणि शत्रुहन् ।

बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै  ॥ ००९  ॥

संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु ।
अपास्ताश्च तथा राजन्विकुर्वन्ति मनः स्त्रियः  ॥ ०१०  ॥

कस्ताः शक्तो रक्षितुं स्यादिति मे संशयो महान् ।
तन्मे ब्रूहि महाबाहो कुरूणां वंशवर्धन  ॥ ०११  ॥

यदि शक्या कुरुश्रेष्ठ रक्षा तासां कथञ्चन ।
कर्तुं वा कृतपूर्वा वा तन्मे व्याख्यातुमर्हसि  ॥ ०१२  ॥

---

# विपुलोपाख्यानम्

## अध्याय ०४०

भीष्म उवाच  ॥

एवमेतन्महाबाहो नात्र मिथ्यास्ति किञ्चन ।
यथा ब्रवीषि कौरव्य नारीं प्रति जनाधिप  ॥ ००१  ॥

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
यथा रक्षा कृता पूर्वं विपुलेन महात्मना  ॥ ००२  ॥

प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ ।
यदर्थं तच्च ते तात प्रवक्ष्ये वसुधाधिप  ॥ ००३  ॥

न हि स्त्रीभ्य परं पुत्र पापीयः किञ्चिदस्ति वै ।

अग्निर्हि प्रमदा दीप्तो मायाश्च मयजा विभो ॥ ००४ ॥

क्षुरधारा विषं सर्पो मृत्युरित्येकतः स्त्रियः ॥ ००४ ॥

इमाः प्रजा महाबाहो धार्मिका इति नः श्रुतम् ।
स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयम् ॥ ००५ ॥

अथाभ्यगच्छन्देवास्ते पितामहमरिंदम ।
निवेद्य मानसं चापि तूष्णीमासन्नवाङ्मुखाः ॥ ००६ ॥

तेषामन्तर्गतं ज्ञात्वा देवानां स पितामहः ।
मानवानां प्रमोहार्थं कृत्या नार्योऽसृजत्प्रभुः ॥ ००७ ॥

पूर्वसर्गे तु कौन्तेय साध्व्यो नार्य इहाभवन् ।
असाध्व्यस्तु समुत्पन्ना कृत्या सर्गात्प्रजापतेः ॥ ००८ ॥

ताभ्यः कामान्यथाकामं प्रादाद्धि स पितामहः ।
ताः कामलुब्धाः प्रमदाः प्रामथ्नन्त नरांस्तदा ॥ ००९ ॥

क्रोधं कामस्य देवेशः सहायं चासृजत्प्रभुः ।
असज्जन्त प्रजाः सर्वाः कामक्रोधवशं गताः ॥ ०१० ॥

न च स्त्रीणां क्रिया काचिदिति धर्मो व्यवस्थितः ।
निरिन्द्रिया अमन्त्राश्च स्त्रियोऽनृतमिति श्रुतिः ॥ ०११ ॥

शय्यासनमलङ्कारमन्नपानमनार्यताम् ।
दुर्वाग्भावं रतिं चैव ददौ स्त्रीभ्यः प्रजापतिः ॥ ०१२ ॥

न तासां रक्षणं कर्तुं शक्यं पुंसा कथञ्चन ।
अपि विश्वकृता तात कुतस्तु पुरुषैरिह ॥ ०१३ ॥

वाचा वा वधबन्धैर्वा क्लेशैर्वा विविधैस्तथा ।
न शक्या रक्षितुं नार्यस्ता हि नित्यमसंयताः ॥ ०१४ ॥

इदं तु पुरुषव्याघ्र पुरस्ताच्छ्रुतवानहम् ।
यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियः ॥ ०१५ ॥

ऋषिरासीन्महाभागो देवशर्मेति विश्रुतः ।
तस्य भार्या रुचिर्नाम रूपेणासदृशी भुवि ॥ ०१६ ॥

तस्य रूपेण संमत्ता देवगन्धर्वदानवाः ।
विशेषतस्तु राजेन्द्र वृत्रहा पाकशासनः ॥ ०१७ ॥

नारीणां चरितज्ञश्च देवशर्मा महामुनिः ।
यथाशक्ति यथोत्साहं भार्यां तामभ्यरक्षत ॥ ०१८ ॥

पुरंदरं च जानीते परस्त्रीकामचारिणम् ।
तस्माद्यत्नेन भार्याया रक्षणं स चकार ह ॥ ०१९ ॥

स कदाचिदृषिस्तात यज्ञं कर्तुमनास्तदा ।
भार्यासंरक्षणं कार्यं कथं स्यादित्यचिन्तयत् ॥ ०२० ॥

रक्षाविधानं मनसा स विचिन्त्य महातपाः ।
आहूय दयितं शिष्यं विपुलं प्राह भार्गवम् ॥ ०२१ ॥

यज्ञकारो गमिष्यामि रुचिं चेमां सुरेश्वरः ।
पुत्र प्रार्थयते नित्यं तां रक्षस्व यथाबलम् ॥ ०२२ ॥

अप्रमत्तेन ते भाव्यं सदा प्रति पुरंदरम् ।
स हि रूपाणि कुरुते विविधानि भृगूद्वह ॥ ०२३ ॥

इत्युक्तो विपुलस्तेन तपस्वी नियतेन्द्रियः ।

सदैवोग्रतपा राजन्नग्न्यर्कसदृशद्युतिः ॥ ०२४ ॥

धर्मज्ञः सत्यवादी च तथेति प्रत्यभाषत ।
पुनश्चेदं महाराज पप्रच्छ प्रथितं गुरुम् ॥ ०२५ ॥

कानि रूपाणि शक्रस्य भवन्त्यागच्छतो मुने ।
वपुस्तेजश्च कीदृग्वै तन्मे व्याख्यातुमर्हसि ॥ ०२६ ॥

ततः स भगवांस्तस्मै विपुलाय महात्मने ।
आचचक्षे यथातत्त्वं मायां शक्रस्य भारत ॥ ०२७ ॥

बहुमायः स विप्रर्षे बलहा पाकशासनः ।
तांस्तान्विकुरुते भावान्बहूनथ मुहुर्मुहुः ॥ ०२८ ॥

किरीटी वज्रभृद्धन्वी मुकुटी बद्धकुण्डलः ।
भवत्यथ मुहूर्तेन चण्डालसमदर्शनः ॥ ०२९ ॥

शिखी जटी चीरवासाः पुनर्भवति पुत्रक ।
बृहच्छरीरश्च पुनः पीवरोऽथ पुनः कृशः ॥ ०३० ॥

गौरं श्यामं च कृष्णं च वर्णं विकुरुते पुनः ।
विरूपो रूपवांश्चैव युवा वृद्धस्तथैव च ॥ ०३१ ॥

प्राज्ञो जडश्च मूकश्च ह्रस्वो दीर्घस्तथैव च ।
ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च ॥ ०३२ ॥

प्रतिलोमानुलोमश्च भवत्यथ शतक्रतुः ॥ ०३२ ॥

शुकवायसरूपी च हंसकोकिलरूपवान् ।
सिंहव्याघ्रगजानां च रूपं धारयते पुनः ॥ ०३३ ॥

दैवं दैत्यमथो राज्ञां वपुर्धारयतेऽपि च ।
सुकृशो वायुभग्नाङ्गः शकुनिर्विकृतस्तथा ॥ ०३४ ॥

चतुष्पाद्बहुरूपश्च पुनर्भवति बालिशः ।
मक्षिकामशकादीनां वपुर्धारयतेऽपि च ॥ ०३५ ॥

न शक्यमस्य ग्रहणं कर्तुं विपुल केनचित् ।
अपि विश्वकृता तात येन सृष्टमिदं जगत् ॥ ०३६ ॥

पुनरन्तर्हितः शक्रो दृश्यते ज्ञानचक्षुषा ।
वायुभूतश्च स पुनर्देवराजो भवत्युत ॥ ०३७ ॥

एवं रूपाणि सततं कुरुते पाकशासनः ।
तस्माद्विपुल यत्नेन रक्षेमां तनुमध्यमाम् ॥ ०३८ ॥

यथा रुचिं नावलिहेद्देवेन्द्रो भृगुसत्तम ।
क्रतावुपहितं न्यस्तं हविः श्वेव दुरात्मवान् ॥ ०३९ ॥

एवमाख्याय स मुनिर्यज्ञकारोऽगमत्तदा ।
देवशर्मा महाभागस्ततो भरतसत्तम ॥ ०४० ॥

विपुलस्तु वचः श्रुत्वा गुरोश्चिन्तापरोऽभवत् ।
रक्षां च परमां चक्रे देवराजान्महाबलात् ॥ ०४१ ॥

किं नु शक्यं मया कर्तुं गुरुदाराभिरक्षणे ।
मायावी हि सुरेन्द्रोऽसौ दुर्धर्षश्चापि वीर्यवान् ॥ ०४२ ॥

नापिधायाश्रमं शक्यो रक्षितुं पाकशासनः ।
उटजं वा तथा ह्यस्य नानाविधसरूपता ॥ ०४३ ॥

वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत् ।

तस्मादिमां संप्रविश्य रुचिं स्थास्येऽहमद्य वै ॥ ०४४ ॥

अथ वा पौरुषेणेयमशक्या रक्षितुं मया ।
बहुरूपो हि भगवाञ्छ्रूयते हरिवाहनः ॥ ०४५ ॥

सोऽहं योगबलादेनां रक्षिष्ये पाकशासनात् ।
गात्राणि गात्रैरस्याहं संप्रवेक्ष्येऽभिरक्षितुम् ॥ ०४६ ॥

यद्युच्छिष्टामिमां पत्नीं रुचिं पश्येत मे गुरुः ।
शप्स्यत्यसंशयं कोपाद्दिव्यज्ञानो महातपाः ॥ ०४७ ॥

न चेयं रक्षितुं शक्या यथान्या प्रमदा नृभिः ।
मायावी हि सुरेन्द्रोऽसावहो प्राप्तोऽस्मि संशयम् ॥ ०४८ ॥

अवश्यकरणीयं हि गुरोरिह हि शासनम् ।
यदि त्वेतदहं कुर्यामाश्चर्यं स्यात्कृतं मया ॥ ०४९ ॥

योगेनानुप्रविश्येह गुरुपत्न्याः कलेवरम् ।
निर्मुक्तस्य रजोरूपान्नापराधो भवेन्मम ॥ ०५० ॥

यथा हि शून्यां पथिकः सभामध्यावसेत्पथि ।
तथाद्यावासयिष्यामि गुरुपत्न्याः कलेवरम् ॥ ०५१ ॥

असक्तः पद्मपत्रस्थो जलबिन्दुर्यथा चलः ।
एवमेव शरीरेऽस्या निवत्स्यामि समाहितः ॥ ०५२ ॥

इत्येवं धर्ममालोक्य वेदवेदांश्च सर्वशः ।
तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च ॥ ०५३ ॥

इति निश्चित्य मनसा रक्षां प्रति स भार्गवः ।
आतिष्ठत्परमं यत्नं यथा तच्छृणु पार्थिव ॥ ०५४ ॥

गुरुपत्नीमुपासीनो विपुलः स महातपाः ।
उपासीनामनिन्द्याङ्गीं कथाभिः समलोभयत् ॥ ०५५ ॥

नेत्राभ्यां नेत्रयोरस्या रश्मीन्संयोज्य रश्मिभिः ।
विवेश विपुलः कायमाकाशं पवनो यथा ॥ ०५६ ॥

लक्षणं लक्षणेनैव वदनं वदनेन च ।
अविचेष्टन्नतिष्ठद्वै छायेवान्तर्गतो मुनिः ॥ ०५७ ॥

ततो विष्टभ्य विपुलो गुरुपत्न्याः कलेवरम् ।
उवास रक्षणे युक्तो न च सा तमबुध्यत ॥ ०५८ ॥

यं कालं नागतो राजन्गुरुस्तस्य महात्मनः ।
क्रतुं समाप्य स्वगृहं तं कालं सोऽभ्यरक्षत ॥ ०५९ ॥

---

# अध्याय ०४१

भीष्म उवाच ॥

ततः कदाचिद्देवेन्द्रो दिव्यरूपवपुर्धरः ।
इदमन्तरमित्येवं ततोऽभ्यागादथाश्रमम् ॥ ००१ ॥

रूपमप्रतिमं कृत्वा लोभनीयं जनाधिप ।
दर्शनीयतमो भूत्वा प्रविवेश तमाश्रमम् ॥ ००२ ॥

स ददर्श तमासीनं विपुलस्य कलेवरम् ।
निश्चेष्टं स्तब्धनयनं यथालेख्यगतं तथा ॥ ००३ ॥

रुचिं च रुचिरापाङ्गीं पीनश्रोणिपयोधराम् ।
पद्मपत्रविशालाक्षीं संपूर्णेन्दुनिभाननाम्  ॥ ००४  ॥

सा तमालोक्य सहसा प्रत्युत्थातुमियेष ह ।
रूपेण विस्मिता कोऽसीत्यथ वक्तुमिहेच्छती  ॥ ००५  ॥

उत्थातुकामापि सती व्यतिष्ठद्विपुलेन सा ।
निगृहीता मनुष्येन्द्र न शशाक विचेष्टितुम्  ॥ ००६  ॥

तामाबभाषे देवेन्द्रः साम्ना परमवल्गुना ।
त्वदर्थमागतं विद्धि देवेन्द्रं मां शुचिस्मिते  ॥ ००७  ॥

क्लिश्यमानमनङ्गेन त्वत्सङ्कल्पोद्भवेन वै ।
तत्पर्याप्नुहि मां सुभ्रु पुरा कालोऽतिवर्तते  ॥ ००८  ॥

तमेवंवादिनं शक्रं शुश्राव विपुलो मुनिः ।
गुरुपत्न्याः शरीरस्थो ददर्श च सुराधिपम्  ॥ ००९  ॥

न शशाक च सा राजन्प्रत्युत्थातुमनिन्दिता ।
वक्तुं च नाशकद्राजन्विष्टब्धा विपुलेन सा  ॥ ०१०  ॥

आकारं गुरुपत्न्यास्तु विज्ञाय स भृगूद्वहः ।
निजग्राह महातेजा योगेन बलवत्प्रभो  ॥ ०११  ॥

बबन्ध योगबन्धैश्च तस्याः सर्वेन्द्रियाणि सः  ॥ ०११  ॥

तां निर्विकारां दृष्ट्वा तु पुनरेव शचीपतिः ।
उवाच व्रीडितो राजंस्तां योगबलमोहिताम्  ॥ ०१२  ॥

एह्येहीति ततः सा तं प्रतिवक्तुमियेष च ।

स तां वाचं गुरोः पत्न्या विपुलः पर्यवर्तयत् ॥ ०१३ ॥

भोः किमागमने कृत्यमिति तस्याश्च निःसृता ।
वक्राच्छशाङ्कप्रतिमाद्वाणी संस्कारभूषिता ॥ ०१४ ॥

व्रीडिता सा तु तद्वाक्यमुक्त्वा परवशा तदा ।
पुरंदरश्च संत्रस्तो बभूव विमनास्तदा ॥ ०१५ ॥

स तद्वैकृतमालक्ष्य देवराजो विशां पते ।
अवैक्षत सहस्राक्षस्तदा दिव्येन चक्षुषा ॥ ०१६ ॥

ददर्श च मुनिं तस्याः शरीरान्तरगोचरम् ।
प्रतिबिम्बमिवादर्शे गुरुपत्न्याः शरीरगम् ॥ ०१७ ॥

स तं घोरेण तपसा युक्तं दृष्ट्वा पुरंदरः ।
प्रावेपत सुसंत्रस्तः शापभीतस्तदा विभो ॥ ०१८ ॥

विमुच्य गुरुपत्नीं तु विपुलः सुमहातपाः ।
स्वं कलेवरमाविश्य शक्रं भीतमथाब्रवीत् ॥ ०१९ ॥

अजितेन्द्रिय पापात्मन्कामात्मक पुरंदर ।
न चिरं पूजयिष्यन्ति देवास्त्वां मानुषास्तथा ॥ ०२० ॥

किं नु तद्विस्मृतं शक्र न तन्मनसि ते स्थितम् ।
गौतमेनासि यन्मुक्तो भगाङ्कपरिचिह्नितः ॥ ०२१ ॥

जाने त्वां बालिशमतिमकृतात्मानमस्थिरम् ।
मयेयं रक्ष्यते मूढ गच्छ पाप यथागतम् ॥ ०२२ ॥

नाहं त्वामद्य मूढात्मन्दहेयं हि स्वतेजसा ।
कृपायमाणस्तु न ते दग्धुमिच्छामि वासव ॥ ०२३ ॥

स च घोरतपा धीमान्गुरुर्मे पापचेतसम् ।
दृष्ट्वा त्वां निर्दहेदद्य क्रोधदीप्तेन चक्षुषा ॥ ०२४ ॥

नैवं तु शक्र कर्तव्यं पुनर्मान्याश्च ते द्विजाः ।
मा गमः ससुतामात्योऽत्ययं ब्रह्मबलार्दितः ॥ ०२५ ॥

अमरोऽस्मीति यद्बुद्धिमेतामास्थाय वर्तसे ।
मावमंस्था न तपसामसाध्यं नाम किञ्चन ॥ ०२६ ॥

तच्छ्रुत्वा वचनं शक्रो विपुलस्य महात्मनः ।
अकिञ्चिदुक्त्वा व्रीडितस्तत्रैवान्तरधीयत ॥ ०२७ ॥

मुहूर्तयाते शक्रे तु देवशर्मा महातपाः ।
कृत्वा यज्ञं यथाकाममाजगाम स्वमाश्रमम् ॥ ०२८ ॥

आगतेऽथ गुरौ राजन्विपुलः प्रियकर्मकृत् ।
रक्षितां गुरवे भार्यां न्यवेदयदनिन्दिताम् ॥ ०२९ ॥

अभिवाद्य च शान्तात्मा स गुरुं गुरुवत्सलः ।
विपुलः पर्युपातिष्ठद्यथापूर्वमशङ्कितः ॥ ०३० ॥

विश्रान्ताय ततस्तस्मै सहासीनाय भार्यया ।
निवेदयामास तदा विपुलः शक्रकर्म तत् ॥ ०३१ ॥

तच्छ्रुत्वा स मुनिस्तुष्टो विपुलस्य प्रतापवान् ।
बभूव शीलवृत्ताभ्यां तपसा नियमेन च ॥ ०३२ ॥

विपुलस्य गुरौ वृत्तिं भक्तिमात्मनि च प्रभुः ।
धर्मे च स्थिरतां दृष्ट्वा साधु साध्वित्युवाच ह ॥ ०३३ ॥

प्रतिनन्द्य च धर्मात्मा शिष्यं धर्मपरायणम् ।
वरेण च्छन्दयामास स तस्माद्गुरुवत्सलः ॥ ०३४ ॥

अनुज्ञातश्च गुरुणा चचारानुत्तमं तपः ॥ ०३४ ॥

तथैव देवशर्मापि सभार्यः स महातपाः ।
निर्भयो बलवृत्रघ्नाच्चचार विजने वने ॥ ०३५ ॥

---

# अध्याय ०४२

भीष्म उवाच ॥

विपुलस्त्वकरोत्तीव्रं तपः कृत्वा गुरोर्वचः ।
तपोयुक्तमथात्मानममन्यत च वीर्यवान् ॥ ००१ ॥

स तेन कर्मणा स्पर्धन्पृथिवीं पृथिवीपते ।
चचार गतभीः प्रीतो लब्धकीर्तिर्वरो नृषु ॥ ००२ ॥

उभौ लोकौ जितौ चापि तथैवामन्यत प्रभुः ।
कर्मणा तेन कौरव्य तपसा विपुलेन च ॥ ००३ ॥

अथ काले व्यतिक्रान्ते कस्मिंश्चित्कुरुनन्दन ।
रुच्या भगिन्या दानं वै बभूव धनधान्यवत् ॥ ००४ ॥

एतस्मिन्नेव काले तु दिव्या काचिद्वराङ्गना ।
बिभ्रती परमं रूपं जगामाथ विहायसा ॥ ००५ ॥

तस्याः शरीरात्पुष्पाणि पतितानि महीतले ।
तस्याश्रमस्याविदूरे दिव्यगन्धानि भारत ॥ ००६ ॥

तान्यगृह्णात्ततो राजन्रुचिर्नलिनलोचना ।
तदा निमन्त्रकस्तस्या अङ्गेभ्यः क्षिप्रमागमत् ॥ ००७ ॥

तस्या हि भगिनी तात ज्येष्ठा नाम्ना प्रभावती ।
भार्या चित्ररथस्याथ बभूवाङ्गेश्वरस्य वै ॥ ००८ ॥

पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी ।
आमन्त्रिता ततोऽगच्छद्रुचिरङ्गपतेर्गृहान् ॥ ००९ ॥

पुष्पाणि तानि दृष्ट्वाथ तदाङ्गेन्द्रवराङ्गना ।
भगिनीं चोदयामास पुष्पार्थे चारुलोचना ॥ ०१० ॥

सा भर्त्रे सर्वमाचष्ट रुचिः सुरुचिरानना ।
भगिन्या भाषितं सर्वमृषिस्तच्चाभ्यनन्दत ॥ ०११ ॥

ततो विपुलमानाय्य देवशर्मा महातपाः ।
पुष्पार्थे चोदयामास गच्छ गच्छेति भारत ॥ ०१२ ॥

विपुलस्तु गुरोर्वाक्यमविचार्य महातपाः ।
स तथेत्यब्रवीद्राजंस्तं च देशं जगाम ह ॥ ०१३ ॥

यस्मिन्देशे तु तान्यासन्पतितानि नभस्तलात् ।
अम्लानान्यपि तत्रासन्कुसुमान्यपराण्यपि ॥ ०१४ ॥

ततः स तानि जग्राह दिव्यानि रुचिराणि च ।
प्राप्तानि स्वेन तपसा दिव्यगन्धानि भारत ॥ ०१५ ॥

संप्राप्य तानि प्रीतात्मा गुरोर्वचनकारकः ।

ततो जगाम तूर्णं च चम्पां चम्पकमालिनीम्  ॥ ०१६  ॥

स वने विजने तात ददर्श मिथुनं नृणाम् ।
चक्रवत्परिवर्तन्तं गृहीत्वा पाणिना करम्  ॥ ०१७  ॥

तत्रैकस्तूर्णमगमत्तत्पदे परिवर्तयन् ।
एकस्तु न तथा राजंश्चक्रतुः कलहं ततः  ॥ ०१८  ॥

त्वं शीघ्रं गच्छसीत्येकोऽब्रवीन्नेति तथापरः ।
नेति नेति च तौ तात परस्परमथोचतुः  ॥ ०१९  ॥

तयोर्विस्पर्धतोरेवं शपथोऽयमभूत्तदा ।
मनसोद्दिश्य विपुलं ततो वाक्यमथोचतुः  ॥ ०२०  ॥

आवयोरनृतं प्राह यस्तस्याथ द्विजस्य वै ।
विपुलस्य परे लोके या गतिः सा भवेदिति  ॥ ०२१  ॥

एतच्छ्रुत्वा तु विपुलो विषण्णवदनोऽभवत् ।
एवं तीव्रतपाश्चाहं कष्टश्चायं परिग्रहः  ॥ ०२२  ॥

मिथुनस्यास्य किं मे स्यात्कृतं पापं यतो गतिः ।
अनिष्टा सर्वभूतानां कीर्तितानेन मेऽद्य वै  ॥ ०२३  ॥

एवं सञ्चिन्तयन्नेव विपुलो राजसत्तम ।
अवाङ्मुखो न्यस्तशिरा दध्यौ दुष्कृतमात्मनः  ॥ ०२४  ॥

ततः षडन्यान्पुरुषानक्षैः काञ्चनराजतैः ।
अपश्यद्दीव्यमानान्वै लोभहर्षान्वितांस्तथा  ॥ ०२५  ॥

कुर्वतः शपथं तं वै यः कृतो मिथुनेन वै ।
विपुलं वै समुद्दिश्य तेऽपि वाक्यमथाब्रुवन्  ॥ ०२६  ॥

यो लोभमास्थायास्माकं विषमं कर्तुमुत्सहेत् ।
विपुलस्य परे लोके या गतिस्तामवाप्नुयात्  ॥ ०२७  ॥

एतच्छ्रुत्वा तु विपुलो नापश्यद्धर्मसङ्करम् ।
जन्मप्रभृति कौरव्य कृतपूर्वमथात्मनः  ॥ ०२८  ॥

स प्रदध्यौ तदा राजन्नग्नावग्निरिवाहितः ।
दह्यमानेन मनसा शापं श्रुत्वा तथाविधम्  ॥ ०२९  ॥

तस्य चिन्तयतस्तात बह्व्यो दिननिशा ययुः ।
इदमासीन्मनसि च रुच्या रक्षणकारितम्  ॥ ०३०  ॥

लक्षणं लक्षणेनैव वदनं वदनेन च ।
विधाय न मया चोक्तं सत्यमेतद्गुरोस्तदा  ॥ ०३१  ॥

एतदात्मनि कौरव्य दुष्कृतं विपुलस्तदा ।
अमन्यत महाभाग तथा तच्च न संशयः  ॥ ०३२  ॥

स चम्पां नगरीमेत्य पुष्पाणि गुरवे ददौ ।
पूजयामास च गुरुं विधिवत्स गुरुप्रियः  ॥ ०३३  ॥

---

# अध्याय ०४३

भीष्म उवाच  ॥

तमागतमभिप्रेक्ष्य शिष्यं वाक्यमथाब्रवीत् ।
देवशर्मा महातेजा यत्तच्छृणु नराधिप  ॥ ००१  ॥

देवशर्मोवाच ॥

किं ते विपुल दृष्टं वै तस्मिन्नद्य महावने ।
ते त्वा जानन्ति निपुण आत्मा च रुचिरेव च ॥ ००२ ॥

विपुल उवाच ॥

ब्रह्मर्षे मिथुनं किं तत्के च ते पुरुषा विभो ।
ये मां जानन्ति तत्त्वेन तांश्च मे वक्तुमर्हसि ॥ ००३ ॥

देवशर्मोवाच ॥

यद्वै तन्मिथुनं ब्रह्मन्नहोरात्रं हि विद्धि तत् ।
चक्रवत्परिवर्तेत तत्ते जानाति दुष्कृतम् ॥ ००४ ॥

ये च ते पुरुषा विप्र अक्षैर्दीव्यन्ति हृष्टवत् ।
ऋतूंस्तानभिजानीहि ते ते जानन्ति दुष्कृतम् ॥ ००५ ॥

न मां कश्चिद्विजानीत इति कृत्वा न विश्वसेत् ।
नरो रहसि पापात्मा पापकं कर्म वै द्विज ॥ ००६ ॥

कुर्वाणं हि नरं कर्म पापं रहसि सर्वदा ।
पश्यन्ति ऋतवश्चापि तथा दिननिशेऽप्युत ॥ ००७ ॥

ते त्वां हर्षस्मितं दृष्ट्वा गुरोः कर्मानिवेदकम् ।
स्मारयन्तस्तथा प्राहुस्ते यथा श्रुतवान्भवान् ॥ ००८ ॥

अहोरात्रं विजानाति ऋतवश्चापि नित्यशः ।
पुरुषे पापकं कर्म शुभं वा शुभकर्मणः ॥ ००९ ॥

तत्त्वया मम यत्कर्म व्यभिचाराद्भयात्मकम् ।
नाख्यातमिति जानन्तस्ते त्वामाहुस्तथा द्विज ॥ ०१० ॥

ते चैव हि भवेयुस्ते लोकाः पापकृतो यथा ।
कृत्वा नाचक्षतः कर्म मम यच्च त्वया कृतम् ॥ ०११ ॥

तथा शक्या च दुर्वृत्ता रक्षितुं प्रमदा द्विज ।
न च त्वं कृतवान्किञ्चिदागः प्रीतोऽस्मि तेन ते ॥ ०१२ ॥

यदि त्वहं त्वा दुर्वृत्तमद्राक्षं द्विजसत्तम ।
शपेयं त्वामहं क्रोधान्न मेऽत्रास्ति विचारणा ॥ ०१३ ॥

सज्जन्ति पुरुषे नार्यः पुंसां सोऽर्थश्च पुष्कलः ।
अन्यथा रक्षतः शापोऽभविष्यत्ते गतिश्च सा ॥ ०१४ ॥

रक्षिता सा त्वया पुत्र मम चापि निवेदिता ।
अहं ते प्रीतिमांस्तात स्वस्ति स्वर्गं गमिष्यसि ॥ ०१५ ॥

भीष्म उवाच ॥

इत्युक्त्वा विपुलं प्रीतो देवशर्मा महानृषिः ।
मुमोद स्वर्गमास्थाय सहभार्यः सशिष्यकः ॥ ०१६ ॥

इदमाख्यातवांश्चापि ममाख्यानं महामुनिः ।
मार्कण्डेयः पुरा राजन्गङ्गाकूले कथान्तरे ॥ ०१७ ॥

तस्माद्ब्रवीमि पार्थ त्वा स्त्रियः सर्वाः सदैव च ।
उभयं दृश्यते तासु सततं साध्वसाधु च ॥ ०१८ ॥

स्त्रियः साध्व्यो महाभागाः संमता लोकमातरः ।
धारयन्ति महीं राजन्निमां सवनकाननाम् ॥ ०१९ ॥

असाध्व्यश्चापि दुर्वृत्ताः कुलघ्न्यः पापनिश्चयाः ।
विज्ञेया लक्षणैर्दुष्टैः स्वगात्रसहजैर्नृप ॥ ०२० ॥

एवमेतासु रक्षा वै शक्या कर्तुं महात्मभिः ।
अन्यथा राजशार्दूल न शक्या रक्षितुं स्त्रियः ॥ ०२१ ॥

एता हि मनुजव्याघ्र तीक्ष्णास्तीक्ष्णपराक्रमाः ।
नासामस्ति प्रियो नाम मैथुने सङ्गमे नृभिः ॥ ०२२ ॥

एताः कृत्याश्च कार्याश्च कृताश्च भरतर्षभ ।
न चैकस्मिन्नमन्त्येताः पुरुषे पाण्डुनन्दन ॥ ०२३ ॥

नासु स्नेहो नृभिः कार्यस्तथैवेर्ष्या जनेश्वर ।
खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव हि ॥ ०२४ ॥

विहन्येतान्यथा कुर्वन्नरः कौरवनन्दन ।
सर्वथा राजशार्दूल युक्तिः सर्वत्र पूज्यते ॥ ०२५ ॥

तेनैकेन तु रक्षा वै विपुलेन कृता स्त्रियाः ।
नान्यः शक्तो नृलोकेऽस्मिन्रक्षितुं नृप योषितः ॥ ०२६ ॥

---

# विवाहधर्माः

## अध्याय ०४४

युधिष्ठिर उवाच ॥

यन्मूलं सर्वधर्माणां प्रजनस्य गृहस्य च ।
पितृदेवातिथीनां च तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ।
कीदृशाय प्रदेया स्यात्कन्येति वसुधाधिप ॥ ००२ ॥

शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च ।
अद्भिरेव प्रदातव्या कन्या गुणवते वरे ॥ ००३ ॥

ब्राह्मणानां सतामेष धर्मो नित्यं युधिष्ठिर ॥ ००३ ॥

आवाह्यमावहेदेवं यो दद्यादनुकूलतः ।
शिष्टानां क्षत्रियाणां च धर्म एष सनातनः ॥ ००४ ॥

आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः ।
अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर ॥ ००५ ॥

गान्धर्वमिति तं धर्मं प्राहुर्धर्मविदो जनाः ॥ ००५ ॥

धनेन बहुना क्रीत्वा संप्रलोभ्य च बान्धवान् ।
असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ॥ ००६ ॥

हत्वा छित्त्वा च शीर्षाणि रुदतां रुदतीं गृहात् ।
प्रसह्य हरणं तात राक्षसं धर्मलक्षणम् ॥ ००७ ॥

पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर ।
पैशाच आसुरश्चैव न कर्तव्यौ कथञ्चन ॥ ००८ ॥

ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ ।
पृथग्वा यदि वा मिश्राः कर्तव्या नात्र संशयः ॥ ००९ ॥

तिस्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु ।
वैश्यः स्वजातिं विन्देत तास्वपत्यं समं भवेत् ॥ ०१० ॥

ब्राह्मणी तु भवेज्ज्येष्ठा क्षत्रिया क्षत्रियस्य तु ।
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ॥ ०११ ॥

अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः ।
शूद्रायां जनयन्विप्रः प्रायश्चित्ती विधीयते ॥ ०१२ ॥

त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ ०१३ ॥

यस्यास्तु न भवेद्भ्राता पिता वा भरतर्षभ ।
नोपयच्छेत तां जातु पुत्रिकाधर्मिणी हि सा ॥ ०१४ ॥

त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
चतुर्थे त्वथ संप्राप्ते स्वयं भर्तारमर्जयेत् ॥ ०१५ ॥

प्रजनो हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः ॥ ०१६ ॥

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
इत्येतामनुगच्छेत तं धर्मं मनुरब्रवीत् ॥ ०१७ ॥

युधिष्ठिर उवाच ॥

शुल्कमन्येन दत्तं स्याद्ददानीत्याह चापरः ।
बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् ॥ ०१८ ॥

पाणिग्रहीता त्वन्यः स्यात्कस्य कन्या पितामह ।
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ॥ ०१९ ॥

भीष्म उवाच ॥

यत्किञ्चित्कर्म मानुष्यं संस्थानाय प्रकृष्यते ।
मन्त्रवन्मन्त्रितं तस्य मृषावादस्तु पातकः ॥ ०२० ॥

भार्यापत्यृत्विगाचार्याः शिष्योपाध्याय एव च ।
मृषोक्ते दण्डमर्हन्ति नेत्याहुरपरे जनाः ॥ ०२१ ॥

न ह्यकामेन संवादं मनुरेवं प्रशंसति ।
अयशस्यमधर्म्यं च यन्मृषा धर्मकोपनम् ॥ ०२२ ॥

नैकान्तदोष एकस्मिंस्तद्दानं नोपलभ्यते ।
धर्मतो यां प्रयच्छन्ति यां च क्रीणन्ति भारत ॥ ०२३ ॥

बन्धुभिः समनुज्ञातो मन्त्रहोमौ प्रयोजयेत् ।
तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथञ्चन ॥ ०२४ ॥

यस्त्वत्र मन्त्रसमयो भार्यापत्योर्मिथः कृतः ।
तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः ॥ ०२५ ॥

देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात् ।
सा दैवीं मानुषीं वाचमनृतां पर्युदस्यति ॥ ०२६ ॥

युधिष्ठिर उवाच ॥

कन्यायां प्राप्तशुल्कायां ज्यायांश्चेदाव्रजेद्वरः ।
धर्मकामार्थसंपन्नो वाच्यमत्रानृतं न वा ॥ ०२७ ॥

तस्मिन्नुभयतो दोषे कुर्वञ्छ्रेयः समाचरेत् ।
अयं नः सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ॥ ०२८ ॥

तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तदेतत्सर्वमाचक्ष्व न हि तृप्यामि कथ्यताम् ॥ ०२९ ॥

भीष्म उवाच ॥

न वै निष्ठाकरं शुल्कं ज्ञात्वासीत्तेन नाहृतम् ।
न हि शुल्कपराः सन्तः कन्यां ददति कर्हिचित् ॥ ०३० ॥

अन्यैर्गुणैरुपेतं तु शुल्कं याचन्ति बान्धवाः ।
अलङ्कृत्वा वहस्वेति यो दद्यादनुकूलतः ॥ ०३१ ॥

तच्च तां च ददात्येव न शुल्कं विक्रयो न सः ।
प्रतिगृह्य भवेद्देयमेष धर्मः सनातनः ॥ ०३२ ॥

दास्यामि भवते कन्यामिति पूर्वं नभाषितम् ।
ये चैवाहुर्ये च नाहुर्ये चावश्यं वदन्त्युत ॥ ०३३ ॥

तस्मादा ग्रहणात्पाणेर्याचयन्ति परस्परम् ।
कन्यावरः पुरा दत्तो मरुद्भिरिति नः श्रुतम् ॥ ०३४ ॥

नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदितम् ।
तन्मूलं काममूलस्य प्रजनस्येति मे मतिः ॥ ०३५ ॥

समीक्ष्य च बहून्दोषान्संवासाद्विद्विषाणयोः ।
यथा निष्ठाकरं शुल्कं न जात्वासीत्तथा शृणु ॥ ०३६ ॥

अहं विचित्रवीर्याय द्वे कन्ये समुदावहम् ।

जित्वा च मागधान्सर्वान्काशीनथ च कोसलान् ॥ ०३७ ॥

गृहीतपाणिरेकासीत्प्राप्तशुल्कापराभवत् ॥ ०३७ ॥

पाणौ गृहीता तत्रैव विसृज्या इति मे पिता ।
अब्रवीदितरां कन्यामावहत्स तु कौरवः ॥ ०३८ ॥

अप्यन्यामनुपप्रच्छ शङ्कमानः पितुर्वचः ।
अतीव ह्यस्य धर्मेप्सा पितुर्मेऽभ्यधिकाभवत् ॥ ०३९ ॥

ततोऽहमब्रुवं राजन्नाचारेप्सुरिदं वचः ।
आचारं तत्त्वतो वेत्तुमिच्छामीति पुनः पुनः ॥ ०४० ॥

ततो मयैवमुक्ते तु वाक्ये धर्मभृतां वरः ।
पिता मम महाराज बाह्लीको वाक्यमब्रवीत् ॥ ०४१ ॥

यदि वः शुल्कतो निष्ठा न पाणिग्रहणं तथा ।
लाजान्तरमुपासीत प्राप्तशुल्का पतिं वृतम् ॥ ०४२ ॥

न हि धर्मविदः प्राहुः प्रमाणं वाक्यतः स्मृतम् ।
येषां वै शुल्कतो निष्ठा न पाणिग्रहणात्तथा ॥ ०४३ ॥

प्रसिद्धं भाषितं दाने तेषां प्रत्यसनं पुनः ।
ये मन्यन्ते क्रयं शुल्कं न ते धर्मविदो जनाः ॥ ०४४ ॥

न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा ।
न ह्येव भार्या क्रेतव्या न विक्रेया कथञ्चन ॥ ०४५ ॥

ये च क्रीणन्ति दासीवद्ये च विक्रीणते जनाः ।
भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ॥ ०४६ ॥

अस्मिन्धर्मे सत्यवन्तं पर्यपृच्छन्त वै जनाः ।
कन्यायाः प्राप्तशुल्कायाः शुल्कदः प्रशमं गतः ॥ ०४७ ॥

पाणिग्रहीता चान्यः स्यादत्र नो धर्मसंशयः ।
तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसंमतः ॥ ०४८ ॥

तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ॥ ०४८ ॥

तानेवं ब्रुवतः सर्वान्सत्यवान्वाक्यमब्रवीत् ।
यत्रेष्टं तत्र देया स्यान्नात्र कार्या विचारणा ॥ ०४९ ॥

कुर्वते जीवतोऽप्येवं मृते नैवास्ति संशयः ॥ ०४९ ॥

देवरं प्रविशेत्कन्या तप्येद्वापि महत्तपः ।
तमेवानुव्रता भूत्वा पाणिग्राहस्य नाम सा ॥ ०५० ॥

लिखन्त्येव तु केषाञ्चिदपरेषां शनैरपि ।
इति ये संवदन्त्यत्र त एतं निश्चयं विदुः ॥ ०५१ ॥

तत्पाणिग्रहणात्पूर्वमुत्तरं यत्र वर्तते ।
सर्वमङ्गलमन्त्रं वै मृषावादस्तु पातकः ॥ ०५२ ॥

पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
पाणिग्राहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते ॥ ०५३ ॥

अनुकूलामनुवंशां भ्रात्रा दत्तामुपाग्निकाम् ।
परिक्रम्य यथान्यायं भार्यां विन्देद्द्विजोत्तमः ॥ ०५४ ॥

# अध्याय ०४५

युधिष्ठिर उवाच ॥

कन्यायाः प्राप्तशुल्कायाः पतिश्चेन्नास्ति कश्चन ।
तत्र का प्रतिपत्तिः स्यात्तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

यापुत्रकस्याप्यरिक्थस्य प्रतिपत्सा तदा भवेत् ।
अथ चेत्साहरेच्छुल्कं क्रीता शुल्कप्रदस्य सा ।
तस्यार्थेऽपत्यमीहेत येन न्यायेन शक्नुयात् ॥ ००३ ॥

न तस्या मन्त्रवत्कार्यं कश्चित्कुर्वीत किञ्चन ।
स्वयं वृतेति सावित्री पित्रा वै प्रत्यपद्यत ।
तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा नेतरे जनाः ॥ ००५ ॥

एतत्तु नापरे चक्रुर्न परे जातु साधवः ।
साधूनां पुनराचारो गरीयो धर्मलक्षणम् ॥ ००६ ॥

अस्मिन्नेव प्रकरणे सुक्रतुर्वाक्यमब्रवीत् ।
नप्ता विदेहराजस्य जनकस्य महात्मनः ॥ ००७ ॥

असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ।
अनुप्रश्नः संशयो वा सतामेतदुपालभेत् ॥ ००८ ॥

असदेव हि धर्मस्य प्रमादो धर्म आसुरः ।
नानुशुश्रुम जात्वेतामिमां पूर्वेषु जन्मसु ॥ ००९ ॥

भार्यापत्योर्हि संबन्धः स्त्रीपुंसोस्तुल्य एव सः ।
रतिः साधारणो धर्म इति चाह स पार्थिवः ॥ ०१० ॥

युधिष्ठिर उवाच ॥

अथ केन प्रमाणेन पुंसामादीयते धनम् ।
पुत्रवद्धि पितुस्तस्य कन्या भवितुमर्हति ॥ ०११ ॥

भीष्म उवाच ॥

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ ०१२ ॥

मातुश्च यौतकं यत्स्यात्कुमारीभाग एव सः ।
दौहित्र एव वा रिक्थमपुत्रस्य पितुर्हरेत् ॥ ०१३ ॥

ददाति हि स पिण्डं वै पितुर्मातामहस्य च ।
पुत्रदौहित्रयोर्नेह विशेषो धर्मतः स्मृतः ॥ ०१४ ॥

अन्यत्र जातया सा हि प्रजया पुत्र ईहते ।
दुहितान्यत्र जातेन पुत्रेणापि विशिष्यते ॥ ०१५ ॥

दौहित्रकेण धर्मेण नात्र पश्यामि कारणम् ।
विक्रीतासु च ये पुत्रा भवन्ति पितुरेव ते ॥ ०१६ ॥

असूयवस्त्वधर्मिष्ठाः परस्वादायिनः शठाः ।
आसुरादधिसंभूता धर्माद्विषमवृत्तयः ॥ ०१७ ॥

अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु ॥ ०१८ ॥

यो मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति ।
कन्यां वा जीवितार्थाय यः शुल्केन प्रयच्छति ॥ ०१९ ॥

सप्तावरे महाघोरे निरये कालसाह्वये ।
स्वेदं मूत्रं पुरीषं च तस्मिन्प्रेत उपाश्नुते ॥ ०२० ॥

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
अल्पं वा बहु वा राजन्विक्रयस्तावदेव सः ॥ ०२१ ॥

यद्यप्याचरितः कैश्चिन्नैष धर्मः कथञ्चन ।
अन्येषामपि दृश्यन्ते लोभतः संप्रवृत्तयः ॥ ०२२ ॥

वश्यां कुमारीं विहितां ये च तामुपभुञ्जते ।
एते पापस्य कर्तारस्तमस्यन्धेऽथ शेरते ॥ ०२३ ॥

अन्योऽप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः ।
अधर्ममूलैर्हि धनैर्न तैरर्थोऽस्ति कश्चन ॥ ०२४ ॥

---

# अध्याय ०४६

भीष्म उवाच ॥

प्राचेतसस्य वचनं कीर्तयन्ति पुराविदः ।
यस्याः किञ्चिन्नाददते ज्ञातयो न स विक्रयः ॥ ००१ ॥

अर्हणं तत्कुमारीणामानृशंस्यतमं च तत् ।
सर्वं च प्रतिदेयं स्यात्कन्यायै तदशेषतः ॥ ००२ ॥

पितृभिर्भ्रातृभिश्चैव श्वशुरैरथ देवरैः ।
पूज्या लालयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ००३ ॥

यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अमोदनात्पुनः पुंसः प्रजनं न प्रवर्धते ॥ ००४ ॥

पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप ।
अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रियाः ॥ ००५ ॥

तदैव तत्कुलं नास्ति यदा शोचन्ति जामयः ॥ ००५ ॥

जामीशप्तानि गेहानि निकृत्तानीव कृत्यया ।
नैव भान्ति न वर्धन्ते श्रिया हीनानि पार्थिव ॥ ००६ ॥

स्त्रियः पुंसां परिददे मनुर्जिगमिषुर्दिवम् ।
अबलाः स्वल्पकौपीनाः सुहृदः सत्यजिष्णवः ॥ ००७ ॥

ईर्ष्यवो मानकामाश्च चण्डा असुहृदोऽबुधाः ।
स्त्रियो माननमर्हन्ति ता मानयत मानवाः ॥ ००८ ॥

स्त्रीप्रत्ययो हि वो धर्मो रतिभोगाश्च केवलाः ।
परिचर्यान्नसंस्कारास्तदायत्ता भवन्तु वः ॥ ००९ ॥

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रीत्यर्थं लोकयात्रा च पश्यत स्त्रीनिबन्धनम् ॥ ०१० ॥

संमान्यमानाश्चैताभिः सर्वकार्याण्यवाप्स्यथ ।
विदेहराजदुहिता चात्र श्लोकमगायत ॥ ०११ ॥

नास्ति यज्ञः स्त्रियः कश्चिन्न श्राद्धं नोपवासकम् ।
धर्मस्तु भर्तृशुश्रूषा तया स्वर्गं जयत्युत ॥ ०१२ ॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।

पुत्रास्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥ ०१३ ॥

श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता ।
लालिता निगृहीता च स्त्री श्रीर्भवति भारत ॥ ०१४ ॥

---

# रिक्थविभागः

## अध्याय ०४७

युधिष्ठिर उवाच ॥

सर्वशास्त्रविधानज्ञ राजधर्मार्थवित्तम ।
अतीव संशयच्छेत्ता भवान्वै प्रथितः क्षितौ ॥ ००१ ॥

कश्चित्तु संशयो मेऽस्ति तन्मे ब्रूहि पितामह ।
अस्यामापदि कष्टायामन्यं पृच्छाम कं वयम् ॥ ००२ ॥

यथा नरेण कर्तव्यं यश्च धर्मः सनातनः ।
एतत्सर्वं महाबाहो भवान्व्याख्यातुमर्हति ॥ ००३ ॥

चतस्रो विहिता भार्या ब्राह्मणस्य पितामह ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ॥ ००४ ॥

तत्र जातेषु पुत्रेषु सर्वासां कुरुसत्तम ।
आनुपूर्व्येण कस्तेषां पित्र्यं दायाद्यमर्हति ॥ ००५ ॥

केन वा किं ततो हार्यं पितृवित्तात्पितामह ।

एतदिच्छामि कथितं विभागस्तेषु यः स्मृतः ॥ ००६ ॥

भीष्म उवाच ॥

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
एतेषु विहितो धर्मो ब्राह्मणस्य युधिष्ठिर ॥ ००७ ॥

वैषम्यादथ वा लोभात्कामाद्वापि परंतप ।
ब्राह्मणस्य भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥ ००८ ॥

शूद्रां शयनमारोप्य ब्राह्मणः पीडितो भवेत् ।
प्रायश्चित्तीयते चापि विधिदृष्टेन हेतुना ॥ ००९ ॥

तत्र जातेष्वपत्येषु द्विगुणं स्याद्युधिष्ठिर ।
अतस्ते नियमं वित्ते संप्रवक्ष्यामि भारत ॥ ०१० ॥

लक्षण्यो गोवृषो यानं यत्प्रधानतमं भवेत् ।
ब्राह्मण्यास्तद्धरेत्पुत्र एकांशं वै पितुर्धनात् ॥ ०११ ॥

शेषं तु दशधा कार्यं ब्राह्मणस्वं युधिष्ठिर ।
तत्र तेनैव हर्तव्याश्चत्वारोंऽशाः पितुर्धनात् ॥ ०१२ ॥

क्षत्रियायास्तु यः पुत्रो ब्राह्मणः सोऽप्यसंशयः ।
स तु मातृविशेषेण त्रीनंशान्हर्तुमर्हति ॥ ०१३ ॥

वर्णे तृतीये जातस्तु वैश्यायां ब्राह्मणादपि ।
द्विरंशस्तेन हर्तव्यो ब्राह्मणस्वाद्युधिष्ठिर ॥ ०१४ ॥

शूद्रायां ब्राह्मणाज्जातो नित्यादेयधनः स्मृतः ।
अल्पं वापि प्रदातव्यं शूद्रापुत्राय भारत ॥ ०१५ ॥

दशधा प्रविभक्तस्य धनस्यैष भवेत्क्रमः ।
सवर्णासु तु जातानां समान्भागान्प्रकल्पयेत्  ॥ ०१६  ॥

अब्राह्मणं तु मन्यन्ते शूद्रापुत्रमनैपुणात् ।
त्रिषु वर्णेषु जातो हि ब्राह्मणाद्ब्राह्मणो भवेत्  ॥ ०१७  ॥

स्मृता वर्णाश्च चत्वारः पञ्चमो नाधिगम्यते ।
हरेत्तु दशमं भागं शूद्रापुत्रः पितुर्धनात्  ॥ ०१८  ॥

तत्तु दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ।
अवश्यं हि धनं देयं शूद्रापुत्राय भारत  ॥ ०१९  ॥

आनृशंस्यं परो धर्म इति तस्मै प्रदीयते ।
यत्र तत्र समुत्पन्नो गुणायैवोपकल्पते  ॥ ०२०  ॥

यदि वाप्येकपुत्रः स्यादपुत्रो यदि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय भारत  ॥ ०२१  ॥

त्रैवार्षिकाद्यदा भक्तादधिकं स्याद्द्विजस्य तु ।
यजेत तेन द्रव्येण न वृथा साधयेद्धनम्  ॥ ०२२  ॥

त्रिसाहस्रपरो दायः स्त्रियो देयो धनस्य वै ।
तच्च भर्त्रा धनं दत्तं नादत्तं भोक्तुमर्हति  ॥ ०२३  ॥

स्त्रीणां तु पतिदायाद्यमुपभोगफलं स्मृतम् ।
नापहारं स्त्रियः कुर्युः पतिवित्तात्कथञ्चन  ॥ ०२४  ॥

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं युधिष्ठिर ।
ब्राह्मण्यास्तद्धरेत्कन्या यथा पुत्रस्तथा हि सा  ॥ ०२५  ॥

सा हि पुत्रसमा राजन्विहिता कुरुनन्दन  ॥ ०२५  ॥

एवमेतत्समुद्दिष्टं धर्मेषु भरतर्षभ ।
एतद्धर्ममनुस्मृत्य न वृथा साधयेद्धनम् ॥ ०२६ ॥

युधिष्ठिर उवाच ॥

शूद्रायां ब्राह्मणाज्जातो यद्यदेयधनः स्मृतः ।
केन प्रतिविशेषेण दशमोऽप्यस्य दीयते ॥ ०२७ ॥

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः ।
क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि ॥ ०२८ ॥

कस्मात्ते विषमं भागं भजेरन्नृपसत्तम ।
यदा सर्वे त्रयो वर्णास्त्वयोक्ता ब्राह्मणा इति ॥ ०२९ ॥

भीष्म उवाच ॥

दारा इत्युच्यते लोके नाम्नैकेन परंतप ।
प्रोक्तेन चैकनाम्नायं विशेषः सुमहान्भवेत् ॥ ०३० ॥

तिस्रः कृत्वा पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम् ।
सा ज्येष्ठा सा च पूज्या स्यात्सा च ताभ्यो गरीयसी ॥ ०३१ ॥

स्नानं प्रसाधनं भर्तुर्दन्तधावनमञ्जनम् ।
हव्यं कव्यं च यच्चान्यद्धर्मयुक्तं भवेद्गृहे ॥ ०३२ ॥

न तस्यां जातु तिष्ठन्त्यामन्या तत्कर्तुमर्हति ।
ब्राह्मणी त्वेव तत्कुर्याद्ब्राह्मणस्य युधिष्ठिर ॥ ०३३ ॥

अन्नं पानं च माल्यं च वासांस्याभरणानि च ।
ब्राह्मण्यै तानि देयानि भर्तुः सा हि गरीयसी ॥ ०३४ ॥

मनुनाभिहितं शास्त्रं यच्चापि कुरुनन्दन ।
तत्राप्येष महाराज दृष्टो धर्मः सनातनः ॥ ०३५ ॥

अथ चेदन्यथा कुर्याद्यदि कामाद्युधिष्ठिर ।
यथा ब्राह्मणचण्डालः पूर्वदृष्टस्तथैव सः ॥ ०३६ ॥

ब्राह्मण्याः सदृशः पुत्रः क्षत्रियायाश्च यो भवेत् ।
राजन्विशेषो नास्त्यत्र वर्णयोरुभयोरपि ॥ ०३७ ॥

न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत् ।
ब्राह्मण्याः प्रथमः पुत्रो भूयान्स्याद्राजसत्तम ॥ ०३८ ॥

भूयोऽपि भूयसा हार्यं पितृवित्ताद्युधिष्ठिर ॥ ०३८ ॥

यथा न सदृशी जातु ब्राह्मण्याः क्षत्रिया भवेत् ।
क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत् ॥ ०३९ ॥

श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर ।
विहितं दृश्यते राजन्सागरान्ता च मेदिनी ॥ ०४० ॥

क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ।
राजा दण्डधरो राजन्रक्षा नान्यत्र क्षत्रियात् ॥ ०४१ ॥

ब्राह्मणा हि महाभागा देवानामपि देवताः ।
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ॥ ०४२ ॥

प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
लुप्यमानाः स्वधर्मेण क्षत्रियो रक्षति प्रजाः ॥ ०४३ ॥

दस्युभिर्ह्रियमाणं च धनं दाराश्च सर्वशः ।

सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ॥ ०४४ ॥

भूयान्स्यात्क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः ।
भूयस्तेनापि हर्तव्यं पितृवित्ताद्युधिष्ठिर ॥ ०४५ ॥

युधिष्ठिर उवाच ॥

उक्तं ते विधिवद्राजन्ब्राह्मणस्वे पितामह ।
इतरेषां तु वर्णानां कथं विनियमो भवेत् ॥ ०४६ ॥

भीष्म उवाच ॥

क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया च भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥ ०४७ ॥

एष एव क्रमो हि स्यात्क्षत्रियाणां युधिष्ठिर ।
अष्टधा तु भवेत्कार्यं क्षत्रियस्वं युधिष्ठिर ॥ ०४८ ॥

क्षत्रियाया हरेत्पुत्रश्चतुरोंऽशान्पितुर्धनात् ।
युद्धावहारिकं यच्च पितुः स्यात्स हरेच्च तत् ॥ ०४९ ॥

वैश्यापुत्रस्तु भागांस्त्रीन्शूद्रापुत्रस्तथाष्टमम् ।
सोऽपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ॥ ०५० ॥

एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥ ०५१ ॥

वैश्यस्य वर्तमानस्य वैश्यायां भरतर्षभ ।
शूद्रायां चैव कौन्तेय तयोर्विनियमः स्मृतः ॥ ०५२ ॥

पञ्चधा तु भवेत्कार्यं वैश्यस्वं भरतर्षभ ।

तयोरपत्ये वक्ष्यामि विभागं च जनाधिप ॥ ०५३ ॥

वैश्यापुत्रेण हर्तव्याश्चत्वारोंऽशाः पितुर्धनात् ।
पञ्चमस्तु भवेद्भागः शूद्रापुत्राय भारत ॥ ०५४ ॥

सोऽपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ।
त्रिभिर्वर्णैस्तथा जातः शूद्रो देयधनो भवेत् ॥ ०५५ ॥

शूद्रस्य स्यात्सवर्णैव भार्या नान्या कथञ्चन ।
शूद्रस्य समभागः स्याद्यदि पुत्रशतं भवेत् ॥ ०५६ ॥

जातानां समवर्णासु पुत्राणामविशेषतः ।
सर्वेषामेव वर्णानां समभागो धने स्मृतः ॥ ०५७ ॥

ज्येष्ठस्य भागो ज्येष्ठः स्यादेकांशो यः प्रधानतः ।
एष दायविधिः पार्थ पूर्वमुक्तः स्वयंभुवा ॥ ०५८ ॥

समवर्णासु जातानां विशेषोऽस्त्यपरो नृप ।
विवाहवैशेष्यकृतः पूर्वः पूर्वो विशिष्यते ॥ ०५९ ॥

हरेज्ज्येष्ठः प्रधानांशमेकं तुल्यासुतेष्वपि ।
मध्यमो मध्यमं चैव कनीयांस्तु कनीयसम् ॥ ०६० ॥

एवं जातिषु सर्वासु सवर्णाः श्रेष्ठतां गताः ।
महर्षिरपि चैतद्वै मारीचः काश्यपोऽब्रवीत् ॥ ०६१ ॥

# वर्णसंकरः

## अध्याय ०४८

युधिष्ठिर उवाच ॥

अर्थाश्रयाद्वा कामाद्वा वर्णानां वाप्यनिश्चयात् ।
अज्ञानाद्वापि वर्णानां जायते वर्णसङ्करः ॥ ००१ ॥

तेषामेतेन विधिना जातानां वर्णसङ्करे ।
को धर्मः कानि कर्माणि तन्मे ब्रूहि पितामह ॥ ००२ ॥

भीष्म उवाच ॥

चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम् ।
असृजत्स ह यज्ञार्थे पूर्वमेव प्रजापतिः ॥ ००३ ॥

भार्याश्चतस्रो विप्रस्य द्वयोरात्मास्य जायते ।
आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः ॥ ००४ ॥

परं शवाद्ब्राह्मणस्यैष पुत्रः ; शूद्रापुत्रं पारशवं तमाहुः ।
शुश्रूषकः स्वस्य कुलस्य स स्या ;त्स्वं चारित्रं नित्यमथो न जह्यात् ॥ ००५ ॥

सर्वानुपायानपि संप्रधार्य ; समुद्धरेत्स्वस्य कुलस्य तन्तुम् ।
ज्येष्ठो यवीयानपि यो द्विजस्य ; शुश्रूषवान्दानपरायणः स्यात् ॥ ००६ ॥

तिस्रः क्षत्रियसंबन्धाद्द्वयोरात्मास्य जायते ।
हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतः ॥ ००७ ॥

द्वे चापि भार्ये वैश्यस्य द्वयोरात्मास्य जायते ।
शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ॥ ००८ ॥

अतो विशिष्टस्त्वधमो गुरुदारप्रधर्षकः ।
बाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितम् ॥ ००९ ॥

अयाज्यं क्षत्रियो व्रात्यं सूतं स्तोमक्रियापरम् ।
वैश्यो वैदेहकं चापि मौद्गल्यमपवर्जितम् ॥ ०१० ॥

शूद्रश्चण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनम् ।
ब्राह्मण्यां संप्रजायन्त इत्येते कुलपांसनाः ॥ ०११ ॥

एते मतिमतां श्रेष्ठ वर्णसङ्करजाः प्रभो ॥ ०११ ॥

बन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः ।
शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात् ॥ ०१२ ॥

शूद्रादायोगवश्चापि वैश्यायां ग्रामधर्मिणः ।
ब्राह्मणैरप्रतिग्राह्यस्तक्षा स वनजीवनः ॥ ०१३ ॥

एतेऽपि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
मातृजात्यां प्रसूयन्ते प्रवरा हीनयोनिषु ॥ ०१४ ॥

यथा चतुर्षु वर्णेषु द्वयोरात्मास्य जायते ।
आनन्तर्यात्तु जायन्ते तथा बाह्याः प्रधानतः ॥ ०१५ ॥

ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
परस्परस्य वर्तन्तो जनयन्ति विगर्हितान् ॥ ०१६ ॥

यथा च शूद्रो ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते ।
एवं बाह्यतराद्बाह्यश्चातुर्वर्ण्यात्प्रसूयते ॥ ०१७ ॥

प्रतिलोमं तु वर्तन्तो बाह्याद्बाह्यतरं पुनः ।

हीना हीनात्प्रसूयन्ते वर्णाः पञ्चदशैव ते  ॥ ०१८  ॥

अगम्यागमनाच्चैव वर्तते वर्णसङ्करः ।
व्रात्यानामत्र जायन्ते सैरन्ध्रा मागधेषु च  ॥ ०१९  ॥

प्रसाधनोपचारज्ञमदासं दासजीवनम्  ॥ ०१९  ॥

अतश्चायोगवं सूते वागुरावनजीवनम् ।
मैरेयकं च वैदेहः संप्रसूतेऽथ माधुकम्  ॥ ०२०  ॥

निषादो मुद्गरं सूते दाशं नावोपजीविनम् ।
मृतपं चापि चण्डालः श्वपाकमतिकुत्सितम्  ॥ ०२१  ॥

चतुरो मागधी सूते क्रूरान्मायोपजीविनः ।
मांसस्वादुकरं सूदं सौगन्धमिति सञ्ज्ञितम्  ॥ ०२२  ॥

वैदेहकाच्च पापिष्ठं क्रूरं भार्योपजीविनम् ।
निषादान्मद्रनाभं च खरयानप्रयायिनम्  ॥ ०२३  ॥

चण्डालात्पुल्कसं चापि खराश्वगजभोजिनम् ।
मृतचेलप्रतिच्छन्नं भिन्नभाजनभोजिनम्  ॥ ०२४  ॥

आयोगवीषु जायन्ते हीनवर्णासु ते त्रयः ।
क्षुद्रो वैदेहकादन्ध्रो बहिर्ग्रामप्रतिश्रयः  ॥ ०२५  ॥

कारावरो निषाद्यां तु चर्मकारात्प्रजायते ।
चण्डालात्पाण्डुसौपाकस्त्वक्सारव्यवहारवान्  ॥ ०२६  ॥

आहिण्डिको निषादेन वैदेह्यां संप्रजायते ।
चण्डालेन तु सौपाको मौद्गल्यसमवृत्तिमान्  ॥ ०२७  ॥

निषादी चापि चण्डालात्पुत्रमन्तावसायिनम् ।
श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतम् ॥ ०२८ ॥

इत्येताः सङ्करे जात्यः पितृमातृव्यतिक्रमात् ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥ ०२९ ॥

चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते ।
वर्णानां धर्महीनेषु सञ्ज्ञा नास्तीह कस्यचित् ॥ ०३० ॥

यदृच्छयोपसंपन्नैर्यज्ञसाधुबहिष्कृतैः ।
बाह्या बाह्यैस्तु जायन्ते यथावृत्ति यथाश्रयम् ॥ ०३१ ॥

चतुष्पथश्मशानानि शैलांश्चान्यान्वनस्पतीन् ।
युञ्जन्ते चाप्यलङ्कारांस्तथोपकरणानि च ॥ ०३२ ॥

गोब्राह्मणार्थे साहाय्यं कुर्वाणा वै न संशयः ।
आनृशंस्यमनुक्रोशः सत्यवाक्यमथ क्षमा ॥ ०३३ ॥

स्वशरीरैः परित्राणं बाह्यानां सिद्धिकारकम् ।
मनुजव्याघ्र भवति तत्र मे नास्ति संशयः ॥ ०३४ ॥

यथोपदेशं परिकीर्तितासु ; नरः प्रजायेत विचार्य बुद्धिमान् ।
विहीनयोनिर्हि सुतोऽवसादये ;त्तितीर्षमाणं सलिले यथोपलम् ॥ ०३५ ॥

अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
नयन्ते ह्युत्पथं नार्यः कामक्रोधवशानुगम् ॥ ०३६ ॥

स्वभावश्चैव नारीणां नराणामिह दूषणम् ।
इत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः ॥ ०३७ ॥

युधिष्ठिर उवाच ॥

वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कथं विद्यामहे नृप ॥ ०३८ ॥

भीष्म उवाच ॥

योनिसङ्कलुषे जातं नानाचारसमाहितम् ।
कर्मभिः सज्जनाचीर्णैर्विज्ञेया योनिशुद्धता ॥ ०३९ ॥

अनार्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ०४० ॥

पित्र्यं वा भजते शीलं मातृजं वा तथोभयम् ।
न कथञ्चन सङ्कीर्णः प्रकृतिं स्वां नियच्छति ॥ ०४१ ॥

यथैव सदृशो रूपे मातापित्रोर्हि जायते ।
व्याघ्रश्चित्रैस्तथा योनिं पुरुषः स्वां नियच्छति ॥ ०४२ ॥

कुलस्रोतसि संछन्ने यस्य स्याद्योनिसङ्करः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ ०४३ ॥

आर्यरूपसमाचारं चरन्तं कृतके पथि ।
स्ववर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये ॥ ०४४ ॥

नानावृत्तेषु भूतेषु नानाकर्मरतेषु च ।
जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ॥ ०४५ ॥

शरीरमिह सत्त्वेन नरस्य परिकृष्यते ।
ज्येष्ठमध्यावरं सत्त्वं तुल्यसत्त्वं प्रमोदते ॥ ०४६ ॥

ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् ।

अपि शूद्रं तु सद्वृत्तं धर्मज्ञमभिपूजयेत् ॥ ०४७ ॥

आत्मानमाख्याति हि कर्मभिर्नरः ; स्वशीलचारित्रकृतैः शुभाशुभैः ।
प्रनष्टमप्यात्मकुलं तथा नरः ; पुनः प्रकाशं कुरुते स्वकर्मभिः ॥ ०४८ ॥

योनिष्वेतासु सर्वासु सङ्कीर्णास्वितरासु च ।
यत्रात्मानं न जनयेद्बुधस्ताः परिवर्जयेत् ॥ ०४९ ॥

---

# पुत्रप्रणिधिः

## अध्याय ०४९

युधिष्ठिर उवाच ॥

ब्रूहि पुत्रान्कुरुश्रेष्ठ वर्णानां त्वं पृथक्पृथक् ।
कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते ॥ ००१ ॥

विप्रवादाः सुबहुशः श्रूयन्ते पुत्रकारिताः ।
अत्र नो मुह्यतां राजन्संशयं छेत्तुमर्हसि ॥ ००२ ॥

भीष्म उवाच ॥

आत्मा पुत्रस्तु विज्ञेयस्तस्यानन्तरजश्च यः ।
नियुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा ॥ ००३ ॥

पतितस्य च भार्यायां भर्त्रा सुसमवेतया ।
तथा दत्तकृतौ पुत्रावध्यूढश्च तथापरः ॥ ००४ ॥

षडपध्वंसजाश्चापि कानीनापसदास्तथा ।
इत्येते ते समाख्यातास्तान्विजानीहि भारत ॥ ००५ ॥

युधिष्ठिर उवाच ॥

षडपध्वंसजाः के स्युः के वाप्यपसदास्तथा ।
एतत्सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ॥ ००६ ॥

भीष्म उवाच ॥

त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर ।
वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत ॥ ००७ ॥

एको द्विवर्ण एवाथ तथात्रैवोपलक्षितः ।
षडपध्वंसजास्ते हि तथैवापसदाञ्शृणु ॥ ००८ ॥

चण्डालो व्रात्यवेनौ च ब्राह्मण्यां क्षत्रियासु च ।
वैश्यायां चैव शूद्रस्य लक्ष्यन्तेऽपसदास्त्रयः ॥ ००९ ॥

मागधो वामकश्चैव द्वौ वैश्यस्योपलक्षितौ ।
ब्राह्मण्यां क्षत्रियायां च क्षत्रियस्यैक एव तु ॥ ०१० ॥

ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपसदाः स्मृताः ।
पुत्रैरेतो न शक्यं हि मिथ्या कर्तुं नराधिप ॥ ०११ ॥

युधिष्ठिर उवाच ॥

क्षेत्रजं केचिदेवाहुः सुतं केचित्तु शुक्रजम् ।
तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह ॥ ०१२ ॥

भीष्म उवाच ॥

रेतजो वा भवेत्पुत्रस्त्यक्तो वा क्षेत्रजो भवेत् ।
अध्यूढः समयं भित्त्वेत्येतदेव निबोध मे ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

रेतोजं विद्म वै पुत्रं क्षेत्रजस्यागमः कथम् ।
अध्यूढं विद्म वै पुत्रं हित्वा च समयं कथम् ॥ ०१४ ॥

भीष्म उवाच ॥

आत्मजं पुत्रमुत्पाद्य यस्त्यजेत्कारणान्तरे ।
न तत्र कारणं रेतः स क्षेत्रस्वामिनो भवेत् ॥ ०१५ ॥

पुत्रकामो हि पुत्रार्थे यां वृणीते विशां पते ।
तत्र क्षेत्रं प्रमाणं स्यान्न वै तत्रात्मजः सुतः ॥ ०१६ ॥

अन्यत्र क्षेत्रजः पुत्रो लक्ष्यते भरतर्षभ ।
न ह्यात्मा शक्यते हन्तुं दृष्टान्तोपगतो ह्यसौ ॥ ०१७ ॥

कश्चिच्च कृतकः पुत्रः सङ्ग्रहादेव लक्ष्यते ।
न तत्र रेतः क्षेत्रं वा प्रमाणं स्याद्युधिष्ठिर ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

कीदृशः कृतकः पुत्रः सङ्ग्रहादेव लक्ष्यते ।
शुक्रं क्षेत्रं प्रमाणं वा यत्र लक्ष्येत भारत ॥ ०१९ ॥

भीष्म उवाच ॥

मातापितृभ्यां संत्यक्तं पथि यं तु प्रलक्षयेत् ।
न चास्य मातापितरौ ज्ञायेते स हि कृत्रिमः ॥ ०२० ॥

अस्वामिकस्य स्वामित्वं यस्मिन्संप्रतिलक्षयेत् ।
सवर्णस्तं च पोषेत सवर्णस्तस्य जायते ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

कथमस्य प्रयोक्तव्यः संस्कारः कस्य वा कथम् ।
देया कन्या कथं चेति तन्मे ब्रूहि पितामह ॥ ०२२ ॥

भीष्म उवाच ॥

आत्मवत्तस्य कुर्वीत संस्कारं स्वामिवत्तथा ।
त्यक्तो मातापितृभ्यां यः सवर्णं प्रतिपद्यते ।
तद्गोत्रवर्णतस्तस्य कुर्यात्संस्कारमच्युत ॥ ०२४ ॥

अथ देया तु कन्या स्यात्तद्वर्णेन युधिष्ठिर ।
संस्कर्तुं मातृगोत्रं च मातृवर्णविनिश्चये ॥ ०२५ ॥

कानीनाध्यूढजौ चापि विज्ञेयौ पुत्रकिल्बिषौ ।
तावपि स्वाविव सुतौ संस्कार्याविति निश्चयः ॥ ०२६ ॥

क्षेत्रजो वाप्यपसदो येऽध्यूढास्तेषु चाप्यथ ।
आत्मवद्वै प्रयुञ्जीरन्संस्कारं ब्राह्मणादयः ॥ ०२७ ॥

धर्मशास्त्रेषु वर्णानां निश्चयोऽयं प्रदृश्यते ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ०२८ ॥

# च्यवनोपाख्यानम्

## अध्याय ०५०

युधिष्ठिर उवाच ॥

दर्शने कीदृशः स्नेहः संवासे च पितामह ।
महाभाग्यं गवां चैव तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते ।
नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ ००२ ॥

पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ ।
उदवासकृतारम्भो बभूव सुमहाव्रतः ॥ ००३ ॥

निहत्य मानं क्रोधं च प्रहर्षं शोकमेव च ।
वर्षाणि द्वादश मुनिर्जलवासे धृतव्रतः ॥ ००४ ॥

आदधत्सर्वभूतेषु विस्रम्भं परमं शुभम् ।
जलेचरेषु सत्त्वेषु शीतरश्मिरिव प्रभुः ॥ ००५ ॥

स्थाणुभूतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च ।
गङ्गायमुनयोर्मध्ये जलं संप्रविवेश ह ॥ ००६ ॥

गङ्गायमुनयोर्वेगं सुभीमं भीमनिःस्वनम् ।
प्रतिजग्राह शिरसा वातवेगसमं जवे ॥ ००७ ॥

गङ्गा च यमुना चैव सरितश्चानुगास्तयोः ।
प्रदक्षिणमृषिं चक्रुर्न चैनं पर्यपीडयन् ॥ ००८ ॥

अन्तर्जले स सुष्वाप काष्ठभूतो महामुनिः ।
ततश्चोर्ध्वस्थितो धीमानभवद्भरतर्षभ ॥ ००९ ॥

जलौकसां स सत्त्वानां बभूव प्रियदर्शनः ।
उपाजिघ्रन्त च तदा मत्स्यास्तं हृष्टमानसाः ॥ ०१० ॥

तत्र तस्यासतः कालः समतीतोऽभवन्महान् ॥ ०१० ॥

ततः कदाचित्समये कस्मिंश्चिन्मत्स्यजीविनः ।
तं देशं समुपाजग्मुर्जालहस्ता महाद्युते ॥ ०११ ॥

निषादा बहवस्तत्र मत्स्योद्धरणनिश्चिताः ।
व्यायता बलिनः शूराः सलिलेष्वनिवर्तिनः ॥ ०१२ ॥

अभ्याययुश्च तं देशं निश्चिता जालकर्मणि ॥ ०१२ ॥

जालं च योजयामासुर्विशेषेण जनाधिप ।
मत्स्योदकं समासाद्य तदा भरतसत्तम ॥ ०१३ ॥

ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः ।
गङ्गायमुनयोर्वारि जालैरभ्यकिरंस्ततः ॥ ०१४ ॥

जालं सुविततं तेषां नवसूत्रकृतं तथा ।
विस्तारायामसंपन्नं यत्तत्र सलिले क्षमम् ॥ ०१५ ॥

ततस्ते सुमहच्चैव बलवच्च सुवर्तितम् ।
प्रकीर्य सर्वतः सर्वे जालं चकृषिरे तदा ॥ ०१६ ॥

अभीतरूपाः संहृष्टास्तेऽन्योन्यवशवर्तिनः ।
बबन्धुस्तत्र मत्स्यांश्च तथान्याञ्जलचारिणः ॥ ०१७ ॥

तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम् ।
आकर्षन्त महाराज जालेनाथ यदृच्छया ॥ ०१८ ॥

नदीशैवलदिग्धाङ्गं हरिश्मश्रुजटाधरम् ।
लग्नैः शङ्खगणैर्गात्रैः कोष्ठैश्चित्रैरिवावृतम् ॥ ०१९ ॥

तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम् ।
सर्वे प्राञ्जलयो दाशाः शिरोभिः प्रापतन्भुवि ॥ ०२० ॥

परिखेदपरित्रासाज्जालस्याकर्षणेन च ।
मत्स्या बभूवुर्व्यापन्नाः स्थलसङ्कर्षणेन च ॥ ०२१ ॥

स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम् ।
बभूव कृपयाविष्टो निःश्वसंश्च पुनः पुनः ॥ ०२२ ॥

निषादा ऊचुः ॥

अज्ञानाद्यत्कृतं पापं प्रसादं तत्र नः कुरु ।
करवाम प्रियं किं ते तन्नो ब्रूहि महामुने ॥ ०२३ ॥

भीष्म उवाच ॥

इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत् ।
यो मेऽद्य परमः कामस्तं शृणुध्वं समाहिताः ॥ ०२४ ॥

प्राणोत्सर्गं विक्रयं वा मत्स्यैर्यास्याम्यहं सह ।
संवासान्नोत्सहे त्यक्तुं सलिलाध्युषितानिमान् ॥ ०२५ ॥

इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः ।
सर्वे विषण्णवदना नहुषाय न्यवेदयन् ॥ ०२६ ॥

# च्यवननहुषसंवादः

## अध्याय ०५१

भीष्म उवाच ॥

नहुषस्तु ततः श्रुत्वा च्यवनं तं तथागतम् ।
त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ॥ ००१ ॥

शौचं कृत्वा यथान्यायं प्राञ्जलिः प्रयतो नृपः ।
आत्मानमाचचक्षे च च्यवनाय महात्मने ॥ ००२ ॥

अर्चयामास तं चापि तस्य राज्ञः पुरोहितः ।
सत्यव्रतं महाभागं देवकल्पं विशां पते ॥ ००३ ॥

नहुष उवाच ॥

करवाणि प्रियं किं ते तन्मे व्याख्यातुमर्हसि ।
सर्वं कर्तास्मि भगवन्यद्यपि स्यात्सुदुष्करम् ॥ ००४ ॥

च्यवन उवाच ॥

श्रमेण महता युक्ताः कैवर्ता मत्स्यजीविनः ।
मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ॥ ००५ ॥

नहुष उवाच ॥

सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित ।
निष्क्रयार्थं भगवतो यथाह भृगुनन्दनः ॥ ००६ ॥

च्यवन उवाच ॥

सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप ।
सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ॥ ००७ ॥

नहुष उवाच ॥

सहस्राणां शतं क्षिप्रं निषादेभ्यः प्रदीयताम् ।
स्यादेतत्तु भवेन्मूल्यं किं वान्यन्मन्यते भवान् ॥ ००८ ॥

च्यवन उवाच ॥

नाहं शतसहस्रेण निमेयः पार्थिवर्षभ ।
दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ॥ ००९ ॥

नहुष उवाच ॥

कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित ।
यदेतदपि नौपम्यमतो भूयः प्रदीयताम् ॥ ०१० ॥

च्यवन उवाच ॥

राजन्नार्हाम्यहं कोटिं भूयो वापि महाद्युते ।
सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तय ॥ ०११ ॥

नहुष उवाच ॥

अर्धराज्यं समग्रं वा निषादेभ्यः प्रदीयताम् ।
एतन्मूल्यमहं मन्ये किं वान्यन्मन्यसे द्विज ॥ ०१२ ॥

च्यवन उवाच ॥

अर्धराज्यं समग्रं वा नाहमर्हामि पार्थिव ।
सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यताम् ॥ ०१३ ॥

भीष्म उवाच ॥

महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्शितः ।
स चिन्तयामास तदा सहामात्यपुरोहितः ॥ ०१४ ॥

तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः ।
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ॥ ०१५ ॥

स समाभाष्य राजानमब्रवीद्द्विजसत्तमः ।
तोषयिष्याम्यहं विप्रं यथा तुष्टो भविष्यति ॥ ०१६ ॥

नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा ।
भवतो यदहं ब्रूयां तत्कार्यमविशङ्कया ॥ ०१७ ॥

नहुष उवाच ॥

ब्रवीतु भगवान्मूल्यं महर्षेः सदृशं भृगोः ।
परित्रायस्व मामस्माद्विषयं च कुलं च मे ॥ ०१८ ॥

हन्याद्धि भगवान्क्रुद्धस्त्रैलोक्यमपि केवलम् ।
किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम् ॥ ०१९ ॥

अगाधेऽम्भसि मग्नस्य सामात्यस्य सहर्त्विजः ।

प्लवो भव महर्षे त्वं कुरु मूल्यविनिश्चयम् ॥ ०२० ॥

भीष्म उवाच ॥

नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान् ।
उवाच हर्षयन्सर्वानमात्यान्पार्थिवं च तम् ॥ ०२१ ॥

अनर्घेया महाराज द्विजा वर्णमहत्तमाः ।
गावश्च पृथिवीपाल गौर्मूल्यं परिकल्प्यताम् ॥ ०२२ ॥

नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप ।
हर्षेण महता युक्तः सहामात्यपुरोहितः ॥ ०२३ ॥

अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम् ।
इदं प्रोवाच नृपते वाचा संतर्पयन्निव ॥ ०२४ ॥

उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव ।
एतन्मूल्यमहं मन्ये तव धर्मभृतां वर ॥ ०२५ ॥

च्यवन उवाच ॥

उत्तिष्ठाम्येष राजेन्द्र सम्यक्क्रीतोऽस्मि तेऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युत ॥ ०२६ ॥

कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ।
गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ ०२७ ॥

गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥ ०२८ ॥

स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।

गावो यज्ञप्रणेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ ०२९ ॥

अमृतं ह्यक्षयं दिव्यं क्षरन्ति च वहन्ति च ।
अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥ ०३० ॥

तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः ॥ ०३१ ॥

निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयति तं देशं पाप्मानं चापकर्षति ॥ ०३२ ॥

गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः ।
गावः कामदुघा देव्यो नान्यत्किञ्चित्परं स्मृतम् ॥ ०३३ ॥

इत्येतद्गोषु मे प्रोक्तं माहात्म्यं पार्थिवर्षभ ।
गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ०३४ ॥

निषादा ऊचुः ॥

दर्शनं कथनं चैव सहास्माभिः कृतं मुने ।
सतां सप्तपदं मित्रं प्रसादं नः कुरु प्रभो ॥ ०३५ ॥

हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः ।
एवं त्वमपि धर्मात्मन्पुरुषाग्निः प्रतापवान् ॥ ०३६ ॥

प्रसादयामहे विद्वन्भवन्तं प्रणता वयम् ।
अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ॥ ०३७ ॥

च्यवन उवाच ॥

कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च ।

नरं समूलं दहति कक्षमग्निरिव ज्वलन्  ॥ ०३८  ॥

प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्बिषाः ।
दिवं गच्छत वै क्षिप्रं मत्स्यैर्जालोद्धृतैः सह  ॥ ०३९  ॥

भीष्म उवाच  ॥

ततस्तस्य प्रसादात्ते महर्षेर्भावितात्मनः ।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः  ॥ ०४०  ॥

ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान् ।
आरोहमाणांस्त्रिदिवं मत्स्यांश्च भरतर्षभ  ॥ ०४१  ॥

ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः ।
वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपम्  ॥ ०४२  ॥

ततो राजा महावीर्यो नहुषः पृथिवीपतिः ।
परमित्यब्रवीत्प्रीतस्तदा भरतसत्तम  ॥ ०४३  ॥

ततो जग्राह धर्मे स स्थितिमिन्द्रनिभो नृपः ।
तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत्  ॥ ०४४  ॥

समाप्तदीक्षश्च्यवनस्ततोऽगच्छत्स्वमाश्रमम् ।
गविजश्च महातेजाः स्वमाश्रमपदं ययौ  ॥ ०४५  ॥

निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप ।
नहुषोऽपि वरं लब्ध्वा प्रविवेश पुरं स्वकम्  ॥ ०४६  ॥

एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
दर्शने यादृशः स्नेहः संवासे च युधिष्ठिर  ॥ ०४७  ॥

महाभाग्यं गवां चैव तथा धर्मविनिश्चयम् ।
किं भूयः कथ्यतां वीर किं ते हृदि विवक्षितम् ॥ ०४८ ॥

---

# च्यवनकुशिकसंवादः

## अध्याय ०५२

युधिष्ठिर उवाच ॥

संशयो मे महाप्राज्ञ सुमहान्सागरोपमः ।
तन्मे शृणु महाबाहो श्रुत्वा चाख्यातुमर्हसि ॥ ००१ ॥

कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो ।
रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि ॥ ००२ ॥

कथमेष समुत्पन्नो रामः सत्यपराक्रमः ।
कथं ब्रह्मर्षिवंशे च क्षत्रधर्मा व्यजायत ॥ ००३ ॥

तदस्य संभवं राजन्निखिलेनानुकीर्तय ।
कौशिकाच्च कथं वंशात्क्षत्राद्वै ब्राह्मणोऽभवत् ॥ ००४ ॥

अहो प्रभावः सुमहानासीद्वै सुमहात्मनोः ।
रामस्य च नरव्याघ्र विश्वामित्रस्य चैव ह ॥ ००५ ॥

कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाभवत् ।
एष दोषः सुतान्हित्वा तन्मे व्याख्यातुमर्हसि ॥ ००६ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
च्यवनस्य च संवादं कुशिकस्य च भारत ॥ ००७ ॥

एतं दोषं पुरा दृष्ट्वा भार्गवश्च्यवनस्तदा ।
आगामिनं महाबुद्धिः स्ववंशे मुनिपुङ्गवः ॥ ००८ ॥

सञ्चिन्त्य मनसा सर्वं गुणदोषबलाबलम् ।
दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ॥ ००९ ॥

च्यवनस्तमनुप्राप्य कुशिकं वाक्यमब्रवीत् ।
वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ ॥ ०१० ॥

कुशिक उवाच ॥

भगवन्सहधर्मोऽयं पण्डितैरिह धार्यते ।
प्रदानकाले कन्यानामुच्यते च सदा बुधैः ॥ ०११ ॥

यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन ।
तत्कार्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि ॥ ०१२ ॥

भीष्म उवाच ॥

अथासनमुपादाय च्यवनस्य महामुनेः ।
कुशिको भार्यया सार्धमाजगाम यतो मुनिः ॥ ०१३ ॥

प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत् ।
कारयामास सर्वाश्च क्रियास्तस्य महात्मनः ॥ ०१४ ॥

ततः स राजा च्यवनं मधुपर्कं यथाविधि ।

प्रत्यग्राहयदव्यग्रो महात्मा नियतव्रतः ॥ ०१५ ॥

सत्कृत्य स तथा विप्रमिदं वचनमब्रवीत् ।
भगवन्परवन्तौ स्वो ब्रूहि किं करवावहे ॥ ०१६ ॥

यदि राज्यं यदि धनं यदि गाः संशितव्रत ।
यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते ॥ ०१७ ॥

इदं गृहमिदं राज्यमिदं धर्मासनं च ते ।
राजा त्वमसि शाध्युर्वीं भृत्योऽहं परवांस्त्वयि ॥ ०१८ ॥

एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा ।
कुशिकं प्रत्युवाचेदं मुदा परमया युतः ॥ ०१९ ॥

न राज्यं कामये राजन्न धनं न च योषितः ।
न च गा न च ते देशान्न यज्ञाञ्श्रूयतामिदम् ॥ ०२० ॥

नियमं कञ्चिदारप्स्ये युवयोर्यदि रोचते ।
परिचर्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया ॥ ०२१ ॥

एवमुक्ते तदा तेन दंपती तौ जहर्षतुः ।
प्रत्यब्रूतां च तमृषिमेवमस्त्विति भारत ॥ ०२२ ॥

अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम् ।
गृहोद्देशं ततस्तत्र दर्शनीयमदर्शयत् ॥ ०२३ ॥

इयं शय्या भगवतो यथाकाममिहोष्यताम् ।
प्रयतिष्यावहे प्रीतिमाहर्तुं ते तपोधन ॥ ०२४ ॥

अथ सूर्योऽतिचक्राम तेषां संवदतां तथा ।
अथर्षिश्चोदयामास पानमन्नं तथैव च ॥ ०२५ ॥

तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा ।
किमन्नजातमिष्टं ते किमुपस्थापयाम्यहम्  ॥ ०२६  ॥

ततः स परया प्रीत्या प्रत्युवाच जनाधिपम् ।
औपपत्तिकमाहारं प्रयच्छस्वेति भारत  ॥ ०२७  ॥

तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः ।
यथोपपन्नं चाहारं तस्मै प्रादाज्जनाधिपः  ॥ ०२८  ॥

ततः स भगवान्भुक्त्वा दंपती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो  ॥ ०२९  ॥

ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः ।
संविवेश नरेन्द्रस्तु सपत्नीकः स्थितोऽभवत्  ॥ ०३०  ॥

न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ पादौ मे जागर्तव्यं च वां निशि  ॥ ०३१  ॥

अविशङ्कश्च कुशिकस्तथेत्याह स धर्मवित् ।
न प्रबोधयतां तं च तौ तदा रजनीक्षये  ॥ ०३२  ॥

यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज प्रयतावथ दंपती  ॥ ०३३  ॥

ततः स भगवान्विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम्  ॥ ०३४  ॥

स तु राजा निराहारः सभार्यः कुरुनन्दन ।
पर्युपासत तं हृष्टश्च्यवनाराधने रतः  ॥ ०३५  ॥

भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः ।
अकिञ्चिदुक्त्वा तु गृहान्निश्चक्राम महातपाः  ॥ ०३६  ॥

तमन्वगच्छतां तौ तु क्षुधितौ श्रमकर्शितौ ।
भार्यापती मुनिश्रेष्ठो न च ताववलोकयत्  ॥ ०३७  ॥

तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः ।
अन्तर्हितोऽभूद्राजेन्द्र ततो राजापतत्क्षितौ  ॥ ०३८  ॥

स मुहूर्तं समाश्वस्य सह देव्या महाद्युतिः ।
पुनरन्वेषणे यत्नमकरोत्परमं तदा  ॥ ०३९  ॥

---

# अध्याय ०५३

युधिष्ठिर उवाच  ॥

तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा ।
भार्या चास्य महाभागा तन्मे ब्रूहि पितामह  ॥ ००१  ॥

भीष्म उवाच  ॥

अदृष्ट्वा स महीपालस्तमृषिं सह भार्यया ।
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः  ॥ ००२  ॥

स प्रविश्य पुरीं दीनो नाभ्यभाषत किञ्चन ।
तदेव चिन्तयामास च्यवनस्य विचेष्टितम्  ॥ ००३  ॥

अथ शून्येन मनसा प्रविवेश गृहं नृपः ।

ददर्श शयने तस्मिञ्शयानं भृगुनन्दनम् ॥ ००४ ॥

विस्मितौ तौ तु दृष्ट्वा तं तदाश्चर्यं विचिन्त्य च ।
दर्शनात्तस्य च मुनेर्विश्रान्तौ संबभूवतुः ॥ ००५ ॥

यथास्थानं तु तौ स्थित्वा भूयस्तं संववाहतुः ।
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥ ००६ ॥

तेनैव च स कालेन प्रत्यबुध्यत वीर्यवान् ।
न च तौ चक्रतुः किञ्चिद्विकारं भयशङ्कितौ ॥ ००७ ॥

प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशां पते ।
तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ॥ ००८ ॥

तथेति तौ प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।
शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ००९ ॥

ततः सुखासीनमृषिं वाग्यतौ संववाहतुः ।
न च पर्याप्तमित्याह भार्गवः सुमहातपाः ॥ ०१० ॥

यदा तौ निर्विकारौ तु लक्षयामास भार्गवः ।
तत उत्थाय सहसा स्नानशालां विवेश ह ॥ ०११ ॥

क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम् ॥ ०११ ॥

असत्कृत्य तु तत्सर्वं तत्रैवान्तरधीयत ।
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा ॥ ०१२ ॥

नासूयां चक्रतुस्तौ च दंपती भरतर्षभ ॥ ०१२ ॥

अथ स्नातः स भगवान्सिंहासनगतः प्रभुः ।

दर्शयामास कुशिकं सभार्यं भृगुनन्दनः ॥ ०१३ ॥

संहृष्टवदनो राजा सभार्यः कुशिको मुनिम् ।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ ०१४ ॥

आनीयतामिति मुनिस्तं चोवाच नराधिपम् ।
राजा च समुपाजह्रे तदन्नं सह भार्यया ॥ ०१५ ॥

मांसप्रकारान्विविधाञ्शाकानि विविधानि च ।
वेसवारविकारांश्च पानकानि लघूनि च ॥ ०१६ ॥

रसालापूपकांश्चित्रान्मोदकानथ षाडवान् ।
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ ०१७ ॥

फलानि च विचित्राणि तथा भोज्यानि भूरिशः ।
बदरेङ्गुदकाश्मर्यभल्लातकवटानि च ॥ ०१८ ॥

गृहस्थानां च यद्भोज्यं यच्चापि वनवासिनाम् ।
सर्वमाहारयामास राजा शापभयान्मुनेः ॥ ०१९ ॥

अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ।
ततः सर्वं समानीय तच्च शय्यासनं मुनिः ॥ ०२० ॥

वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ ०२१ ॥

न च तौ चक्रतुः कोपं दंपती सुमहाव्रतौ ।
तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥ ०२२ ॥

तत्रैव च स राजर्षिस्तस्थौ तां रजनीं तदा ।
सभार्यो वाग्यतः श्रीमान्न च तं कोप आविशत् ॥ ०२३ ॥

नित्यं संस्कृतमन्नं तु विविधं राजवेश्मनि ।
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः ॥ ०२४ ॥

वस्त्रं च विविधाकारमभवत्समुपार्जितम् ।
न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा ॥ ०२५ ॥

पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम् ।
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ ०२६ ॥

तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ।
क्रीडारथोऽस्तु भगवन्नुत साङ्ग्रामिको रथः ॥ ०२७ ॥

इत्युक्तः स मुनिस्तेन राज्ञा हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरञ्जयम् ॥ ०२८ ॥

सज्जीकुरु रथं क्षिप्रं यस्ते साङ्ग्रामिको मतः ।
सायुधः सपताकश्च सशक्तिः कणयष्टिमान् ॥ ०२९ ॥

किङ्किणीशतनिर्घोषो युक्तस्तोमरकल्पनैः ।
गदाखड्गनिबद्धश्च परमेषुशतान्वितः ॥ ०३० ॥

ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ ०३१ ॥

त्रिदंष्ट्रं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ।
सर्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् ॥ ०३२ ॥

भगवन्क रथो यातु ब्रवीतु भृगुनन्दनः ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ ०३३ ॥

एवमुक्तस्तु भगवान्प्रत्युवाचाथ तं नृपम् ।
इतःप्रभृति यातव्यं पदकं पदकं शनैः ॥ ०३४ ॥

श्रमो मम यथा न स्यात्तथा मे छन्दचारिणौ ।
सुखं चैवास्मि वोढव्यो जनः सर्वश्च पश्यतु ॥ ०३५ ॥

नोत्सार्यः पथिकः कश्चित्तेभ्यो दास्याम्यहं वसु ।
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि ॥ ०३६ ॥

सर्वं दास्याम्यशेषेण धनं रत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ॥ ०३७ ॥

तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत् ।
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ॥ ०३८ ॥

ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ।
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ॥ ०३९ ॥

अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ।
हाहाभूतं च तत्सर्वमासीन्नगरमार्तिमत् ॥ ०४० ॥

तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रचोदितौ ।
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ॥ ०४१ ॥

वेपमानौ विराहारौ पञ्चाशद्रात्रकर्शितौ ।
कथञ्चिदूहतुर्वीरौ दंपती तं रथोत्तमम् ॥ ०४२ ॥

बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम् ।
ददृशाते महाराज पुष्पिताविव किंशुकौ ॥ ०४३ ॥

तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकपरायणः ।

अभिशापभयात्त्रस्तो न च किञ्चिदुवाच ह ॥ ०४४ ॥

द्वन्द्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम् ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नैव शक्नुमः ॥ ०४५ ॥

अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ।
राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् ॥ ०४६ ॥

श्रान्तावपि हि कृच्छ्रेण रथमेतं समूहतुः ।
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ ०४७ ॥

भीष्म उवाच ॥

ततः स निर्विकारौ तौ दृष्ट्वा भृगुकुलोद्वहः ।
वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ ०४८ ॥

तत्रापि राजा प्रीतात्मा यथाज्ञप्तमथाकरोत् ।
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ॥ ०४९ ॥

अवतीर्य रथश्रेष्ठाद्दंपती तौ मुमोच ह ।
विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ॥ ०५० ॥

स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया ।
ददानि वां वरं श्रेष्ठं तद्ब्रूतामिति भारत ॥ ०५१ ॥

सुकुमारौ च तौ विद्वान्कराभ्यां मुनिसत्तमः ।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥ ०५२ ॥

अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह ।
विश्रान्तौ स्वः प्रभावात्ते ध्यानेनैवेति भार्गव ॥ ०५३ ॥

अथ तौ भगवान्प्राह प्रहृष्टश्च्यवनस्तदा ।
न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ ०५४ ॥

रमणीयः समुद्देशो गङ्गातीरमिदं शुभम् ।
कञ्चित्कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ ०५५ ॥

गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि ।
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ॥ ०५६ ॥

न च मन्युस्त्वया कार्यः श्रेयस्ते समुपस्थितम् ।
यत्काङ्क्षितं हृदिस्थं ते तत्सर्वं संभविष्यति ॥ ०५७ ॥

इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना ।
प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ॥ ०५८ ॥

न मे मन्युर्महाभाग पूतोऽस्मि भगवंस्त्वया ।
संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ ०५९ ॥

प्रतोदेन व्रणा ये मे सभार्यस्य कृतास्त्वया ।
तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्यया ॥ ०६० ॥

इमां च देवीं पश्यामि मुने दिव्याप्सरोपमाम् ।
श्रिया परमया युक्तां यथादृष्टां मया पुरा ॥ ०६१ ॥

तव प्रसादात्संवृत्तमिदं सर्वं महामुने ।
नैतच्चित्रं तु भगवंस्त्वयि सत्यपराक्रम ॥ ०६२ ॥

इत्युक्तः प्रत्युवाचेदं च्यवनः कुशिकं तदा ।
आगच्छेथाः सभार्यश्च त्वमिहेति नराधिप ॥ ०६३ ॥

इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम् ।

प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥ ०६४ ॥

तत एनमुपाजग्मुरमात्याः सपुरोहिताः ।
बलस्था गणिकायुक्ताः सर्वाः प्रकृतयस्तथा ॥ ०६५ ॥

तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् ।
प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ॥ ०६६ ॥

ततः प्रविश्य नगरं कृत्वा सर्वाह्णिकक्रियाः ।
भुक्त्वा सभार्यो रजनीमुवास स महीपतिः ॥ ०६७ ॥

ततस्तु तौ नवमभिवीक्ष्य यौवनं; परस्परं विगतजराविवामरौ ।
ननन्दतुः शयनगतौ वपुर्धरौ; श्रिया युतौ द्विजवरदत्तया तया ॥ ०६८ ॥

स चाप्यृषिर्भृगुकुलकीर्तिवर्धन ;स्तपोधनो वनमभिराममृद्धिमत् ।
मनीषया बहुविधरत्नभूषितं; ससर्ज यन्नास्ति शतक्रतोरपि ॥ ०६९ ॥

---

# अध्याय ०५४

भीष्म उवाच ॥

ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः ।
कृतपूर्वाह्णिकः प्रायात्सभार्यस्तद्वनं प्रति ॥ ००१ ॥

ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् ।
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ॥ ००२ ॥

तत्र दिव्यानभिप्रायान्ददर्श कुशिकस्तदा  ॥ ००२  ॥

पर्वतान्रम्यसानूंश्च नलिनीश्च सपङ्कजाः ।
चित्रशालाश्च विविधास्तोरणानि च भारत  ॥ ००३  ॥

शाद्वलोपचितां भूमिं तथा काञ्चनकुट्टिमाम्  ॥ ००३  ॥

सहकारान्प्रफुल्लांश्च केतकोद्दालकान्धवान् ।
अशोकान्मुचुकुन्दांश्च फुल्लांश्चैवातिमुक्तकान्  ॥ ००४  ॥

चम्पकांस्तिलकान्भव्यान्पनसान्वञ्जुलानपि ।
पुष्पितान्कर्णिकारांश्च तत्र तत्र ददर्श ह  ॥ ००५  ॥

श्यामां वारणपुष्पीं च तथाष्टापदिकां लताम् ।
तत्र तत्र परिक्लृप्ता ददर्श स महीपतिः  ॥ ००६  ॥

वृक्षान्पद्मोत्पलधरान्सर्वर्तुकुसुमांस्तथा ।
विमानच्छन्दकांश्चापि प्रासादान्पद्मसंनिभान्  ॥ ००७  ॥

शीतलानि च तोयानि क्वचिदुष्णानि भारत ।
आसनानि विचित्राणि शयनप्रवराणि च  ॥ ००८  ॥

पर्यङ्कान्सर्वसौवर्णान्परार्ध्यास्तरणास्तृतान् ।
भक्ष्यभोज्यमनन्तं च तत्र तत्रोपकल्पितम्  ॥ ००९  ॥

वाणीवादाञ्छुकांश्चापि शारिकाभृङ्गराजकान् ।
कोकिलाञ्छतपत्रांश्च कोयष्टिमककुक्कुटान्  ॥ ०१०  ॥

मयूरान्कुक्कुटांश्चापि पुत्रकाञ्जीवजीवकान् ।
चकोरान्वानरान्हंसान्सारसांश्चक्रसाह्वयान्  ॥ ०११  ॥

समन्ततः प्रणदितान्ददर्श सुमनोहरान् ।
क्वचिदप्सरसां संघान्गन्धर्वाणां च पार्थिव ॥ ०१२ ॥

कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह ।
न ददर्श च तान्भूयो ददर्श च पुनर्नृपः ॥ ०१३ ॥

गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम् ।
हंसान्सुमधुरांश्चापि तत्र शुश्राव पार्थिवः ॥ ०१४ ॥

तं दृष्ट्वात्यद्भुतं राजा मनसाचिन्तयत्तदा ।
स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु ॥ ०१५ ॥

अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् ।
उत्तरान्वा कुरून्पुण्यानथ वाप्यमरावतीम् ॥ ०१६ ॥

किं त्विदं महदाश्चर्यं संपश्यामीत्यचिन्तयत् ।
एवं सञ्चिन्तयन्नेव ददर्श मुनिपुङ्गवम् ॥ ०१७ ॥

तस्मिन्विमाने सौवर्णे मणिस्तम्भसमाकुले ।
महार्हे शयने दिव्ये शयानं भृगुनन्दनम् ॥ ०१८ ॥

तमभ्ययात्प्रहर्षेण नरेन्द्रः सह भार्यया ।
अन्तर्हितस्ततो भूयश्च्यवनः शयनं च तत् ॥ ०१९ ॥

ततोऽन्यस्मिन्वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम् ॥ ०२० ॥

एवं योगबलाद्विप्रो मोहयामास पार्थिवम् ॥ ०२० ॥

क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः ।
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत ॥ ०२१ ॥

निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ।
कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा ॥ ०२२ ॥

ततः स राजा कुशिकः सभार्यस्तेन कर्मणा ।
विस्मयं परमं प्राप्तस्तद्दृष्ट्वा महदद्भुतम् ॥ ०२३ ॥

ततः प्रोवाच कुशिको भार्यां हर्षसमन्वितः ।
पश्य भद्रे यथा भावाश्चित्रा दृष्टाः सुदुर्लभाः ॥ ०२४ ॥

प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् ।
तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः ॥ ०२५ ॥

त्रैलोक्यराज्यादपि हि तप एव विशिष्यते ।
तपसा हि सुतप्तेन क्रीडत्येष तपोधनः ॥ ०२६ ॥

अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः ।
इच्छन्नेष तपोवीर्यादन्या.ण्ल्लोकान्सृजेदपि ॥ ०२७ ॥

ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणः ।
उत्सहेदिह कर्तुं हि कोऽन्यो वै च्यवनादृते ॥ ०२८ ॥

ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः ।
ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् ॥ ०२९ ॥

इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै ।
संप्रेक्ष्योवाच स नृपं क्षिप्रमागम्यतामिति ॥ ०३० ॥

इत्युक्तः सहभार्यस्तमभ्यगच्छन्महामुनिम् ।
शिरसा वन्दनीयं तमवन्दत स पार्थिवः ॥ ०३१ ॥

तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् ।
निषीदेत्यब्रवीद्धीमान्सान्त्वयन्पुरुषर्षभ ॥ ०३२ ॥

ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम् ।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥ ०३३ ॥

राजन्सम्यग्जितानीह पञ्च पञ्चसु यत्त्वया ।
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै ॥ ०३४ ॥

सम्यगाराधितः पुत्र त्वयाहं वदतां वर ।
न हि ते वृजिनं किञ्चित्सुसूक्ष्ममपि विद्यते ॥ ०३५ ॥

अनुजानीहि मां राजन्गमिष्यामि यथागतम् ।
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ ०३६ ॥

कुशिक उवाच ॥

अग्निमध्यगतेनेदं भगवन्संनिधौ मया ।
वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु ॥ ०३७ ॥

एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ।
यत्प्रीतोऽसि समाचारात्कुलं पूतं ममानघ ॥ ०३८ ॥

एष मेऽनुग्रहो विप्र जीविते च प्रयोजनम् ।
एतद्राज्यफलं चैव तपश्चैतत्परं मम ॥ ०३९ ॥

यदि तु प्रीतिमान्विप्र मयि त्वं भृगुनन्दन ।
अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि ॥ ०४० ॥

# अध्याय ०५५

च्यवन उवाच ॥

वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि ।
तं च ब्रूहि नरश्रेष्ठ सर्वं संपादयामि ते ॥ ००१ ॥

कुशिक उवाच ॥

यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव ।
कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् ॥ ००२ ॥

शयनं चैकपार्श्वेन दिवसानेकविंशतिम् ।
अकिञ्चिदुक्त्वा गमनं बहिश्च मुनिपुङ्गव ॥ ००३ ॥

अन्तर्धानमकस्माच्च पुनरेव च दर्शनम् ।
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ॥ ००४ ॥

तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम ।
समुपानीय विविधं यद्दग्धं जातवेदसा ॥ ००५ ॥

निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ॥ ००५ ॥

धनानां च विसर्गस्य वनस्यापि च दर्शनम् ।
प्रासादानां बहूनां च काञ्चनानां महामुने ॥ ००६ ॥

मणिविद्रुमपादानां पर्यङ्कानां च दर्शनम् ।
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ॥ ००७ ॥

अतीव ह्यत्र मुह्यामि चिन्तयानो दिवानिशम् ।
न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम् ॥ ००८ ॥

एतदिच्छामि कार्त्स्न्येन सत्यं श्रोतुं तपोधन ॥ ००८ ॥

च्यवन उवाच ॥

श्रृणु सर्वमशेषेण यदिदं येन हेतुना ।
न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव ॥ ००९ ॥

पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानस्मि यद्राजंस्तन्मे निगदतः श्रृणु ॥ ०१० ॥

ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः ।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥ ०११ ॥

ततः स्वकुलरक्षार्थमहं त्वा समुपागमम् ।
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव ॥ ०१२ ॥

ततोऽहमागम्य पुरा त्वामवोचं महीपते ।
नियमं कञ्चिदारप्स्ये शुश्रूषा क्रियतामिति ॥ ०१३ ॥

न च ते दुष्कृतं किञ्चिदहमासादयं गृहे ।
तेन जीवसि राजर्षे न भवेथास्ततोऽन्यथा ॥ ०१४ ॥

एतां बुद्धिं समास्थाय दिवसानेकविंशतिम् ।
सुप्तोऽस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव ॥ ०१५ ॥

यदा त्वया सभार्येण संसुप्तो न प्रबोधितः ।
अहं तदैव ते प्रीतो मनसा राजसत्तम ॥ ०१६ ॥

उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते ।
पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥ ०१७ ॥

अन्तर्हितश्चास्मि पुनः पुनरेव च ते गृहे ।
योगमास्थाय संविष्टो दिवसानेकविंशतिम्  ॥ ०१८  ॥

क्षुधितो मामसूयेथाः श्रमाद्वेति नराधिप ।
एतां बुद्धिं समास्थाय कर्शितौ वां मया क्षुधा  ॥ ०१९  ॥

न च तेऽभूत्सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव ।
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम्  ॥ ०२०  ॥

भोजनं च समानाय्य यत्तदादीपितं मया ।
क्रुध्येथा यदि मात्सर्यादिति तन्मर्षितं च ते  ॥ ०२१  ॥

ततोऽहं रथमारुह्य त्वामवोचं नराधिप ।
सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा  ॥ ०२२  ॥

अविशङ्को नरपते प्रीतोऽहं चापि तेन ते ।
धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयत्  ॥ ०२३  ॥

ततः प्रीतेन ते राजन्पुनरेतत्कृतं तव ।
सभार्यस्य वनं भूयस्तद्विद्धि मनुजाधिप  ॥ ०२४  ॥

प्रीत्यर्थं तव चैतन्मे स्वर्गसंदर्शनं कृतम् ।
यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं निदर्शनम्  ॥ ०२५  ॥

स्वर्गोद्देशस्त्वया राजन्सशरीरेण पार्थिव ।
मुहूर्तमनुभूतोऽसौ सभार्येण नृपोत्तम  ॥ ०२६  ॥

निदर्शनार्थं तपसो धर्मस्य च नराधिप ।
तत्र यासीत्स्पृहा राजंस्तच्चापि विदितं मम  ॥ ०२७  ॥

ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते ।
अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव ॥ ०२८ ॥

एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात दुर्लभम् ।
ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता ॥ ०२९ ॥

भविष्यत्येष ते कामः कुशिकात्कौशिको द्विजः ।
तृतीयं पुरुषं प्राप्य ब्राह्मणत्वं गमिष्यति ॥ ०३० ॥

वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा ।
पौत्रस्ते भविता विप्र तपस्वी पावकद्युतिः ॥ ०३१ ॥

यः स देवमनुष्याणां भयमुत्पादयिष्यति ।
त्रयाणां चैव लोकानां सत्यमेतद्ब्रवीमि ते ॥ ०३२ ॥

वरं गृहाण राजर्षे यस्ते मनसि वर्तते ।
तीर्थयात्रां गमिष्यामि पुरा कालोऽतिवर्तते ॥ ०३३ ॥

कुशिक उवाच ॥

एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने ।
भवत्वेतद्यथात्थ त्वं तपः पौत्रे ममानघ ॥ ०३४ ॥

ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ॥ ०३४ ॥

पुनश्चाख्यातुमिच्छामि भगवन्विस्तरेण वै ।
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन ॥ ०३५ ॥

कश्चासौ भविता बन्धुर्मम कश्चापि संमतः ॥ ०३५ ॥

# अध्याय ०५६

च्यवन उवाच ॥

अवश्यं कथनीयं मे तवैतन्नरपुङ्गव ।
यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप ॥ ००१ ॥

भृगूणां क्षत्रिया याज्या नित्यमेव जनाधिप ।
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ ००२ ॥

क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप ।
आ गर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ॥ ००३ ॥

तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः ।
और्वो नाम महातेजा ज्वलनार्कसमद्युतिः ॥ ००४ ॥

स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति ।
महीं सपर्वतवनां यः करिष्यति भस्मसात् ॥ ००५ ॥

कञ्चित्कालं तु तं वह्निं स एव शमयिष्यति ।
समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः ॥ ००६ ॥

पुत्रं तस्य महाभागमृचीकं भृगुनन्दनम् ।
साक्षात्कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥ ००७ ॥

क्षत्रियाणामभावाय दैवयुक्तेन हेतुना ।
स तु तं प्रतिगृह्यैव पुत्रे सङ्क्रामयिष्यति ॥ ००८ ॥

जमदग्नौ महाभागे तपसा भावितात्मनि ।
स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ॥ ००९ ॥

कुलात्तु तव धर्मात्मन्कन्यां सोऽधिगमिष्यति ।
उद्भावनार्थं भवतो वंशस्य नृपसत्तम ॥ ०१० ॥

गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः ।
ब्राह्मणं क्षत्रधर्माणं राममुत्पादयिष्यति ॥ ०११ ॥

क्षत्रियं विप्रकर्माणं बृहस्पतिमिवौजसा ।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम् ॥ ०१२ ॥

तपसा महता युक्तं प्रदास्यति महाद्युते ॥ ०१२ ॥

स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः ।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति ॥ ०१३ ॥

तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति ।
भविता त्वं च संबन्धी भृगूणां भावितात्मनाम् ॥ ०१४ ॥

भीष्म उवाच ॥

कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः ।
श्रुत्वा हृष्टोऽभवद्राजा वाक्यं चेदमुवाच ह ॥ ०१५ ॥

एवमस्त्विति धर्मात्मा तदा भरतसत्तम ॥ ०१५ ॥

च्यवनस्तु महातेजाः पुनरेव नराधिपम् ।
वरार्थं चोदयामास तमुवाच स पार्थिवः ॥ ०१६ ॥

बाढमेवं ग्रहीष्यामि कामं त्वत्तो महामुने ।

ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् ॥ ०१७ ॥

एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः ।
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा ॥ ०१८ ॥

एतत्ते कथितं सर्वमशेषेण मया नृप ।
भृगूणां कुशिकानां च प्रति संबन्धकारणम् ॥ ०१९ ॥

यथोक्तं मुनिना चापि तथा तदभवन्नृप ।
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव ह ॥ ०२० ॥

---

# यमनियमफलानि

## अध्याय ०५७

युधिष्ठिर उवाच ॥

मुह्यामीव निशम्याद्य चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसंघातैः श्रीमद्भिः पृथिवीमिमाम् ॥ ००१ ॥

प्राप्य राज्यानि शतशो महीं जित्वापि भारत ।
कोटिशः पुरुषान्हत्वा परितप्ये पितामह ॥ ००२ ॥

का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति ।
या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा ॥ ००३ ॥

वयं हि तान्गुरून्हत्वा ज्ञातींश्च सुहृदोऽपि च ।

अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ॥ ००४ ॥

शरीरं योक्तुमिच्छामि तपसोग्रेण भारत ।
उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशां पते ॥ ००५ ॥

वैशंपायन उवाच ॥

युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः ।
परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ॥ ००६ ॥

रहस्यमद्भुतं चैव शृणु वक्ष्यामि यत्त्वयि ।
या गतिः प्राप्यते येन प्रेत्यभावेषु भारत ॥ ००७ ॥

तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥ ००८ ॥

ज्ञानं विज्ञानमारोग्यं रूपं संपत्तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ॥ ००९ ॥

धनं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥ ०१० ॥

अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले ।
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ ०११ ॥

पयोभक्षो दिवं याति स्नानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्या नित्यश्राद्धेन संततिः ॥ ०१२ ॥

गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशनात् ।
स्त्रियस्त्रिषवणस्नानाद्वायुं पीत्वा क्रतुं लभेत् ॥ ०१३ ॥

नित्यस्नायी भवेद्दक्षः संध्ये तु द्वे जपन्द्विजः ।
मरुं साधयतो राज्यं नाकपृष्ठमनाशके ॥ ०१४ ॥

स्थण्डिले शयमानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर्वासांस्याभरणानि च ॥ ०१५ ॥

शय्यासनानि यानानि योगयुक्ते तपोधने ।
अग्निप्रवेशे नियतं ब्रह्मलोको विधीयते ॥ ०१६ ॥

रसानां प्रतिसंहारात्सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारात्प्रजास्यायुष्मती भवेत् ॥ ०१७ ॥

उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।
सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ॥ ०१८ ॥

कीर्तिर्भवति दानेन तथारोग्यमहिंसया ।
द्विजशुश्रूषया राज्यं द्विजत्वं वापि पुष्कलम् ॥ ०१९ ॥

पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती ।
अन्नपानप्रदानेन तृप्यते कामभोगतः ॥ ०२० ॥

सान्त्वदः सर्वभूतानां सर्वशोकैर्विमुच्यते ।
देवशुश्रूषया राज्यं दिव्यं रूपं नियच्छति ॥ ०२१ ॥

दीपालोकप्रदानेन चक्षुष्मान्भवते नरः ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥ ०२२ ॥

गन्धमाल्यनिवृत्त्या तु कीर्तिर्भवति पुष्कला ।
केशश्मश्रून्धारयतामग्र्या भवति संततिः ॥ ०२३ ॥

उपवासं च दीक्षां च अभिषेकं च पार्थिव ।

कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते ॥ ०२४ ॥

दासीदासमलङ्कारान्क्षेत्राणि च गृहाणि च ।
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ ॥ ०२५ ॥

क्रतुभिश्चोपवासैश्च त्रिदिवं याति भारत ।
लभते च चिरं स्थानं बलिपुष्पप्रदो नरः ॥ ०२६ ॥

सुवर्णशृङ्गैस्तु विभूषितानां; गवां सहस्रस्य नरः प्रदाता ।
प्राप्नोति पुण्यं दिवि देवलोक ;मित्येवमाहुर्मुनिदेवसंघाः ॥ ०२७ ॥

प्रयच्छते यः कपिलां सचैलां; कांस्योपदोहां कनकाग्रशृङ्गीम् ।
तैस्तैर्गुणैः कामदुघास्य भूत्वा; नरं प्रदातारमुपैति सा गौः ॥ ०२८ ॥

यावन्ति लोमानि भवन्ति धेन्वा ;स्तावत्फलं प्राप्नुते गोप्रदाता ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व ;मासप्तमं तारयते परत्र ॥ ०२९ ॥

सदक्षिणां काञ्चनचारुशृङ्गीं; कांस्योपदोहां द्रविणोत्तरीयाम् ।
धेनुं तिलानां ददतो द्विजाय; लोका वसूनां सुलभा भवन्ति ॥ ०३० ॥

स्वकर्मभिर्मानवं संनिबद्धं; तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुयुक्ता; दानं गवां तारयते परत्र ॥ ०३१ ॥

यो ब्रह्मदेयां तु ददाति कन्यां; भूमिप्रदानं च करोति विप्रे ।
ददाति चान्नं विधिवच्च यश्च; स लोकमाप्नोति पुरंदरस्य ॥ ०३२ ॥

नैवेशिकं सर्वगुणोपपन्नं; ददाति वै यस्तु नरो द्विजाय ।
स्वाध्यायचारित्रगुणान्विताय; तस्यापि लोकाः कुरुषूत्तरेषु ॥ ०३३ ॥

धुर्यप्रदानेन गवां तथाश्वै ;र्लोकानवाप्नोति नरो वसूनाम् ।
स्वर्गाय चाहुर्हि हिरण्यदानं; ततो विशिष्टं कनकप्रदानम् ॥ ०३४ ॥

छत्रप्रदानेन गृहं वरिष्ठं ; यानं तथोपानहसंप्रदाने ।
वस्त्रप्रदानेन फलं सुरूपं ; गन्धप्रदाने सुरभिर्नरः स्यात्  ॥ ०३५  ॥

पुष्पोपगं वाथ फलोपगं वा ; यः पादपं स्पर्शयते द्विजाय ।
स स्त्रीसमृद्धं बहुरत्नपूर्णं ; लभत्ययत्नोपगतं गृहं वै  ॥ ०३६  ॥

भक्षान्नपानीयरसप्रदाता ; सर्वानवाप्नोति रसान्प्रकामम् ।
प्रतिश्रयाच्छादनसंप्रदाता ; प्राप्नोति तानेव न संशयोऽत्र  ॥ ०३७  ॥

स्रग्धूपगन्धान्यनुलेपनानि ; स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेदरोग ;स्तथाभिरूपश्च नरेन्द्रलोके  ॥ ०३८  ॥

बीजैरशून्यं शयनैरुपेतं ; दद्याद्गृहं यः पुरुषो द्विजाय ।
पुण्याभिरामं बहुरत्नपूर्णं ; लभत्यधिष्ठानवरं स राजन्  ॥ ०३९  ॥

सुगन्धचित्रास्तरणोपपन्नं ; दद्यान्नरो यः शयनं द्विजाय ।
रूपान्वितां पक्षवतीं मनोज्ञां ; भार्यामयत्नोपगतां लभेत्सः  ॥ ०४०  ॥

पितामहस्यानुचरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते तस्मादित्याहुः परमर्षयः  ॥ ०४१  ॥

वैशंपायन उवाच  ॥

तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः ।
नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया  ॥ ०४२  ॥

ततो युधिष्ठिरः प्राह पाण्डवान्भरतर्षभ ।
पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः  ॥ ०४३  ॥

ततस्तु पाण्डवाः सर्वे द्रौपदी च यशस्विनी ।

युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ॥ ०४४ ॥

---

# ब्राह्मणप्रशंसा

## अध्याय ०५८

युधिष्ठिर उवाच ॥

यानीमानि बहिर्वेद्यां दानानि परिचक्षते ।
तेभ्यो विशिष्टं किं दानं मतं ते कुरुपुङ्गव ॥ ००१ ॥

कौतूहलं हि परमं तत्र मे वर्तते प्रभो ।
दातारं दत्तमन्वेति यद्दानं तत्प्रचक्ष्व मे ॥ ००२ ॥

भीष्म उवाच ॥

अभयं सर्वभूतेभ्यो व्यसने चाप्यनुग्रहम् ।
यच्चाभिलषितं दद्यात्तृषितायाभियाचते ॥ ००३ ॥

दत्तं मन्येत यद्दत्त्वा तद्दानं श्रेष्ठमुच्यते ।
दत्तं दातारमन्वेति यद्दानं भरतर्षभ ॥ ००४ ॥

हिरण्यदानं गोदानं पृथिवीदानमेव च ।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ॥ ००५ ॥

एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा ।
दानानि हि नरं पापान्मोक्षयन्ति न संशयः ॥ ००६ ॥

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ००७ ॥

प्रियाणि लभते लोके प्रियदः प्रियकृत्तथा ।
प्रियो भवति भूतानामिह चैव परत्र च ॥ ००८ ॥

याचमानमभीमानादाशावन्तमकिञ्चनम् ।
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥ ००९ ॥

अमित्रमपि चेद्दीनं शरणैषिणमागतम् ।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥ ०१० ॥

कृशाय ह्रीमते तात वृत्तिक्षीणाय सीदते ।
अपहन्यात्क्षुधं यस्तु न तेन पुरुषः समः ॥ ०११ ॥

ह्रिया तु नियतान्साधून्पुत्रदारैश्च कर्शितान् ।
अयाचमानान्कौन्तेय सर्वोपायैर्निमन्त्रय ॥ ०१२ ॥

आशिषं ये न देवेषु न मर्त्येषु च कुर्वते ।
अर्हन्तो नित्यसत्त्वस्था यथालब्धोपजीविनः ॥ ०१३ ॥

आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत ।
तान्युक्तैरुपजिज्ञास्य तथा द्विजवरोत्तमान् ॥ ०१४ ॥

कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य सर्वकामसुखावहैः ॥ ०१५ ॥

यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः ॥ ०१६ ॥

विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्यजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः ॥ ०१७ ॥

तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च ।
यत्करिष्यसि कल्याणं तत्त्वा लोकेषु धास्यति ॥ ०१८ ॥

यथाग्निहोत्रं सुहुतं सायं प्रातर्द्विजातिना ।
तथा भवति दत्तं वै द्विजेभ्योऽथ कृतात्मना ॥ ०१९ ॥

एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्तताम् ॥ ०२० ॥

निवापो दानसदृशस्तादृशेषु युधिष्ठिर ।
निवपन्पूजयंश्चैव तेष्वानृण्यं निगच्छति ॥ ०२१ ॥

य एव नो न कुप्यन्ति न लुभ्यन्ति तृणेष्वपि ।
त एव नः पूज्यतमा ये चान्ये प्रियवादिनः ॥ ०२२ ॥

ये नो न बहु मन्यन्ते न प्रवर्तन्ति चापरे ।
पुत्रवत्परिपाल्यास्ते नमस्तेभ्यस्तथाभयम् ॥ ०२३ ॥

ऋत्विक्पुरोहिताचार्या मृदुब्रह्मधरा हि ते ।
क्षत्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे ॥ ०२४ ॥

अस्ति मे बलवानस्मि राजास्मीति युधिष्ठिर ।
ब्राह्मणान्मा स्म पर्यश्नीर्वासोभिरशनेन च ॥ ०२५ ॥

यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता ॥ ०२६ ॥

नमस्कार्यास्त्वया विप्रा वर्तमाना यथातथम् ।

यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् ॥ ०२७ ॥

को ह्यन्यः सुप्रसादानां सुहृदामल्पतोषिणाम् ।
वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम ॥ ०२८ ॥

यथा पत्याश्रयो धर्मः स्त्रीणां लोके सनातनः ।
स देवः सा गतिर्नान्या तथास्माकं द्विजातयः ॥ ०२९ ॥

यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः ।
पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम् ॥ ०३० ॥

अवेदानामकीर्तीनामलोकानामयज्वनाम् ।
कोऽस्माकं जीवितेनार्थस्तद्धि नो ब्राह्मणाश्रयम् ॥ ०३१ ॥

अत्र ते वर्तयिष्यामि यथा धर्मः सनातनः ।
राजन्यो ब्राह्मणं राजन्पुरा परिचचार ह ॥ ०३२ ॥

वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः ॥ ०३२ ॥

दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पर्शपरिचर्यस्तु वैश्येन क्षत्रियेण च ॥ ०३३ ॥

मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान् ।
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान् ॥ ०३४ ॥

अपरेषां परेषां च परेभ्यश्चैव ये परे ।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च ॥ ०३५ ॥

ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥ ०३५ ॥

न मे पिता प्रियतरो न त्वं तात तथा प्रियः ।

न मे पितुः पिता राजन्न चात्मा न च जीवितम्  ॥ ०३६  ॥

त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन ।
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ  ॥ ०३७  ॥

ब्रवीमि सत्यमेतच्च यथाहं पाण्डुनन्दन ।
तेन सत्येन गच्छेयं लोकान्यत्र स शंतनुः  ॥ ०३८  ॥

पश्येयं च सतां लोकाञ्छुचीन्ब्रह्मपुरस्कृतान् ।
तत्र मे तात गन्तव्यमह्नाय च चिराय च  ॥ ०३९  ॥

सोऽहमेतादृशा.ण्ल्लोकान्दृष्ट्वा भरतसत्तम ।
यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव  ॥ ०४०  ॥

---

# अतिथियज्ञः

## अध्याय ०५९

युधिष्ठिर उवाच  ॥

यौ तु स्यातां चरणेनोपपन्नौ ; यौ विद्यया सदृशौ जन्मना च ।
ताभ्यां दानं कतरस्मै विशिष्ट ;मयाचमानाय च याचते च  ॥ ००१  ॥

भीष्म उवाच  ॥

श्रेयो वै याचतः पार्थ दत्तमाहुरयाचते ।
अर्हत्तमो वै धृतिमान्कृपणादधृतात्मनः  ॥ ००२  ॥

क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः ।
ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ॥ ००३ ॥

याञ्चामाहुरनीशस्य अभिहारं च भारत ।
उद्वेजयति याचन्हि सदा भूतानि दस्युवत् ॥ ००४ ॥

म्रियते याचमानो वै तमनु म्रियते ददत् ।
ददत्सञ्जीवयत्येनमात्मानं च युधिष्ठिर ॥ ००५ ॥

आनृशंस्यं परो धर्मो याचते यत्प्रदीयते ।
अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रय ॥ ००६ ॥

यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः ।
भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः ॥ ००७ ॥

तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि ।
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः ॥ ००८ ॥

तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परंतप ।
ददद्बहुविधान्दायानुपच्छन्दानयाचताम् ॥ ००९ ॥

यदग्निहोत्रे सुहुते सायंप्रातर्भवेत्फलम् ।
विद्यावेदव्रतवति तद्दानफलमुच्यते ॥ ०१० ॥

विद्यावेदव्रतस्नातानव्यपाश्रयजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणान्संशितव्रतान् ॥ ०११ ॥

कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौन्तेय कामैश्चान्यैर्द्विजोत्तमान् ॥ ०१२ ॥

अपि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धर्मज्ञाः सूक्ष्मदर्शिनः ॥ ०१३ ॥

अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान्गृहान् ।
येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ ०१४ ॥

अन्नानि प्रातःसवने नियता ब्रह्मचारिणः ।
ब्राह्मणास्तात भुञ्जानास्त्रेताग्नीन्प्रीणयन्तु ते ॥ ०१५ ॥

माध्यंदिनं ते सवनं ददतस्तात वर्तताम् ।
गा हिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव ॥ ०१६ ॥

तृतीयं सवनं तत्ते वैश्वदेवं युधिष्ठिर ।
यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छसि ॥ ०१७ ॥

अहिंसा सर्वभूतेभ्यः संविभागश्च सर्वशः ।
दमस्त्यागो धृतिः सत्यं भवत्ववभृथाय ते ॥ ०१८ ॥

एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञेभ्यो नित्यं तात प्रवर्तताम् ॥ ०१९ ॥

---

# क्शात्रियधर्माः

## अध्याय ०६०

युधिष्ठिर उवाच ॥

दानं यज्ञक्रिया चेह किं स्वित्प्रेत्य महाफलम् ।
कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा ॥ ००१ ॥

एतदिच्छामि विज्ञातुं याथातथ्येन भारत ।
विद्वञ्जिज्ञासमानाय दानधर्मान्प्रचक्ष्व मे ॥ ००२ ॥

अन्तर्वेद्यां च यद्दत्तं श्रद्धया चानृशंस्यतः ।
किं स्विन्निःश्रेयसं तात तन्मे ब्रूहि पितामह ॥ ००३ ॥

भीष्म उवाच ॥

रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते ।
तस्य वैतानिकं कर्म दानं चैवेह पावनम् ॥ ००४ ॥

न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
एतस्मात्कारणाद्यज्ञैर्यजेद्राजाप्तदक्षिणैः ॥ ००५ ॥

अथ चेत्प्रतिगृह्णीयुर्दद्यादहरहर्नृपः ।
श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमम् ॥ ००६ ॥

ब्राह्मणांस्तर्पयेद्द्रव्यैस्ततो यज्ञे यतव्रतः ।
मैत्रान्साधून्वेदविदः शीलवृत्ततपोन्वितान् ॥ ००७ ॥

यत्ते तेन करिष्यन्ति कृतं तेन भविष्यति ।
यज्ञान्साधय साधुभ्यः स्वाद्वन्नान्दक्षिणावतः ॥ ००८ ॥

इष्टं दत्तं च मन्येथा आत्मानं दानकर्मणा ।
पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ॥ ००९ ॥

प्रजावतो भरेथाश्च ब्राह्मणान्बहुभारिणः ।
प्रजावांस्तेन भवति यथा जनयिता तथा ॥ ०१० ॥

यावतो वै साधुधर्मान्सन्तः संवर्तयन्त्युत ।
सर्वे ते चापि भर्तव्या नरा ये बहुभारिणः ॥ ०११ ॥

समृद्धः संप्रयच्छस्व ब्राह्मणेभ्यो युधिष्ठिर ।
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ ॥ ०१२ ॥

आज्यानि यजमानेभ्यस्तथान्नाद्यानि भारत ।
अश्ववन्ति च यानानि वेश्मानि शयनानि च ॥ ०१३ ॥

एते देया व्युष्टिमन्तो लघूपायाश्च भारत ।
अजुगुप्सांश्च विज्ञाय ब्राह्मणान्वृत्तिकर्शितान् ॥ ०१४ ॥

उपच्छन्नं प्रकाशं वा वृत्त्या तान्प्रतिपादय ।
राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान्प्रति ॥ ०१५ ॥

एवं पापैर्विमुक्तस्त्वं पूतः स्वर्गमवाप्स्यसि ।
स्रंसयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि ॥ ०१६ ॥

ततश्च ब्रह्मभूयस्त्वमवाप्स्यसि धनानि च ।
आत्मनश्च परेषां च वृत्तिं संरक्ष भारत ॥ ०१७ ॥

पुत्रवच्चापि भृत्यान्स्वान्प्रजाश्च परिपालय ।
योगक्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत ॥ ०१८ ॥

अरक्षितारं हर्तारं विलोप्तारमदायकम् ।
तं स्म राजकलिं हन्युः प्रजाः संभूय निर्घृणम् ॥ ०१९ ॥

अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥ ०२० ॥

पापं कुर्वन्ति यत्किञ्चित्प्रजा राज्ञा ह्यरक्षिताः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ०२१ ॥

अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
चतुर्थं मतमस्माकं मनोः श्रुत्वानुशासनम् ॥ ०२२ ॥

शुभं वा यत्प्रकुर्वन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत ॥ ०२३ ॥

जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर ।
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ॥ ०२४ ॥

कुबेरमिव रक्षांसि शतक्रतुमिवामराः ।
ज्ञातयस्त्वानुजीवन्तु सुहृदश्च परंतप ॥ ०२५ ॥

---

# भूमिदानप्रशंसा

## अध्याय ०६१

युधिष्ठिर उवाच ॥

इदं देयमिदं देयमितीयं श्रुतिचोदना ।
बहुदेयाश्च राजानः किं स्विद्देयमनुत्तमम् ॥ ००१ ॥

भीष्म उवाच ॥

अति दानानि सर्वाणि पृथिवीदानमुच्यते ।

अचला ह्यक्षया भूमिर्दोग्ध्री कामाननुत्तमान्  ॥ ००२  ॥

दोग्ध्री वासांसि रत्नानि पशून्व्रीहियवांस्तथा ।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः  ॥ ००३  ॥

यावद्भूमेरायुरिह तावद्भूमिद एधते ।
न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर  ॥ ००४  ॥

अप्यल्पं प्रददुः पूर्वे पृथिव्या इति नः श्रुतम् ।
भूमिमेते ददुः सर्वे ये भूमिं भुञ्जते जनाः  ॥ ००५  ॥

स्वकर्मैवोपजीवन्ति नरा इह परत्र च ।
भूमिर्भूतिर्महादेवी दातारं कुरुते प्रियम्  ॥ ००६  ॥

य एतां दक्षिणां दद्यादक्षयां पृथिवीपतिः ।
पुनर्नरत्वं संप्राप्य भवेत्स पृथिवीपतिः  ॥ ००७  ॥

यथा दानं तथा भोग इति धर्मेषु निश्चयः ।
सङ्ग्रामे वा तनुं जह्याद्दद्याद्वा पृथिवीमिमाम्  ॥ ००८  ॥

इत्येतां क्षत्रबन्धूनां वदन्ति परमाशिषम् ।
पुनाति दत्ता पृथिवी दातारमिति शुश्रुम  ॥ ००९  ॥

अपि पापसमाचारं ब्रह्मघ्नमपि वानृतम् ।
सैव पापं पावयति सैव पापात्प्रमोचयेत्  ॥ ०१०  ॥

अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं जननी यथा  ॥ ०११  ॥

नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ।
दानं वाप्यथ वा ज्ञानं नाम्नोऽस्याः परमं प्रियम्  ॥ ०१२  ॥

तस्मात्प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः ॥ ०१२ ॥

नाभूमिपतिना भूमिरधिष्ठेया कथञ्चन ।
न वा पात्रेण वा गूहेदन्तर्धानेन वा चरेत् ॥ ०१३ ॥

ये चान्ये भूमिमिच्छेयुः कुर्युरेवमसंशयम् ॥ ०१३ ॥

यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः ।
भूमिं तु दत्त्वा साधुभ्यो विन्दते भूमिमेव हि ॥ ०१४ ॥

प्रेत्येह च स धर्मात्मा संप्राप्नोति महद्यशः ॥ ०१४ ॥

यस्य विप्रानुशासन्ति साधोर्भूमिं सदैव हि ।
न तस्य शत्रवो राजन्प्रशासन्ति वसुंधराम् ॥ ०१५ ॥

यत्किञ्चित्पुरुषः पापं कुरुते वृत्तिकर्शितः ।
अपि गोचर्ममात्रेण भूमिदानेन पूयते ॥ ०१६ ॥

येऽपि सङ्कीर्णकर्माणो राजानो रौद्रकर्मिणः ।
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥ ०१७ ॥

अल्पान्तरमिदं शश्वत्पुराणा मेनिरे जनाः ।
यो यजेदश्वमेधेन दद्याद्वा साधवे महीम् ॥ ०१८ ॥

अपि चेत्सुकृतं कृत्वा शङ्केरन्नपि पण्डिताः ।
अशक्यमेकमेवैतद्भूमिदानमनुत्तमम् ॥ ०१९ ॥

सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञ ददाति वसुधां ददत् ॥ ०२० ॥

तपो यज्ञः श्रुतं शीलमलोभः सत्यसंधता ।
गुरुदैवतपूजा च नातिवर्तन्ति भूमिदम् ॥ ०२१ ॥

भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः सिद्धा नातिक्रामन्ति भूमिदम् ॥ ०२२ ॥

यथा जनित्री क्षीरेण स्वपुत्रं भरते सदा ।
अनुगृह्णाति दातारं तथा सर्वरसैर्मही ॥ ०२३ ॥

मृत्योर्वै किङ्करो दण्डस्तापो वह्नेः सुदारुणः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥ ०२४ ॥

पितृंश्च पितृलोकस्थान्देवलोके च देवताः ।
संतर्पयति शान्तात्मा यो ददाति वसुंधराम् ॥ ०२५ ॥

कृशाय म्रियमाणाय वृत्तिम्लानाय सीदते ।
भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ॥ ०२६ ॥

यथा धावति गौर्वत्सं क्षीरमभ्युत्सृजन्त्युत ।
एवमेव महाभाग भूमिर्भवति भूमिदम् ॥ ०२७ ॥

हलकृष्टां महीं दत्त्वा सबीजां सफलामपि ।
उदीर्णं वापि शरणं तथा भवति कामदः ॥ ०२८ ॥

ब्राह्मणं वृत्तसंपन्नमाहिताग्निं शुचिव्रतम् ।
नरः प्रतिग्राह्य महीं न याति यमसादनम् ॥ ०२९ ॥

यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ।
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ॥ ०३० ॥

अत्र गाथा भूमिगीताः कीर्तयन्ति पुराविदः ।

याः श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ॥ ०३१ ॥

मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ ।
अस्मि.ण्ल्लोके परे चैव ततश्चाजनने पुनः ॥ ०३२ ॥

य इमां व्याहृतिं वेद ब्राह्मणो ब्रह्मसंश्रितः ।
श्राद्धस्य हूयमानस्य ब्रह्मभूयं स गच्छति ॥ ०३३ ॥

कृत्यानामभिशस्तानां दुरिष्टशमनं महत् ।
प्रायश्चित्तमहं कृत्वा पुनात्युभयतो दश ॥ ०३४ ॥

पुनाति य इदं वेद वेद चाहं तथैव च ।
प्रकृतिः सर्वभूतानां भूमिर्वै शाश्वती मता ॥ ०३५ ॥

अभिषिच्यैव नृपतिं श्रावयेदिममागमम् ।
यथा श्रुत्वा महीं दद्यान्नादद्यात्साधुतश्च ताम् ॥ ०३६ ॥

सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयम् ।
राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ॥ ०३७ ॥

अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ते न सुखं प्रस्वपन्ति च ॥ ०३८ ॥

सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः ।
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ॥ ०३९ ॥

अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः ।
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ॥ ०४० ॥

तस्य राज्ञः शुभैरार्यैः कर्मभिर्निर्वृताः प्रजाः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥ ०४१ ॥

स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् ।
स दाता स च विक्रान्तो यो ददाति वसुंधराम्  ॥ ०४२  ॥

आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः ।
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे  ॥ ०४३  ॥

यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः  ॥ ०४४  ॥

आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवान्प्रतिनन्दन्ति भूमिदम्  ॥ ०४५  ॥

भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च ।
चतुर्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः  ॥ ०४६  ॥

एषा माता पिता चैव जगतः पृथिवीपते ।
नानया सदृशं भूतं किञ्चिदस्ति जनाधिप  ॥ ०४७  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर  ॥ ०४८  ॥

इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता ।
मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं बृहस्पतिम्  ॥ ०४९  ॥

भगवन्केन दानेन स्वर्गतः सुखमेधते ।
यदक्षयं महार्घं च तद्ब्रूहि वदतां वर  ॥ ०५०  ॥

इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः ।
बृहस्पतिर्महातेजाः प्रत्युवाच शतक्रतुम्  ॥ ०५१  ॥

सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
ददद्देतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥ ०५२ ॥

न भूमिदानाद्देवेन्द्र परं किञ्चिदिति प्रभो ।
विशिष्टमिति मन्यामि यथा प्राहुर्मनीषिणः ॥ ०५३ ॥

ये शूरा निहता युद्धे स्वर्याता दानगृद्धिनः ।
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ॥ ०५४ ॥

भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः शूरा नातिक्रामन्ति भूमिदम् ॥ ०५५ ॥

पञ्च पूर्वादिपुरुषाः षड्च ये वसुधां गताः ।
एकादश ददद्भूमिं परित्रातीह मानवः ॥ ०५६ ॥

रत्नोपकीर्णां वसुधां यो ददाति पुरंदर ।
स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ॥ ०५७ ॥

महीं स्फीतां ददद्राजा सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥ ०५८ ॥

सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥ ०५९ ॥

सर्वकामदुघां धेनुं सर्वकामपुरोगमाम् ।
ददाति यः सहस्राक्ष स स्वर्गं याति मानवः ॥ ०६० ॥

मधुसर्पिःप्रवाहिन्यः पयोदधिवहास्तथा ।
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥ ०६१ ॥

भूमिप्रदानान्नृपतिर्मुच्यते राजकिल्बिषात् ।

न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ ०६२ ॥

ददाति यः समुद्रान्तां पृथिवीं शस्त्रनिर्जिताम् ।
तं जनाः कथयन्तीह यावद्धरति गौरियम् ॥ ०६३ ॥

पुण्यामृद्धरसां भूमिं यो ददाति पुरंदर ।
न तस्य लोकाः क्षीयन्ते भूमिदानगुणार्जिताः ॥ ०६४ ॥

सर्वथा पार्थिवेनेह सततं भूतिमिच्छता ।
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सता ॥ ०६५ ॥

अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ॥ ०६६ ॥

सागरान्सरितः शैलान्काननानि च सर्वशः ।
सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ॥ ०६७ ॥

तडागान्युदपानानि स्रोतांसि च सरांसि च ।
स्नेहान्सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ०६८ ॥

ओषधीः क्षीरसंपन्ना नगान्पुष्पफलान्वितान् ।
काननोपलशैलांश्च ददाति वसुधां ददत् ॥ ०६९ ॥

अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ ०७० ॥

दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् ।
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ॥ ०७१ ॥

न ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः ।
स बद्धो वारुणैः पाशैस्तप्यते मृत्युशासनात् ॥ ०७२ ॥

आहिताग्निं सदायज्ञं कृशभृत्यं प्रियातिथिम् ।
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ॥ ०७३ ॥

ब्राह्मणेष्वृणभूतं स्यात्पार्थिवस्य पुरंदर ।
इतरेषां तु वर्णानां तारयेत्कृशदुर्बलान् ॥ ०७४ ॥

नाच्छिन्द्यात्स्पर्शितां भूमिं परेण त्रिदशाधिप ।
ब्राह्मणाय सुरश्रेष्ठ कृशभृत्याय कश्चन ॥ ०७५ ॥

अथाश्रु पतितं तेषां दीनानामवसीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलम् ॥ ०७६ ॥

भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेत्पुनः ।
तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते ॥ ०७७ ॥

इक्षुभिः संततां भूमिं यवगोधूमसङ्कुलाम् ।
गोश्ववाहनसंपूर्णां बाहुवीर्यसमार्जिताम् ॥ ०७८ ॥

निधिगर्भां ददद्भूमिं सर्वरत्नपरिच्छदाम् ।
अक्षया.ण्ल्लभते लोकान्भूमिसत्रं हि तस्य तत् ॥ ०७९ ॥

विधूय कलुषं सर्वं विरजाः संमतः सताम् ।
लोके महीयते सद्भिर्यो ददाति वसुंधराम् ॥ ०८० ॥

यथाप्सु पतितः शक्र तैलबिन्दुर्विसर्पति ।
तथा भूमिकृतं दानं सस्ये सस्ये विसर्पति ॥ ०८१ ॥

ये रणाग्रे महीपालाः शूराः समितिशोभनाः ।
वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ॥ ०८२ ॥

नृत्यगीतपरा नार्यो दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं दिवि ॥ ०८३ ॥

मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग्विधिनेह द्विजातये ॥ ०८४ ॥

शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं नरम् ॥ ०८५ ॥

शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः ।
भूमिप्रदानात्पुष्पाणि हिरण्यनिचयास्तथा ॥ ०८६ ॥

आज्ञा सदाप्रतिहता जयशब्दो भवत्यथ ।
भूमिदानस्य पुष्पाणि फलं स्वर्गः पुरंदर ॥ ०८७ ॥

हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाड्वलाः ।
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ॥ ०८८ ॥

नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥ ०८९ ॥

एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम् ।
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ॥ ०९० ॥

य इमं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ।
न तस्य रक्षसां भागो नासुराणां भवत्युत ॥ ०९१ ॥

अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः ।
तस्माच्छ्राद्धेष्विदं विप्रो भुञ्जतः श्रावयेद्द्विजान् ॥ ०९२ ॥

इत्येतत्सर्वदानानां श्रेष्ठमुक्तं तवानघ ।

मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि ॥ ०९३ ॥

---

# अन्नदानप्रशंसा

## अध्याय ०६२

युधिष्ठिर उवाच ॥

कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥ ००१ ॥

केन तुष्यन्ति ते सद्यस्तुष्टाः किं प्रदिशन्त्युत ।
शंस मे तन्महाबाहो फलं पुण्यकृतं महत् ॥ ००२ ॥

दत्तं किं फलवद्राजन्निह लोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ ००३ ॥

भीष्म उवाच ॥

इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ तन्मे गदतः शृणु भारत ॥ ००४ ॥

नारद उवाच ॥

अन्नमेव प्रशंसन्ति देवाः सर्षिगणाः पुरा ।
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ००५ ॥

अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ००६ ॥

अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ ००७ ॥

अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च ।
अन्नात्प्रभवति प्राणः प्रत्यक्षं नात्र संशयः ॥ ००८ ॥

कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ ००९ ॥

ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥ ०१० ॥

श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् ।
अर्चयेद्भूतिमन्विच्छन्गृहस्थो गृहमागतम् ॥ ०११ ॥

क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अन्नदः प्राप्नुते राजन्दिवि चेह च यत्सुखम् ॥ ०१२ ॥

नावमन्येदभिगतं न प्रणुद्यात्कथञ्चन ।
अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥ ०१३ ॥

यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय स महद्धर्ममाप्नुयात् ॥ ०१४ ॥

पितृन्देवानृषीन्विप्रानतिथींश्च जनाधिप ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ ०१५ ॥

कृत्वापि पापकं कर्म यो दद्यादन्नमर्थिने ।

ब्राह्मणाय विशेषेण न स पापेन युज्यते ॥ ०१६ ॥

ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् ।
अन्नदानं च शूद्रे च ब्राह्मणे च विशिष्यते ॥ ०१७ ॥

न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव वा ।
भिक्षितो ब्राह्मणेनेह जन्म वान्नं प्रयाचितः ॥ ०१८ ॥

अन्नदस्यान्नवृक्षाश्च सर्वकामफलान्विताः ।
भवन्तीहाथ वामुत्र नृपते नात्र संशयः ॥ ०१९ ॥

आशंसन्ते हि पितरः सुवृष्टिमिव कर्षकाः ।
अस्माकमपि पुत्रो वा पौत्रो वान्नं प्रदास्यति ॥ ०२० ॥

ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते ।
अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात् ॥ ०२१ ॥

ब्राह्मणः सर्वभूतानामतिथिः प्रसृताग्रभुक् ।
विप्रा यमभिगच्छन्ति भिक्षमाणा गृहं सदा ॥ ०२२ ॥

सत्कृताश्च निवर्तन्ते तदतीव प्रवर्धते ।
महाभोगे कुले जन्म प्रेत्य प्राप्नोति भारत ॥ ०२३ ॥

दत्त्वा त्वन्नं नरो लोके तथा स्थानमनुत्तमम् ।
मृष्टमृष्टान्नदायी तु स्वर्गे वसति सत्कृतः ॥ ०२४ ॥

अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठितम् ।
अन्नदः पशुमान्पुत्री धनवान्भोगवानपि ॥ ०२५ ॥

प्राणवांश्चापि भवति रूपवांश्च तथा नृप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः ॥ ०२६ ॥

अन्नं हि दत्त्वातिथये ब्राह्मणाय यथाविधि ।
प्रदाता सुखमाप्नोति देवैश्चाप्यभिपूज्यते ॥ ०२७ ॥

ब्राह्मणो हि महद्भूतं क्षेत्रं चरति पादवत् ।
उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महत् ॥ ०२८ ॥

प्रत्यक्षं प्रीतिजननं भोक्तृदात्रोर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ ०२९ ॥

अन्नाद्धि प्रसवं विद्धि रतिमन्नाद्धि भारत ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथान्नतः ॥ ०३० ॥

अन्नं ह्यमृतमित्याह पुराकल्पे प्रजापतिः ।
अन्नं भुवं दिवं खं च सर्वमन्ने प्रतिष्ठितम् ॥ ०३१ ॥

अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः ।
बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ॥ ०३२ ॥

आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।
न वर्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ॥ ०३३ ॥

अन्नतः सर्वमेतद्धि यत्किञ्चित्स्थाणु जङ्गमम् ।
त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ॥ ०३४ ॥

अन्नदस्य मनुष्यस्य बलमोजो यशः सुखम् ।
कीर्तिश्च वर्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ ०३५ ॥

मेघेष्वम्भः संनिधत्ते प्राणानां पवनः शिवः ।
तच्च मेघगतं वारि शक्रो वर्षति भारत ॥ ०३६ ॥

आदत्ते च रसं भौममादित्यः स्वगभस्तिभिः ।
वायुरादित्यतस्तांश्च रसान्देवः प्रजापतिः ॥ ०३७ ॥

तद्यदा मेघतो वारि पतितं भवति क्षितौ ।
तदा वसुमती देवी स्निग्धा भवति भारत ॥ ०३८ ॥

ततः सस्यानि रोहन्ति येन वर्तयते जगत् ।
मांसमेदोस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ॥ ०३९ ॥

संभवन्ति ततः शुक्रात्प्राणिनः पृथिवीपते ।
अग्नीषोमौ हि तच्छुक्रं प्रजनः पुष्यतश्च ह ॥ ०४० ॥

एवमन्नं च सूर्यश्च पवनः शुक्रमेव च ।
एक एव स्मृतो राशिर्यतो भूतानि जज्ञिरे ॥ ०४१ ॥

प्राणान्ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाशु यो दद्यादन्नमर्थिने ॥ ०४२ ॥

भीष्म उवाच ॥

नारदेनैवमुक्तोऽहमदामन्नं सदा नृप ।
अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ॥ ०४३ ॥

दत्त्वान्नं विधिवद्राजन्विप्रेभ्यस्त्वमपि प्रभो ।
यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि ॥ ०४४ ॥

अन्नदानां हि ये लोकास्तांस्त्वं शृणु नराधिप ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ ०४५ ॥

नानासंस्थानरूपाणि नानास्तम्भान्वितानि च ॥ ०४५ ॥

चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ ०४६ ॥

अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च ॥ ०४७ ॥

सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ।
वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः ॥ ०४८ ॥

घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ।
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ॥ ०४९ ॥

क्षीरं स्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ।
प्रासादाः पाण्डुराभ्राभाः शय्याश्च कनकोज्ज्वलाः ॥ ०५० ॥

तानन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ॥ ०५० ॥

एते लोकाः पुण्यकृतामन्नदानां महात्मनाम् ।
तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ॥ ०५१ ॥

---

# नक्शात्रयोगदानम्

## अध्याय ०६३

युधिष्ठिर उवाच ॥

श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः ।

नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
देवक्याश्चैव संवादं देवर्षेर्नारदस्य च ॥ ००२ ॥

द्वारकामनुसंप्राप्तं नारदं देवदर्शनम् ।
पप्रच्छैनं ततः प्रश्नं देवकी धर्मदर्शिनी ॥ ००३ ॥

तस्याः संपृच्छमानाया देवर्षिर्नारदस्तदा ।
आचष्ट विधिवत्सर्वं यत्तच्छृणु विशां पते ॥ ००४ ॥

नारद उवाच ॥

कृत्तिकासु महाभागे पायसेन ससर्पिषा ।
संतर्प्य ब्राह्मणान्साधू.ण्ल्लोकानाप्नोत्यनुत्तमान् ॥ ००५ ॥

रोहिण्यां प्रथितैर्मांसैर्माषैरन्नेन सर्पिषा ।
पयोऽनुपानं दातव्यमानृण्यार्थं द्विजातये ॥ ००६ ॥

दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ।
गच्छन्ति मानुषाल्लोकात्स्वर्गलोकमनुत्तमम् ॥ ००७ ॥

आर्द्रायां कृसरं दत्त्वा तैलमिश्रमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ ००८ ॥

अपूपान्पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।
यशस्वी रूपसंपन्नो बह्वन्ने जायते कुले ॥ ००९ ॥

पुष्ये तु कनकं दत्त्वा कृतं चाकृतमेव च ।

अनालोकेषु लोकेषु सोमवत्स विराजते ॥ ०१० ॥

आश्लेषायां तु यो रूप्यमृषभं वा प्रयच्छति ।
स सर्वभयनिर्मुक्तः शात्रवानधितिष्ठति ॥ ०११ ॥

मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते ॥ ०१२ ॥

फल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ।
भक्षान्फाणितसंयुक्तान्दत्त्वा सौभाग्यमृच्छति ॥ ०१३ ॥

घृतक्षीरसमायुक्तं विधिवत्षष्टिकौदनम् ।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥ ०१४ ॥

यद्यत्प्रदीयते दानमुत्तराविषये नरैः ।
महाफलमनन्तं च भवतीति विनिश्चयः ॥ ०१५ ॥

हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।
प्राप्नोति परमा.ण्ल्लोकान्पुण्यकामसमन्वितान् ॥ ०१६ ॥

चित्रायामृषभं दत्त्वा पुण्यान्गन्धांश्च भारत ।
चरत्यप्सरसां लोके रमते नन्दने तथा ॥ ०१७ ॥

स्वातावथ धनं दत्त्वा यदिष्टतममात्मनः ।
प्राप्नोति लोकान्स शुभानिह चैव महद्यशः ॥ ०१८ ॥

विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ।
सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥ ०१९ ॥

पितृन्देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति ॥ ०२० ॥

दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
नरकादींश्च सङ्क्लेशान्नाप्नोतीति विनिश्चयः ॥ ०२१ ॥

अनुराधासु प्रावारं वस्त्रान्तरमुपोषितः ।
दत्त्वा युगशतं चापि नरः स्वर्गे महीयते ॥ ०२२ ॥

कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां च विन्दति ॥ ०२३ ॥

मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ।
पितॄन्प्रीणयते चापि गतिमिष्टां च गच्छति ॥ ०२४ ॥

अथ पूर्वास्वषाढासु दधिपात्राण्युपोषितः ।
कुलवृत्तोपसंपन्ने ब्राह्मणे वेदपारगे ॥ ०२५ ॥

प्रदाय जायते प्रेत्य कुले सुबहुगोकुले ॥ ०२५ ॥

उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ।
दत्त्वोत्तरास्वषाढासु सर्वकामानवाप्नुयात् ॥ ०२६ ॥

दुग्धं त्वभिजिते योगे दत्त्वा मधुघृताप्लुतम् ।
धर्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते ॥ ०२७ ॥

श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन सर्वलोकानसंवृतान् ॥ ०२८ ॥

गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः ।
वस्त्ररश्मिधरं सद्यः प्रेत्य राज्यं प्रपद्यते ॥ ०२९ ॥

गन्धाञ्शतभिषग्योगे दत्त्वा सागुरुचन्दनान् ।

प्राप्नोत्यप्सरसां लोकान्प्रेत्य गन्धांश्च शाश्वतान् ॥ ०३० ॥

पूर्वभाद्रपदायोगे राजमाषान्प्रदाय तु ।
सर्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् ॥ ०३१ ॥

औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
स पितॄन्प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ॥ ०३२ ॥

कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामानादाय दातारमुपतिष्ठति ॥ ०३३ ॥

रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः ।
हस्त्यश्वरथसंपन्ने वर्चस्वी जायते कुले ॥ ०३४ ॥

भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ।
गाः सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥ ०३५ ॥

भीष्म उवाच ॥

इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः ।
देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदम् ॥ ०३६ ॥

---

# काञ्चनादिदानम्

## अध्याय ०६४

भीष्म उवाच ॥

सर्वान्कामान्प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत्  ॥ ००१  ॥

पवित्रं शुच्यथायुष्यं पितृणामक्षयं च तत् ।
सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्तितम्  ॥ ००२  ॥

पानीयदानं परमं दानानां मनुरब्रवीत् ।
तस्माद्वापीश्च कूपांश्च तडागानि च खानयेत्  ॥ ००३  ॥

अर्धं पापस्य हरति पुरुषस्येह कर्मणः ।
कूपः प्रवृत्तपानीयः सुप्रवृत्तश्च नित्यशः  ॥ ००४  ॥

सर्वं तारयते वंशं यस्य खाते जलाशये ।
गावः पिबन्ति विप्राश्च साधवश्च नराः सदा  ॥ ००५  ॥

निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।
स दुर्गं विषमं कृच्छ्रं न कदाचिदवाप्नुते  ॥ ००६  ॥

बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च ।
अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा  ॥ ००७  ॥

परमं भेषजं ह्येतद्यज्ञानामेतदुत्तमम् ।
रसानामुत्तमं चैतत्फलानां चैतदुत्तमम्  ॥ ००८  ॥

फलकामो यशस्कामः पुष्टिकामश्च नित्यदा ।
घृतं दद्याद्द्विजातिभ्यः पुरुषः शुचिरात्मवान्  ॥ ००९  ॥

घृतं मासे आश्वयुजि विप्रेभ्यो यः प्रयच्छति ।
तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ  ॥ ०१०  ॥

पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति ।
गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ॥ ०११ ॥

पिपासया न म्रियते सोपच्छन्दश्च दृश्यते ।
न प्राप्नुयाच्च व्यसनं करकान्यः प्रयच्छति ॥ ०१२ ॥

प्रयतो ब्राह्मणाग्रेभ्यः श्रद्धया परया युतः ।
उपस्पर्शनषड्भागं लभते पुरुषः सदा ॥ ०१३ ॥

यः साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
प्रतापार्थं च राजेन्द्र वृत्तवद्भ्यः सदा नरः ॥ ०१४ ॥

सिध्यन्त्यर्थाः सदा तस्य कार्याणि विविधानि च ।
उपर्युपरि शत्रूणां वपुषा दीप्यते च सः ॥ ०१५ ॥

भगवांश्चास्य सुप्रीतो वह्निर्भवति नित्यशः ।
न तं त्यजन्ते पशवः सङ्ग्रामे च जयत्यपि ॥ ०१६ ॥

पुत्राञ्छ्रियं च लभते यश्छत्रं संप्रयच्छति ।
चक्षुर्व्याधिं न लभते यज्ञभागमथाश्नुते ॥ ०१७ ॥

निदाघकाले वर्षे वा यश्छत्रं संप्रयच्छति ।
नास्य कश्चिन्मनोदाहः कदाचिदपि जायते ॥ ०१८ ॥

कृच्छ्रात्स विषमाच्चैव विप्र मोक्षमवाप्नुते ॥ ०१८ ॥

प्रदानं सर्वदानानां शकटस्य विशिष्यते ।
एवमाह महाभागः शाण्डिल्यो भगवानृषिः ॥ ०१९ ॥

# तिलादिदानफलम्

## अध्याय ०६५

युधिष्ठिर उवाच ॥

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
यत्फलं तस्य भवति तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यः समाहितः ।
मर्दते कण्टकान्सर्वान्विषमान्निस्तरत्यपि ॥ ००२ ॥

स शत्रूणामुपरि च संतिष्ठति युधिष्ठिर ॥ ००२ ॥

यानं चाश्वतरीयुक्तं तस्य शुभ्रं विशां पते ।
उपतिष्ठति कौन्तेय रूप्यकाञ्चनभूषणम् ॥ ००३ ॥

शकटं दम्यसंयुक्तं दत्तं भवति चैव हि ॥ ००३ ॥

युधिष्ठिर उवाच ॥

यत्फलं तिलदाने च भूमिदाने च कीर्तितम् ।
गोप्रदानेऽन्नदाने च भूयस्तद्ब्रूहि कौरव ॥ ००४ ॥

भीष्म उवाच ॥

शृणुष्व मम कौन्तेय तिलदानस्य यत्फलम् ।
निशम्य च यथान्यायं प्रयच्छ कुरुसत्तम ॥ ००५ ॥

पितॄणां प्रथमं भोज्यं तिलाः सृष्टाः स्वयंभुवा ।
तिलदानेन वै तस्मात्पितृपक्षः प्रमोदते ॥ ००६ ॥

माघमासे तिलान्यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्त्वसमाकीर्णं नरकं स न पश्यति ॥ ००७ ॥

सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् ।
न चाकामेन दातव्यं तिलश्राद्धं कथञ्चन ॥ ००८ ॥

महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः ।
ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो ॥ ००९ ॥

पौष्टिका रूपदाश्चैव तथा पापविनाशनाः ।
तस्मात्सर्वप्रदानेभ्यस्तिलदानं विशिष्यते ॥ ०१० ॥

आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा ।
महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः ॥ ०११ ॥

तिलहोमपरा विप्राः सर्वे संयतमैथुनाः ।
समा गव्येन हविषा प्रवृत्तिषु च संस्थिताः ॥ ०१२ ॥

सर्वेषामेव दानानां तिलदानं परं स्मृतम् ।
अक्षयं सर्वदानानां तिलदानमिहोच्यते ॥ ०१३ ॥

उत्पन्ने च पुरा हव्ये कुशिकर्षिः परंतप ।
तिलैरग्नित्रयं हुत्वा प्राप्तवान्गतिमुत्तमाम् ॥ ०१४ ॥

इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमम् ।
विधानं येन विधिना तिलानामिह शस्यते ॥ ०१५ ॥

अत ऊर्ध्वं निबोधेदं देवानां यष्टुमिच्छताम् ।

समागमं महाराज ब्रह्मणा वै स्वयंभुवा ॥ ०१६ ॥

देवाः समेत्य ब्रह्माणं भूमिभागं यियक्षवः ।
शुभं देशमयाचन्त यजेम इति पार्थिव ॥ ०१७ ॥

देवा ऊचुः ॥

भगवंस्त्वं प्रभुर्भूमेः सर्वस्य त्रिदिवस्य च ।
यजेमहि महाभाग यज्ञं भवदनुज्ञया ॥ ०१८ ॥

नाननुज्ञातभूमिर्हि यज्ञस्य फलमश्नुते ॥ ०१८ ॥

त्वं हि सर्वस्य जगतः स्थावरस्य चरस्य च ।
प्रभुर्भवसि तस्मात्त्वं समनुज्ञातुमर्हसि ॥ ०१९ ॥

ब्रह्मोवाच ॥

ददामि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः ।
यस्मिन्देशे करिष्यध्वं यज्ञं काश्यपनन्दनाः ॥ ०२० ॥

देवा ऊचुः ॥

भगवन्कृतकामाः स्मो यक्ष्यामस्त्वाप्तदक्षिणैः ।
इमं तु देशं मुनयः पर्युपासन्त नित्यदा ॥ ०२१ ॥

भीष्म उवाच ॥

ततोऽगस्त्यश्च कण्वश्च भृगुरत्रिर्वृषाकपिः ।
असितो देवलश्चैव देवयज्ञमुपागमन् ॥ ०२२ ॥

ततो देवा महात्मान ईजिरे यज्ञमच्युत ।

तथा समापयामासुर्यथाकालं सुरर्षभाः ॥ ०२३ ॥

त इष्टयज्ञास्त्रिदशा हिमवत्यचलोत्तमे ।
षष्ठमंशं क्रतोस्तस्य भूमिदानं प्रचक्रिरे ॥ ०२४ ॥

प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् ।
न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते ॥ ०२५ ॥

शीतवातातपसहां गृहभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते ॥ ०२६ ॥

मुदितो वसते प्राज्ञः शक्रेण सह पार्थिव ।
प्रतिश्रयप्रदाता च सोऽपि स्वर्गे महीयते ॥ ०२७ ॥

अध्यापककुले जातः श्रोत्रियो नियतेन्द्रियः ।
गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते ॥ ०२८ ॥

तथा गवार्थे शरणं शीतवर्षसहं महत् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥ ०२९ ॥

क्षेत्रभूमिं ददल्लोके पुत्र श्रियमवाप्नुयात् ।
रत्नभूमिं प्रदत्त्वा तु कुलवंशं विवर्धयेत् ॥ ०३० ॥

न चोषरां न निर्दग्धां महीं दद्यात्कथञ्चन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥ ०३१ ॥

पारक्ये भूमिदेशे तु पितॄणां निर्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥ ०३२ ॥

तस्मात्क्रीत्वा महीं दद्यात्स्वल्पामपि विचक्षणः ।
पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः ॥ ०३३ ॥

अटवीपर्वताश्चैव नदीतीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तत्र परिग्रहः ॥ ०३४ ॥

इत्येतद्भूमिदानस्य फलमुक्तं विशां पते ।
अतः परं तु गोदानं कीर्तयिष्यामि तेऽनघ ॥ ०३५ ॥

गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तपस्ताभिः समास्थितः ॥ ०३६ ॥

ब्रह्मलोके वसन्त्येताः सोमेन सह भारत ।
आसां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम् ॥ ०३७ ॥

पयसा हविषा दध्ना शकृताप्यथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ॥ ०३८ ॥

नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते ।
न वर्षं विषमं वापि दुःखमासां भवत्युत ॥ ०३९ ॥

ब्राह्मणैः सहिता यान्ति तस्मात्परतरं पदम् ।
एकं गोब्राह्मणं तस्मात्प्रवदन्ति मनीषिणः ॥ ०४० ॥

रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः ।
ततश्चर्मण्वती राजन्गोचर्मभ्यः प्रवर्तिता ॥ ०४१ ॥

पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः ।
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ॥ ०४२ ॥

निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ॥ ०४२ ॥

गवां सहस्रदः प्रेत्य नरकं न प्रपश्यति ।

सर्वत्र विजयं चापि लभते मनुजाधिप ॥ ०४३ ॥

अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः ।
तस्माद्ददाति यो धेनुममृतं स प्रयच्छति ॥ ०४४ ॥

अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः ।
तस्माद्ददाति यो धेनुं स हौम्यं संप्रयच्छति ॥ ०४५ ॥

स्वर्गो वै मूर्तिमानेष वृषभं यो गवां पतिम् ।
विप्रे गुणयुते दद्यात्स वै स्वर्गे महीयते ॥ ०४६ ॥

प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ।
तस्माद्ददाति यो धेनुं प्राणान्वै स प्रयच्छति ॥ ०४७ ॥

गावः शरण्या भूतानामिति वेदविदो विदुः ।
तस्माद्ददाति यो धेनुं शरणं संप्रयच्छति ॥ ०४८ ॥

न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीविने न दातव्या तथा गौः पुरुषर्षभ ॥ ०४९ ॥

ददाति तादृशानां वै नरो गाः पापकर्मणाम् ।
अक्षयं नरकं यातीत्येवमाहुर्मनीषिणः ॥ ०५० ॥

न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥ ०५१ ॥

दशगोसहस्रदः सम्यक्शक्रेण सह मोदते ।
अक्षया.ण्ल्लभते लोकान्नरः शतसहस्रदः ॥ ०५२ ॥

इत्येतद्गोप्रदानं च तिलदानं च कीर्तितम् ।
तथा भूमिप्रदानं च श्णुष्वान्ने च भारत ॥ ०५३ ॥

अन्नदानं प्रधानं हि कौन्तेय परिचक्षते ।
अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः ॥ ०५४ ॥

श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप ।
स्वायंभुवं महाभागं स पश्यति नराधिप ॥ ०५५ ॥

न हिरण्यैर्न वासोभिर्नाश्वदानेन भारत ।
प्राप्नुवन्ति नराः श्रेयो यथेहान्नप्रदाः प्रभो ॥ ०५६ ॥

अन्नं वै परमं द्रव्यमन्नं श्रीश्च परा मता ।
अन्नात्प्राणः प्रभवति तेजो वीर्यं बलं तथा ॥ ०५७ ॥

सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः ॥ ०५८ ॥

अर्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत् ।
यदन्नो हि नरो राजंस्तदन्नास्तस्य देवताः ॥ ०५९ ॥

कौमुद्यां शुक्लपक्षे तु योऽन्नदानं करोत्युत ।
स संतरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते ॥ ०६० ॥

अभुक्त्वातिथये चान्नं प्रयच्छेद्यः समाहितः ।
स वै ब्रह्मविदां लोकान्प्राप्नुयाद्भरतर्षभ ॥ ०६१ ॥

सुकृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत् ।
पापं तरति चैवेह दुष्कृतं चापकर्षति ॥ ०६२ ॥

इत्येतदन्नदानस्य तिलदानस्य चैव ह ।
भूमिदानस्य च फलं गोदानस्य च कीर्तितम् ॥ ०६३ ॥

# पानीयदानफलम्

## अध्याय ०६६

युधिष्ठिर उवाच ॥

श्रुतं दानफलं तात यत्त्वया परिकीर्तितम् ।
अन्नं तु ते विशेषेण प्रशस्तमिह भारत ॥ ००१ ॥

पानीयदानं परमं कथं चेह महाफलम् ।
इत्येतच्छ्रोतुमिच्छामि विस्तरेण पितामह ॥ ००२ ॥

भीष्म उवाच ॥

हन्त ते वर्तयिष्यामि यथावद्भरतर्षभ ।
गदतस्तन्ममाद्येह शृणु सत्यपराक्रम ॥ ००३ ॥

पानीयदानात्प्रभृति सर्वं वक्ष्यामि तेऽनघ ॥ ००३ ॥

यदन्नं यच्च पानीयं संप्रदायाश्नुते नरः ।
न तस्मात्परमं दानं किञ्चिदस्तीति मे मतिः ॥ ००४ ॥

अन्नात्प्राणभृतस्तात प्रवर्तन्ते हि सर्वशः ।
तस्मादन्नं परं लोके सर्वदानेषु कथ्यते ॥ ००५ ॥

अन्नाद्बलं च तेजश्च प्राणिनां वर्धते सदा ।
अन्नदानमतस्तस्माच्छ्रेष्ठमाह प्रजापतिः ॥ ००६ ॥

सावित्र्या ह्यपि कौन्तेय श्रुतं ते वचनं शुभम् ।
यतश्चैतद्यथा चैतद्देवसत्रे महामते ॥ ००७ ॥

अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत ।
प्राणदानाद्धि परमं न दानमिह विद्यते ॥ ००८ ॥

श्रुतं हि ते महाबाहो लोमशस्यापि तद्वचः ।
प्राणान्दत्त्वा कपोताय यत्प्राप्तं शिबिना पुरा ॥ ००९ ॥

तां गतिं लभते दत्त्वा द्विजस्यान्नं विशां पते ।
गतिं विशिष्टां गच्छन्ति प्राणदा इति नः श्रुतम् ॥ ०१० ॥

अन्नं चापि प्रभवति पानीयात्कुरुसत्तम ।
नीरजातेन हि विना न किञ्चित्संप्रवर्तते ॥ ०११ ॥

नीरजातश्च भगवान्सोमो ग्रहगणेश्वरः ।
अमृतं च सुधा चैव स्वाहा चैव वषट्तथा ॥ ०१२ ॥

अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः ।
यतः प्राणभृतां प्राणाः संभवन्ति विशां पते ॥ ०१३ ॥

देवानाममृतं चान्नं नागानां च सुधा तथा ।
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः ॥ ०१४ ॥

अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः ।
तच्च सर्वं नरव्याघ्र पानीयात्संप्रवर्तते ॥ ०१५ ॥

तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित् ।
तच्च दद्यान्नरो नित्यं य इच्छेद्भूतिमात्मनः ॥ ०१६ ॥

धन्यं यशस्यमायुष्यं जलदानं विशां पते ।
शत्रूंश्चाप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ ०१७ ॥

सर्वकामानवाप्नोति कीर्तिं चैवेह शाश्वतीम् ।
प्रेत्य चानन्त्यमाप्नोति पापेभ्यश्च प्रमुच्यते ॥ ०१८ ॥

तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते ।
अक्षयान्समवाप्नोति लोकानित्यब्रवीन्मनुः ॥ ०१९ ॥

---

# तिलादिदानप्रशंसा

## अध्याय ०६७

युधिष्ठिर उवाच ॥

तिलानां कीदृशं दानमथ दीपस्य चैव ह ।
अन्नानां वाससां चैव भूय एव ब्रवीहि मे ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर ॥ ००२ ॥

मध्यदेशे महान्ग्रामो ब्राह्मणानां बभूव ह ।
गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥ ००३ ॥

पर्णशालेति विख्यातो रमणीयो नराधिप ।

विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तदा  ॥ ००४  ॥

अथ प्राह यमः कञ्चित्पुरुषं कृष्णवाससम् ।
रक्ताक्षमूर्ध्वरोमाणं काकजङ्घाक्षिनासिकम्  ॥ ००५  ॥

गच्छ त्वं ब्राह्मणग्रामं ततो गत्वा तमानय ।
अगस्त्यं गोत्रतश्चापि नामतश्चापि शर्मिणम्  ॥ ००६  ॥

शमे निविष्टं विद्वांसमध्यापकमनादृतम् ।
मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः  ॥ ००७  ॥

स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना ।
अपत्येषु तथा वृत्ते समस्तेनैव धीमता  ॥ ००८  ॥

तमानय यथोद्दिष्टं पूजा कार्या हि तस्य मे  ॥ ००८  ॥

स गत्वा प्रतिकूलं तच्चकार यमशासनम् ।
तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः  ॥ ००९  ॥

तस्मै यमः समुत्थाय पूजां कृत्वा च वीर्यवान् ।
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति  ॥ ०१०  ॥

एवमुक्ते तु वचने धर्मराजेन स द्विजः ।
उवाच धर्मराजानं निर्विण्णोऽध्ययनेन वै  ॥ ०११  ॥

यो मे कालो भवेच्छेषस्तं वसेयमिहाच्युत  ॥ ०११  ॥

यम उवाच  ॥

नाहं कालस्य विहितं प्राप्नोमीह कथञ्चन ।
यो हि धर्मं चरति वै तं तु जानामि केवलम्  ॥ ०१२  ॥

गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते ।
ब्रूहि वा त्वं यथा स्वैरं करवाणि किमित्युत ॥ ०१३ ॥

ब्राह्मण उवाच ॥

यत्तत्र कृत्वा सुमहत्पुण्यं स्यात्तद्ब्रवीहि मे ।
सर्वस्य हि प्रमाणं त्वं त्रैलोक्यस्यापि सत्तम ॥ ०१४ ॥

यम उवाच ॥

शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमम् ।
तिलाः परमकं दानं पुण्यं चैवेह शाश्वतम् ॥ ०१५ ॥

तिलाश्च संप्रदातव्या यथाशक्ति द्विजर्षभ ।
नित्यदानात्सर्वकामांस्तिला निर्वर्तयन्त्युत ॥ ०१६ ॥

तिलाञ्श्राद्धे प्रशंसन्ति दानमेतद्ध्यनुत्तमम् ।
तान्प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्मणा ॥ ०१७ ॥

तिला भक्षयितव्याश्च सदा त्वालभनं च तैः ।
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे ॥ ०१८ ॥

तथापः सर्वदा देयाः पेयाश्चैव न संशयः ।
पुष्करिण्यस्तडागानि कूपांश्चैवात्र खानयेत् ॥ ०१९ ॥

एतत्सुदुर्लभतरमिह लोके द्विजोत्तम ।
आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमम् ॥ ०२० ॥

प्रपाश्च कार्याः पानार्थं नित्यं ते द्विजसत्तम ।
भुक्तेऽप्यथ प्रदेयं ते पानीयं वै विशेषतः ॥ ०२१ ॥

इत्युक्ते स तदा तेन यमदूतेन वै गृहान् ।
नीतश्चकार च तथा सर्वं तद्यमशासनम्  ॥ ०२२  ॥

नीत्वा तं यमदूतोऽपि गृहीत्वा शर्मिणं तदा ।
ययौ स धर्मराजाय न्यवेदयत चापि तम्  ॥ ०२३  ॥

तं धर्मराजो धर्मज्ञं पूजयित्वा प्रतापवान् ।
कृत्वा च संविदं तेन विससर्ज यथागतम्  ॥ ०२४  ॥

तस्यापि च यमः सर्वमुपदेशं चकार ह ।
प्रत्येत्य च स तत्सर्वं चकारोक्तं यमेन तत्  ॥ ०२५  ॥

तथा प्रशंसते दीपान्यमः पितृहितेप्सया ।
तस्माद्दीपप्रदो नित्यं संतारयति वै पितृन्  ॥ ०२६  ॥

दातव्याः सततं दीपास्तस्माद्भरतसत्तम ।
देवानां च पितृणां च चक्षुष्यास्ते मताः प्रभो  ॥ ०२७  ॥

रत्नदानं च सुमहत्पुण्यमुक्तं जनाधिप ।
तानि विक्रीय यजते ब्राह्मणो ह्यभयङ्करः  ॥ ०२८  ॥

यद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै ।
उभयोः स्यात्तदक्षय्यं दातुरादातुरेव च  ॥ ०२९  ॥

यो ददाति स्थितः स्थित्यां तादृशाय प्रतिग्रहम् ।
उभयोरक्षयं धर्मं तं मनुः प्राह धर्मवित्  ॥ ०३०  ॥

वाससां तु प्रदानेन स्वदारनिरतो नरः ।
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुम  ॥ ०३१  ॥

गावः सुवर्णं च तथा तिलाश्चैवानुवर्णिताः ।
बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात् ॥ ०३२ ॥

विवाहांश्चैव कुर्वीत पुत्रानुत्पादयेत च ।
पुत्रलाभो हि कौरव्य सर्वलाभाद्विशिष्यते ॥ ०३३ ॥

---

# गोदानफलम्

## अध्याय ०६८

युधिष्ठिर उवाच ॥

भूय एव कुरुश्रेष्ठ दानानां विधिमुत्तमम् ।
कथयस्व महाप्राज्ञ भूमिदानं विशेषतः ॥ ००१ ॥

पृथिवीं क्षत्रियो दद्याद्ब्राह्मणस्तां स्वकर्मणा ।
विधिवत्प्रतिगृह्णीयान्न त्वन्यो दातुमर्हति ॥ ००२ ॥

सर्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः ।
वेदे वा यत्समाम्नातं तन्मे व्याख्यातुमर्हसि ॥ ००३ ॥

भीष्म उवाच ॥

तुल्यनामानि देयानि त्रीणि तुल्यफलानि च ।
सर्वकामफलानीह गावः पृथ्वी सरस्वती ॥ ००४ ॥

यो ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम् ।

पृथिवीगोप्रदानाभ्यां स तुल्यं फलमश्नुते ॥ ००५ ॥

तथैव गाः प्रशंसन्ति न च देयं ततः परम् ।
संनिकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर ॥ ००६ ॥

मातरः सर्वभूतानां गावः सर्वसुखप्रदाः ॥ ००६ ॥

वृद्धिमाकाङ्क्षता नित्यं गावः कार्याः प्रदक्षिणाः ।
मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव हि ॥ ००७ ॥

प्रचोदनं देवकृतं गवां कर्मसु वर्तताम् ।
पूर्वमेवाक्षरं नान्यदभिधेयं कथञ्चन ॥ ००८ ॥

प्रचारे वा निपाने वा बुधो नोद्वेजयेत गाः ।
तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवम् ॥ ००९ ॥

पितृसद्मानि सततं देवतायतनानि च ।
पूयन्ते शकृता यासां पूतं किमधिकं ततः ॥ ०१० ॥

ग्रासमुष्टिं परगवे दद्यात्संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ॥ ०११ ॥

स हि पुत्रान्यशोर्थं च श्रियं चाप्यधिगच्छति ।
नाशयत्यशुभं चैव दुःस्वप्नं च व्यपोहति ॥ ०१२ ॥

युधिष्ठिर उवाच ॥

देयाः किंलक्षणा गावः काश्चापि परिवर्जयेत् ।
कीदृशाय प्रदातव्या न देयाः कीदृशाय च ॥ ०१३ ॥

भीष्म उवाच ॥

असद्वृत्ताय पापाय लुब्धायानृतवादिने ।
हव्यकव्यव्यपेताय न देया गौः कथञ्चन ॥ ०१४ ॥

भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये ।
दत्त्वा दशगवां दाता लोकानाप्नोत्यनुत्तमान् ॥ ०१५ ॥

यं चैव धर्मं कुरुते तस्य पुण्यफलं च यत् ।
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवृत्तयः ॥ ०१६ ॥

यश्चैनमुत्पादयति यश्चैनं त्रायते भयात् ।
यश्चास्य कुरुते वृत्तिं सर्वे ते पितरस्त्रयः ॥ ०१७ ॥

कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः ।
अपुत्रतां त्रयः पुत्रा अवृत्तिं दश धेनवः ॥ ०१८ ॥

वेदान्तनिष्ठस्य बहुश्रुतस्य ; प्रज्ञानतृप्तस्य जितेन्द्रियस्य ।
शिष्टस्य दान्तस्य यतस्य चैव ; भूतेषु नित्यं प्रियवादिनश्च ॥ ०१९ ॥

यः क्षुद्भयाद्वै न विकर्म कुर्या ;न्मृदुर्दान्तश्चातिथेयश्च नित्यम् ।
वृत्तिं विप्रायातिसृजेत तस्मै ; यस्तुल्यशीलश्च सपुत्रदारः ॥ ०२० ॥

शुभे पात्रे ये गुणा गोप्रदाने ; तावान्दोषो ब्राह्मणस्वापहारे ।
सर्वावस्थं ब्राह्मणस्वापहारो ; दाराश्चैषां दूरतो वर्जनीयाः ॥ ०२१ ॥

# नृगोपाख्यानम्

## अध्याय ०६९

भीष्म उवाच ॥

अत्रैव कीर्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने ।
नृगेण सुमहत्कृच्छ्रं यदवाप्तं कुरूद्वह ॥ ००१ ॥

निविशन्त्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः ।
अदृश्यत महाकूपस्तृणवीरुत्समावृतः ॥ ००२ ॥

प्रयत्नं तत्र कुर्वाणास्तस्मात्कूपाज्जलार्थिनः ।
श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते ॥ ००३ ॥

ददृशुस्ते महाकायं कृकलासमवस्थितम् ।
तस्य चोद्धरणे यत्नमकुर्वंस्ते सहस्रशः ॥ ००४ ॥

प्रग्रहैश्चर्मपट्टैश्च तं बद्ध्वा पर्वतोपमम् ।
नाशक्नुवन्समुद्धर्तुं ततो जग्मुर्जनार्दनम् ॥ ००५ ॥

खमावृत्योदपानस्य कृकलासः स्थितो महान् ।
तस्य नास्ति समुद्धर्तेत्यथ कृष्णे न्यवेदयन् ॥ ००६ ॥

स वासुदेवेन समुद्धृतश्च ; पृष्टश्च कामान्निजगाद राजा ।
नृगस्तदात्मानमथो न्यवेदय ;त्पुरातनं यज्ञसहस्रयाजिनम् ॥ ००७ ॥

तथा ब्रुवाणं तु तमाह माधवः ; शुभं त्वया कर्म कृतं न पापकम् ।
कथं भवान्दुर्गतिमीदृशीं गतो ; नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ॥ ००८ ॥

शतं सहस्राणि शतं गवां पुनः ; पुनः शतान्यष्ट शतायुतानि ।

त्वया पुरा दत्तमितीह शुश्रुम ; नृप द्विजेभ्यः क्व नु तद्गतं तव ॥ ००९ ॥

नृगस्ततोऽब्रवीत्कृष्णं ब्राह्मणस्याग्निहोत्रिणः ।
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने ॥ ०१० ॥

गवां सहस्रे संख्याता तदा सा पशुपैर्मम ।
सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ॥ ०११ ॥

अपश्यत्परिमार्गंश्च तां यां परगृहे द्विजः ।
ममेयमिति चोवाच ब्राह्मणो यस्य साभवत् ॥ ०१२ ॥

तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ ।
भवान्दाता भवान्हर्तेत्यथ तौ मां तदोचतुः ॥ ०१३ ॥

शतेन शतसंख्येन गवां विनिमयेन वै ।
याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम् ॥ ०१४ ॥

देशकालोपसंपन्ना दोग्ध्री क्षान्तातिवत्सला ।
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने ॥ ०१५ ॥

कृशं च भरते या गौर्मम पुत्रमपस्तनम् ।
न सा शक्या मया हातुमित्युक्त्वा स जगाम ह ॥ ०१६ ॥

ततस्तमपरं विप्रं याचे विनिमयेन वै ।
गवां शतसहस्रं वै तत्कृते गृह्यतामिति ॥ ०१७ ॥

ब्राह्मण उवाच ॥

न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे ।
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥ ०१८ ॥

रुक्ममश्वांश्च ददतो रजतं स्यन्दनांस्तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥ ०१९ ॥

एतस्मिन्नेव काले तु चोदितः कालधर्मणा ।
पितृलोकमहं प्राप्य धर्मराजमुपागमम् ॥ ०२० ॥

यमस्तु पूजयित्वा मां ततो वचनमब्रवीत् ।
नान्तः संख्यायते राजंस्तव पुण्यस्य कर्मणः ॥ ०२१ ॥

अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ।
चरस्व पापं पश्चाद्वा पूर्वं वा त्वं यथेच्छसि ॥ ०२२ ॥

रक्षितास्मीति चोक्तं ते प्रतिज्ञा चानृता तव ।
ब्राह्मणस्वस्य चादानं त्रिविधस्ते व्यतिक्रमः ॥ ०२३ ॥

पूर्वं कृच्छ्रं चरिष्येऽहं पश्चाच्छुभमिति प्रभो ।
धर्मराजं ब्रुवन्नेवं पतितोऽस्मि महीतले ॥ ०२४ ॥

अश्रौषं प्रच्युतश्चाहं यमस्योच्चैः प्रभाषतः ।
वासुदेवः समुद्धर्ता भविता ते जनार्दनः ॥ ०२५ ॥

पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते ।
प्राप्स्यसे शाश्वता.णल्लोकाञ्जितान्स्वेनैव कर्मणा ॥ ०२६ ॥

कूपेऽऽत्मानमधःशीर्षमपश्यं पतितं च ह ।
तिर्यग्योनिमनुप्राप्तं न तु मामजहात्स्मृतिः ॥ ०२७ ॥

त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात् ।
अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै ॥ ०२८ ॥

अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्दनम् ।

विमानं दिव्यमास्थाय ययौ दिवमरिंदम ॥ ०२९ ॥

ततस्तस्मिन्दिवं प्राप्ते नृगे भरतसत्तम ।
वासुदेव इमं श्लोकं जगाद कुरुनन्दन ॥ ०३० ॥

ब्राह्मणस्वं न हर्तव्यं पुरुषेण विजानता ।
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ॥ ०३१ ॥

सतां समागमः सद्भिर्नाफलः पार्थ विद्यते ।
विमुक्तं नरकात्पश्य नृगं साधुसमागमात् ॥ ०३२ ॥

प्रदानं फलवत्तत्र द्रोहस्तत्र तथाफलः ।
अपचारं गवां तस्माद्वर्जयेत युधिष्ठिर ॥ ०३३ ॥

---

# नाचिकेतोपाख्यानम्

## अध्याय ०७०

युधिष्ठिर उवाच ॥

दत्तानां फलसंप्राप्तिं गवां प्रब्रूहि मेऽनघ ।
विस्तरेण महाबाहो न हि तृप्यामि कथ्यताम् ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषेरुद्दालकेर्वाक्यं नाचिकेतस्य चोभयोः ॥ ००२ ॥

ऋषिरुद्दालकिर्दीक्षामुपगम्य ततः सुतम् ।
त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥ ००३ ॥

समाप्ते नियमे तस्मिन्महर्षिः पुत्रमब्रवीत् ॥ ००३ ॥

उपस्पर्शनसक्तस्य स्वाध्यायनिरतस्य च ।
इध्मा दर्भाः सुमनसः कलशश्चाभितो जलम् ॥ ००४ ॥

विस्मृतं मे तदादाय नदीतीरादिहाव्रज ॥ ००४ ॥

गत्वानवाप्य तत्सर्वं नदीवेगसमाप्लुतम् ।
न पश्यामि तदित्येवं पितरं सोऽब्रवीन्मुनिः ॥ ००५ ॥

क्षुत्पिपासाश्रमाविष्टो मुनिरुद्दालकिस्तदा ।
यमं पश्येति तं पुत्रमशपत्स महातपाः ॥ ००६ ॥

तथा स पित्राभिहतो वाग्वज्रेण कृताञ्जलिः ।
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥ ००७ ॥

नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्छितः ।
किं मया कृतमित्युक्त्वा निपपात महीतले ॥ ००८ ॥

तस्य दुःखपरीतस्य स्वं पुत्रमुपगूहतः ।
व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्वरी ॥ ००९ ॥

पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्वह ।
प्रास्पन्दच्छयने कौश्ये वृष्ट्या सस्यमिवाप्लुतम् ॥ ०१० ॥

स पर्यपृच्छत्तं पुत्रं श्लाघ्यं प्रत्यागतं पुनः ।
दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम् ॥ ०११ ॥

अपि पुत्र जिता लोकाः शुभास्ते स्वेन कर्मणा ।
दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं वपुः ॥ ०१२ ॥

प्रत्यक्षदर्शी सर्वस्य पित्रा पृष्टो महात्मना ।
अन्वर्थं तं पितुर्मध्ये महर्षीणां न्यवेदयत् ॥ ०१३ ॥

कुर्वन्भवच्छासनमाशु यातो ; ह्यहं विशालां रुचिरप्रभावाम् ।
वैवस्वतीं प्राप्य सभामपश्यं ; सहस्रशो योजनहैमभौमाम् ॥ ०१४ ॥

दृष्ट्वैव मामभिमुखमापतन्तं ; गृहं निवेद्यासनमादिदेश ।
वैवस्वतोऽर्घ्यादिभिरर्हणैश्च ; भवत्कृते पूजयामास मां सः ॥ ०१५ ॥

ततस्त्वहं तं शनकैरवोचं ; वृतं सदस्यैरभिपूज्यमानम् ।
प्राप्तोऽस्मि ते विषयं धर्मराज ; लोकानर्हे यान्स्म तान्मे विधत्स्व ॥ ०१६ ॥

यमोऽब्रवीन्मां न मृतोऽसि सौम्य ; यमं पश्येत्याह तु त्वां तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा ; न तच्छक्यमनृतं विप्र कर्तुम् ॥ ०१७ ॥

दृष्टस्तेऽहं प्रतिगच्छस्व तात ; शोचत्यसौ तव देहस्य कर्ता ।
ददामि किं चापि मनःप्रणीतं ; प्रियातिथे तव कामान्वृणीष्व ॥ ०१८ ॥

तेनैवमुक्तस्तमहं प्रत्यवोचं ; प्राप्तोऽस्मि ते विषयं दुर्निवर्त्यम् ।
इच्छाम्यहं पुण्यकृतां समृद्धा.ण् ;ल्लोकान्द्रष्टुं यदि तेऽहं वरार्हः ॥ ०१९ ॥

यानं समारोप्य तु मां स देवो ; वाहैर्युक्तं सुप्रभं भानुमन्तम् ।
संदर्शयामास तदा स्म लोका ;न्सर्वांस्तदा पुण्यकृतां द्विजेन्द्र ॥ ०२० ॥

अपश्यं तत्र वेश्मानि तैजसानि कृतात्मनाम् ।
नानासंस्थानरूपाणि सर्वरत्नमयानि च ॥ ०२१ ॥

चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥ ०२२ ॥

वैडूर्यार्कप्रकाशानि रूप्यरुक्ममयानि च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ ०२३ ॥

भक्ष्यभोज्यमयाञ्शैलान्वासांसि शयनानि च ।
सर्वकामफलांश्चैव वृक्षान्भवनसंस्थितान् ॥ ०२४ ॥

नद्यो वीथ्यः सभा वापी दीर्घिकाश्चैव सर्वशः ।
घोषवन्ति च यानानि युक्तान्येव सहस्रशः ॥ ०२५ ॥

क्षीरस्रवा वै सरितो गिरींश्च ; सर्पिस्तथा विमलं चापि तोयम् ।
वैवस्वतस्यानुमतांश्च देशा ;नदृष्टपूर्वान्सुबहूनपश्यम् ॥ ०२६ ॥

सर्वं दृष्ट्वा तदहं धर्मराज ;मवोचं वै प्रभविष्णुं पुराणम् ।
क्षीरस्यैताः सर्पिषश्चैव नद्यः ; शश्वत्स्रोताः कस्य भोज्याः प्रदिष्टाः ॥ ०२७ ॥

यमोऽब्रवीद्विद्धि भोज्यास्त्वमेता ; ये दातारः साधवो गोरसानाम् ।
अन्ये लोकाः शाश्वता वीतशोकाः ; समाकीर्णा गोप्रदाने रतानाम् ॥ ०२८ ॥

न त्वेवासां दानमात्रं प्रशस्तं ; पात्रं कालो गोविशेषो विधिश्च ।
ज्ञात्वा देया विप्र गवान्तरं हि ; दुःखं ज्ञातुं पावकादित्यभूतम् ॥ ०२९ ॥

स्वाध्यायाढ्यो योऽतिमात्रं तपस्वी ; वैतानस्थो ब्राह्मणः पात्रमासाम् ।
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च ; द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥ ०३० ॥

तिस्रो रात्रीरद्भिरुपोष्य भूमौ ; तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः प्रीताः सुप्रजाः सोपचारा ;स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ ०३१ ॥

दत्त्वा धेनुं सुव्रतां कांस्यदोहां ; कल्याणवत्सामपलायिनीं च ।

यावन्ति लोमानि भवन्ति तस्या ;स्तावद्वर्षाण्यश्नुते स्वर्गलोकम्  ॥ ०३२  ॥

तथानड्वाहं ब्राह्मणाय प्रदाय ; दान्तं धुर्यं बलवन्तं युवानम् ।
कुलानुजीवं वीर्यवन्तं बृहन्तं ; भुङ्क्ते लोकान्संमितान्धेनुदस्य  ॥ ०३३  ॥

गोषु क्षान्तं गोशरण्यं कृतज्ञं ; वृत्तिग्लानं तादृशं पात्रमाहुः ।
वृत्तिग्लाने संभ्रमे वा महार्थे ; कृष्यर्थे वा होमहेतोः प्रसूत्याम्  ॥ ०३४  ॥

गुर्वर्थे वा बालपुष्ट्याभिषङ्गा ;द्गावो दातुं देशकालोऽविशिष्टः ।
अन्तर्जाताः सुक्रयज्ञानलब्धाः ; प्राणक्रीता निर्जिताश्चौदकाश्च  ॥ ०३५  ॥

नाचिकेत उवाच  ॥

श्रुत्वा वैवस्वतवचस्तमहं पुनरब्रुवम् ।
अगोमी गोप्रदातॄणां कथं लोकान्निगच्छति  ॥ ०३६  ॥

ततो यमोऽब्रवीद्धीमान्गोप्रदाने परां गतिम् ।
गोप्रदानानुकल्पं तु गामृते सन्ति गोप्रदाः  ॥ ०३७  ॥

अलाभे यो गवां दद्याद्घृतधेनुं यतव्रतः ।
तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव  ॥ ०३८  ॥

घृतालाभे च यो दद्यात्तिलधेनुं यतव्रतः ।
स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते  ॥ ०३९  ॥

तिलालाभे च यो दद्याज्जलधेनुं यतव्रतः ।
स कामप्रवहां शीतां नदीमेतामुपाश्नुते  ॥ ०४०  ॥

एवमादीनि मे तत्र धर्मराजो न्यदर्शयत् ।
दृष्ट्वा च परमं हर्षमवापमहमच्युत  ॥ ०४१  ॥

निवेदये चापि प्रियं भवत्सु ; क्रतुर्महानल्पधनप्रचारः ।
प्राप्तो मया तात स मत्प्रसूतः ; प्रपत्स्यते वेदविधिप्रवृत्तः ॥ ०४२ ॥

शापो ह्ययं भवतोऽनुग्रहाय ; प्राप्तो मया यत्र दृष्टो यमो मे ।
दानव्युष्टिं तत्र दृष्ट्वा महार्थां ; निःसंदिग्धं दानधर्मांश्चरिष्ये ॥ ०४३ ॥

इदं च मामब्रवीद्धर्मराजः ; पुनः पुनः संप्रहृष्टो द्विजर्षे ।
दानेन तात प्रयतोऽभूः सदैव ; विशेषतो गोप्रदानं च कुर्याः ॥ ०४४ ॥

शुद्धो ह्यर्थो नावमन्यः स्वधर्मा ;त्पात्रे देयं देशकालोपपन्ने ।
तस्माद्गावस्ते नित्यमेव प्रदेया ; मा भूच्च ते संशयः कश्चिदत्र ॥ ०४५ ॥

एताः पुरा अददन्नित्यमेव ; शान्तात्मानो दानपथे निविष्टाः ।
तपांस्युग्राण्यप्रतिशङ्कमाना ;स्ते वै दानं प्रददुश्चापि शक्त्या ॥ ०४६ ॥

काले शक्त्या मत्सरं वर्जयित्वा ; शुद्धात्मानः श्रद्धिनः पुण्यशीलाः ।
दत्त्वा तप्त्वा लोकममुं प्रपन्ना ; देदीप्यन्ते पुण्यशीलाश्च नाके ॥ ०४७ ॥

एतद्दानं न्यायलब्धं द्विजेभ्यः ; पात्रे दत्तं प्रापणीयं परीक्ष्य ।
काम्याष्टम्यां वर्तितव्यं दशाहं ; रसैर्गवां शकृता प्रस्नवैर्वा ॥ ०४८ ॥

वेदव्रती स्याद्वृषभप्रदाता ; वेदावाप्तिर्गोयुगस्य प्रदाने ।
तीर्थावाप्तिर्गोप्रयुक्तप्रदाने ; पापोत्सर्गः कपिलायाः प्रदाने ॥ ०४९ ॥

गामप्येकां कपिलां संप्रदाय ; न्यायोपेतां कल्मषाद्विप्रमुच्येत् ।
गवां रसात्परमं नास्ति किं चि ;द्गवां दानं सुमहत्तद्वदन्ति ॥ ०५० ॥

गावो लोकान्धारयन्ति क्षरन्त्यो ; गावश्चान्नं सञ्जनयन्ति लोके ।
यस्तज्जानन्न गवां हार्दमेति ; स वै गन्ता निरयं पापचेताः ॥ ०५१ ॥

यत्ते दातुं गोसहस्रं शतं वा ; शतार्धं वा दश वा साधुवत्साः ।

अप्येकां वा साधवे ब्राह्मणाय; सास्यामुष्मिन्पुण्यतीर्था नदी वै ॥ ०५२ ॥

प्राप्त्या पुष्ट्या लोकसंरक्षणेन; गावस्तुल्याः सूर्यपादैः पृथिव्याम्।
शब्दश्चैकः संततिश्चोपभोग;स्तस्माद्गोदः सूर्य इवाभिभाति ॥ ०५३ ॥

गुरुं शिष्यो वरयेद्गोप्रदाने; स वै वक्ता नियतं स्वर्गदाता।
विधिज्ञानां सुमहानेष धर्मो; विधिं ह्याद्यं विधयः संश्रयन्ति ॥ ०५४ ॥

एतद्दानं न्यायलब्धं द्विजेभ्यः; पात्रे दत्त्वा प्रापयेथाः परीक्ष्य।
त्वय्याशंसन्त्यमरा मानवाश्च; वयं चापि प्रसृते पुण्यशीलाः ॥ ०५५ ॥

इत्युक्तोऽहं धर्मराज्ञा महर्षे; धर्मात्मानं शिरसाभिप्रणम्य।
अनुज्ञातस्तेन वैवस्वतेन; प्रत्यागमं भगवत्पादमूलम् ॥ ०५६ ॥

---

# गोप्रदानिकम्

## अध्याय ०७१

युधिष्ठिर उवाच ॥

उक्तं वै गोप्रदानं ते नाचिकेतमृषिं प्रति।
माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो ॥ ००१ ॥

नृगेण च यथा दुःखमनुभूतं महात्मना।
एकापराधादज्ञानात्पितामह महामते ॥ ००२ ॥

द्वारवत्यां यथा चासौ निविशन्त्यां समुद्धृतः।

मोक्षहेतुरभूत्कृष्णस्तदप्यवधृतं मया ॥ ००३ ॥

किं त्वस्ति मम संदेहो गवां लोकं प्रति प्रभो ।
तत्त्वतः श्रोतुमिच्छामि गोदा यत्र विशन्त्युत ॥ ००४ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथापृच्छत्पद्मयोनिमेतदेव शतक्रतुः ॥ ००५ ॥

शक्र उवाच ॥

स्वर्लोकवासिनां लक्ष्मीमभिभूय स्वया त्विषा ।
गोलोकवासिनः पश्ये व्रजतः संशयोऽत्र मे ॥ ००६ ॥

कीदृशा भगव.ण्ल्लोका गवां तद्ब्रूहि मेऽनघ ।
यानावसन्ति दातार एतदिच्छामि वेदितुम् ॥ ००७ ॥

कीदृशाः किंफलाः कः स्वित्परमस्तत्र वै गुणः ।
कथं च पुरुषास्तत्र गच्छन्ति विगतज्वराः ॥ ००८ ॥

कियत्कालं प्रदानस्य दाता च फलमश्नुते ।
कथं बहुविधं दानं स्यादल्पमपि वा कथम् ॥ ००९ ॥

बह्वीनां कीदृशं दानमल्पानां वापि कीदृशम् ।
अदत्त्वा गोप्रदाः सन्ति केन वा तच्च शंस मे ॥ ०१० ॥

कथं च बहुदाता स्यादल्पदात्रा समः प्रभो ।
अल्पप्रदाता बहुदः कथं च स्यादिहेश्वर ॥ ०११ ॥

कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते ।

एतत्तथ्येन भगवन्मम शंसितुमर्हसि ॥ ०१२ ॥

---

# अध्याय ०७२

ब्रह्मोवाच ॥

योऽयं प्रश्नस्त्वया पृष्टो गोप्रदानाधिकारवान् ।
नास्य प्रष्टास्ति लोकेऽस्मिंस्त्वत्तोऽन्यो हि शतक्रतो ॥ ००१ ॥

सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि ।
पश्यामि यानहं लोकानेकपत्न्यश्च याः स्त्रियः ॥ ००२ ॥

कर्मभिश्चापि सुशुभैः सुव्रता ऋषयस्तथा ।
सशरीरा हि तान्यान्ति ब्राह्मणाः शुभवृत्तयः ॥ ००३ ॥

शरीरन्यासमोक्षेण मनसा निर्मलेन च ।
स्वप्नभूतांश्च ता.ण्ल्लोकान्पश्यन्तीहापि सुव्रताः ॥ ००४ ॥

ते तु लोकाः सहस्राक्ष शृणु यादृग्गुणान्विताः ।
न तत्र क्रमते कालो न जरा न च पापकम् ॥ ००५ ॥

तथान्यन्नाशुभं किञ्चिन्न व्याधिस्तत्र न क्लमः ॥ ००५ ॥

यद्यच्च गावो मनसा तस्मिन्वाञ्छन्ति वासव ।
तत्सर्वं प्रापयन्ति स्म मम प्रत्यक्षदर्शनात् ॥ ००६ ॥

कामगाः कामचारिण्यः कामात्कामांश्च भुञ्जते ॥ ००६ ॥

वाप्यः सरांसि सरितो विविधानि वनानि च ।
गृहाणि पर्वताश्चैव यावद्द्रव्यं च किञ्चन ॥ ००७ ॥

मनोज्ञं सर्वभूतेभ्यः सर्वं तत्र प्रदृश्यते ।
ईदृशान्विद्धि ता.ण्ल्लोकान्नास्ति लोकस्ततोऽधिकः ॥ ००८ ॥

तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्तिनः ।
अहङ्कारैर्विरहिता यान्ति शक्र नरोत्तमाः ॥ ००९ ॥

यः सर्वमांसानि न भक्षयीत ; पुमान्सदा यावदन्ताय युक्तः ।
मातापित्रोरर्चिता सत्ययुक्तः ; शुश्रूषिता ब्राह्मणानामनिन्द्यः ॥ ०१० ॥

अक्रोधनो गोषु तथा द्विजेषु ; धर्मे रतो गुरुशुश्रूषकश्च ।
यावज्जीवं सत्यवृत्ते रतश्च ; दाने रतो यः क्षमी चापराधे ॥ ०११ ॥

मृदुर्दान्तो देवपरायणश्च ; सर्वातिथिश्चापि तथा दयावान् ।
ईदृग्गुणो मानवः संप्रयाति ; लोकं गवां शाश्वतं चाव्ययं च ॥ ०१२ ॥

न पारदारी पश्यति लोकमेनं ; न वै गुरुघ्नो न मृषाप्रलापी ।
सदापवादी ब्राह्मणः शान्तवेदो ; दोषैरन्यैर्यश्च युक्तो दुरात्मा ॥ ०१३ ॥

न मित्रध्रुङ्नैकृतिकः कृतघ्नः ; शठोऽनृजुर्धर्मविद्वेषकश्च ।
न ब्रह्महा मनसापि प्रपश्ये ;द्गवां लोकं पुण्यकृतां निवासम् ॥ ०१४ ॥

एतत्ते सर्वमाख्यातं नैपुणेन सुरेश्वर ।
गोप्रदानरतानां तु फलं शृणु शतक्रतो ॥ ०१५ ॥

दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा संप्रयच्छति ।
धर्मार्जितधनक्रीतान्स लोकानश्नुतेऽक्षयान् ॥ ०१६ ॥

यो वै द्यूते धनं जित्वा गाः क्रीत्वा संप्रयच्छति ।

स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते ॥ ०१७ ॥

दायाद्या यस्य वै गावो न्यायपूर्वैरुपार्जिताः ।
प्रदत्तास्ताः प्रदातृणां संभवन्त्यक्षया ध्रुवाः ॥ ०१८ ॥

प्रतिगृह्य च यो दद्याद्गाः सुशुद्धेन चेतसा ।
तस्यापीहाक्षया.ण्ल्लोकान्ध्रुवान्विद्धि शचीपते ॥ ०१९ ॥

जन्मप्रभृति सत्यं च यो ब्रूयान्नियतेन्द्रियः ।
गुरुद्विजसहः क्षान्तस्तस्य गोभिः समा गतिः ॥ ०२० ॥

न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते ।
मनसा गोषु न द्रुह्येद्गोवृत्तिर्गोनुकम्पकः ॥ ०२१ ॥

सत्ये धर्मे च निरतस्तस्य शक्र फलं श्रृणु ।
गोसहस्रेण समिता तस्य धेनुर्भवत्युत ॥ ०२२ ॥

क्षत्रियस्य गुणैरेभिरन्वितस्य फलं श्रृणु ।
तस्यापि शततुल्या गौर्भवतीति विनिश्चयः ॥ ०२३ ॥

वैश्यस्यैते यदि गुणास्तस्य पञ्चाशतं भवेत् ।
शूद्रस्यापि विनीतस्य चतुर्भागफलं स्मृतम् ॥ ०२४ ॥

एतच्चैवं योऽनुतिष्ठेत युक्तः ; सत्येन युक्तो गुरुशुश्रूषया च ।
दान्तः क्षान्तो देवतार्ची प्रशान्तः ; शुचिर्बुद्धो धर्मशीलोऽनहंवाक् ॥ ०२५ ॥

महत्फलं प्राप्नुते स द्विजाय ; दत्त्वा दोग्ध्रीं विधिनानेन धेनुम् ।
नित्यं दद्यादेकभक्तः सदा च ; सत्ये स्थितो गुरुशुश्रूषिता च ॥ ०२६ ॥

वेदाध्यायी गोषु यो भक्तिमांश्च ; नित्यं दृष्ट्वा योऽभिनन्देत गाश्च ।
आ जातितो यश्च गवां नमेत ; इदं फलं शक्र निबोध तस्य ॥ ०२७ ॥

यत्स्यादिष्ट्वा राजसूये फलं तु ; यत्स्यादिष्ट्वा बहुना काञ्चनेन ।
एतत्तुल्यं फलमस्याहुरग्र्यं ; सर्वे सन्तस्त्वृषयो ये च सिद्धाः ॥ ०२८ ॥

योऽग्रं भक्तान्किञ्चिदप्राश्य दद्या ;द्गोभ्यो नित्यं गोव्रती सत्यवादी ।
शान्तो बुद्धो गोसहस्रस्य पुण्यं ; संवत्सरेणाप्नुयात्पुण्यशीलः ॥ ०२९ ॥

य एकं भक्तमश्नीयाद्दद्यादेकं गवां च यत् ।
दश वर्षाण्यनन्तानि गोव्रती गोनुकम्पकः ॥ ०३० ॥

एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति ।
यावन्ति तस्य प्रोक्तानि दिवसानि शतक्रतो ॥ ०३१ ॥

तावच्छतानां स गवां फलमाप्नोति शाश्वतम् ॥ ०३१ ॥

ब्राह्मणस्य फलं हीदं क्षत्रियेऽभिहितं शृणु ।
पञ्चवार्षिकमेतत्तु क्षत्रियस्य फलं स्मृतम् ॥ ०३२ ॥

ततोऽर्धेन तु वैश्यस्य शूद्रो वैश्यार्धतः स्मृतः ॥ ०३२ ॥

यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा संप्रयच्छति ।
यावतीः स्पर्शयेद्गा वै तावत्तु फलमश्नुते ॥ ०३३ ॥

लोम्नि लोम्नि महाभाग लोकाश्चास्याक्षयाः स्मृताः ॥ ०३३ ॥

सङ्ग्रामेष्वर्जयित्वा तु यो वै गाः संप्रयच्छति ।
आत्मविक्रयतुल्यास्ताः शाश्वता विद्धि कौशिक ॥ ०३४ ॥

अलाभे यो गवां दद्यात्तिलधेनुं यतव्रतः ।
दुर्गात्स तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ ०३५ ॥

न त्वेवासां दानमात्रं प्रशस्तं ; पात्रं कालो गोविशेषो विधिश्च ।
कालज्ञानं विप्र गवान्तरं हि ; दुःखं ज्ञातुं पावकादित्यभूतम् ॥ ०३६ ॥

स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं ; वैतानस्थं पापभीरुं कृतज्ञम् ।
गोषु क्षान्तं नातितीक्ष्णं शरण्यं ; वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ०३७ ॥

वृत्तिग्लाने सीदति चातिमात्रं ; कृष्यर्थं वा होमहेतोः प्रसूत्याम् ।
गुर्वर्थं वा बालसंवृद्धये वा ; धेनुं दद्याद्देशकाले विशिष्टे ॥ ०३८ ॥

अन्तर्जाताः सुक्रयज्ञानलब्धाः ; प्राणक्रीता निर्जिताश्चौकजाश्च ।
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च ; द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥ ०३९ ॥

बलान्विताः शीलवयोपपन्नाः ; सर्वाः प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा ; तथार्जुनीनां कपिला वरिष्ठा ॥ ०४० ॥

तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ ; तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः पुष्टैः क्षीरपैः सुप्रचारा ;स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ ०४१ ॥

दत्त्वा धेनुं सुव्रतां साधुवत्सां ; कल्याणवृत्तामपलायिनीं च ।
यावन्ति लोमानि भवन्ति तस्या ;स्तावन्ति वर्षाणि वसत्यमुत्र ॥ ०४२ ॥

तथानड्वाहं ब्राह्मणायाथ धुर्यं ; दत्त्वा युवानं बलिनं विनीतम् ।
हलस्य वोढारमनन्तवीर्यं ; प्राप्नोति लोकान्दशधेनुदस्य ॥ ०४३ ॥

कान्तारे ब्राह्मणान्गाश्च यः परित्राति कौशिक ।
क्षेमेण च विमुच्येत तस्य पुण्यफलं शृणु ॥ ०४४ ॥

अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतम् ॥ ०४४ ॥

मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते ।
लोकान्बहुविधान्दिव्यान्यद्वास्य हृदि वर्तते ॥ ०४५ ॥

तत्सर्वं समवाप्नोति कर्मणा तेन मानवः ।
गोभिश्च समनुज्ञातः सर्वत्र स महीयते ॥ ०४६ ॥

यस्त्वेतेनैव विधिना गां वनेष्वनुगच्छति ।
तृणगोमयपर्णाशी निःस्पृहो नियतः शुचिः ॥ ०४७ ॥

अकामं तेन वस्तव्यं मुदितेन शतक्रतो ।
मम लोके सुरैः सार्धं लोके यत्रापि चेच्छति ॥ ०४८ ॥

---

# अध्याय ०७३

इन्द्र उवाच ॥

जानन्यो गामपहरेद्विक्रीयाद्वार्थकारणात् ।
एतद्विज्ञातुमिच्छामि का नु तस्य गतिर्भवेत् ॥ ००१ ॥

ब्रह्मोवाच ॥

भक्षार्थं विक्रयार्थं वा येऽपहारं हि कुर्वते ।
दानार्थं वा ब्राह्मणाय तत्रेदं श्रूयतां फलम् ॥ ००२ ॥

विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः ।
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ॥ ००३ ॥

घातकः खादको वापि तथा यश्चानुमन्यते ।
यावन्ति तस्या लोमानि तावद्वर्षाणि मज्जति ॥ ००४ ॥

ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके ।
विक्रये चापहारे च ते दोषा वै स्मृताः प्रभो ॥ ००५ ॥

अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति ।
यावद्दाने फलं तस्यास्तावन्निरयमृच्छति ॥ ००६ ॥

सुवर्णं दक्षिणामाहुर्गोप्रदाने महाद्युते ।
सुवर्णं परमं ह्युक्तं दक्षिणार्थमसंशयम् ॥ ००७ ॥

गोप्रदानं तारयते सप्त पूर्वांस्तथा परान् ।
सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते ॥ ००८ ॥

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
सुवर्णं पावनं शक्र पावनानां परं स्मृतम् ॥ ००९ ॥

कुलानां पावनं प्राहुर्जातरूपं शतक्रतो ।
एषा मे दक्षिणा प्रोक्ता समासेन महाद्युते ॥ ०१० ॥

भीष्म उवाच ॥

एतत्पितामहेनोक्तमिन्द्राय भरतर्षभ ।
इन्द्रो दशरथायाह रामायाह पिता तथा ॥ ०११ ॥

राघवोऽपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने ।
ऋषिभ्यो लक्ष्मणेनोक्तमरण्ये वसता विभो ॥ ०१२ ॥

पारंपर्यागतं चेदमृषयः संशितव्रताः ।
दुर्धरं धारयामासू राजानश्चैव धार्मिकाः ॥ ०१३ ॥

उपाध्यायेन गदितं मम चेदं युधिष्ठिर ॥ ०१३ ॥

य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि ।
यज्ञेषु गोप्रदानेषु द्वयोरपि समागमे ॥ ०१४ ॥

तस्य लोकाः किलाक्षय्या दैवतैः सह नित्यदा ।
इति ब्रह्मा स भगवानुवाच परमेश्वरः ॥ ०१५ ॥

---

# व्रतनियमफलम्

## अध्याय ०७४

युधिष्ठिर उवाच ॥

विस्रम्भितोऽहं भवता धर्मान्प्रवदता विभो ।
प्रवक्ष्यामि तु संदेहं तन्मे ब्रूहि पितामह ॥ ००१ ॥

व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते ।
नियमानां फलं किं च स्वधीतस्य च किं फलम् ॥ ००२ ॥

दमस्येह फलं किं च वेदानां धारणे च किम् ।
अध्यापने फलं किं च सर्वमिच्छामि वेदितुम् ॥ ००३ ॥

अप्रतिग्राहके किं च फलं लोके पितामह ।
तस्य किं च फलं दृष्टं श्रुतं यः संप्रयच्छति ॥ ००४ ॥

स्वकर्मनिरतानां च शूराणां चापि किं फलम् ।
सत्ये च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम् ॥ ००५ ॥

पितृशुश्रूषणे किं च मातृशुश्रूषणे तथा ।
आचार्यगुरुशुश्रूषास्वनुक्रोशानुकम्पने ॥ ००६ ॥

एतत्सर्वमशेषेण पितामह यथातथम् ।
वेत्तुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥ ००७ ॥

भीष्म उवाच ॥

यो व्रतं वै यथोद्दिष्टं तथा संप्रतिपद्यते ।
अखण्डं सम्यगारब्धं तस्य लोकाः सनातनाः ॥ ००८ ॥

नियमानां फलं राजन्प्रत्यक्षमिह दृश्यते ।
नियमानां क्रतूनां च त्वयावाप्तमिदं फलम् ॥ ००९ ॥

स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इहलोकेऽर्थवान्नित्यं ब्रह्मलोके च मोदते ॥ ०१० ॥

दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ॥ ०११ ॥

यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः ।
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ॥ ०१२ ॥

युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ।
स्वर्गे तथा प्रमोदन्ते तपसा विक्रमेण च ॥ ०१३ ॥

दानैर्यज्ञैश्च विविधैर्यथा दान्ताः क्षमान्विताः ।
दाता कुप्यति नो दान्तस्तस्माद्दानात्परो दमः ॥ ०१४ ॥

यस्तु दद्यादकुप्यन्हि तस्य लोकाः सनातनाः ।

क्रोधो हन्ति हि यद्दानं तस्माद्दानात्परो दमः ॥ ०१५ ॥

अदृश्यानि महाराज स्थानान्ययुतशो दिवि ।
ऋषीणां सर्वलोकेषु यानीतो यान्ति देवताः ॥ ०१६ ॥

दमेन यानि नृपते गच्छन्ति परमर्षयः ।
कामयाना महत्स्थानं तस्माद्दानात्परो दमः ॥ ०१७ ॥

अध्यापकः परिक्लेशादक्षयं फलमश्नुते ।
विधिवत्पावकं हुत्वा ब्रह्मलोके नराधिप ॥ ०१८ ॥

अधीत्यापि हि यो वेदान्न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्मप्रशंसी च सोऽपि स्वर्गे महीयते ॥ ०१९ ॥

क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ।
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते ॥ ०२० ॥

वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत् ।
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयार्च्छति ॥ ०२१ ॥

शूरा बहुविधाः प्रोक्तास्तेषामर्थांश्च मे शृणु ।
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव ह ॥ ०२२ ॥

यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥ ०२३ ॥

बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथापरे ।
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ॥ ०२४ ॥

तैस्तैस्तु नियमैः शूरा बहवः सन्ति चापरे ।
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः ॥ ०२५ ॥

गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे ॥ ०२६ ॥

सांख्यशूराश्च बहवो योगशूरास्तथापरे ।
अरण्ये गृहवासे च शूराश्चातिथिपूजने ॥ ०२७ ॥

सर्वे यान्ति परा.ण्ल्लोकान्स्वकर्मफलनिर्जितान् ॥ ०२७ ॥

धारणं सर्ववेदानां सर्वतीर्थावगाहनम् ।
सत्यं च ब्रुवतो नित्यं समं वा स्यान्न वा समम् ॥ ०२८ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ०२९ ॥

सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते ।
सत्येन मारुतो वाति सर्वं सत्ये प्रतिष्ठितम् ॥ ०३० ॥

सत्येन देवान्प्रीणाति पितॄन्वै ब्राह्मणांस्तथा ।
सत्यमाहुः परं धर्मं तस्मात्सत्यं न लङ्घयेत् ॥ ०३१ ॥

मुनयः सत्यनिरता मुनयः सत्यविक्रमाः ।
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते ॥ ०३२ ॥

सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ ॥ ०३२ ॥

दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया ।
असंशयं विनीतात्मा सर्वः स्वर्गे महीयते ॥ ०३३ ॥

ब्रह्मचर्यस्य तु गुणाञ्शृणु मे वसुधाधिप ।
आ जन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ॥ ०३४ ॥

न तस्य किञ्चिदप्राप्यमिति विद्धि जनाधिप  ॥ ०३४  ॥

बह्व्यः कोट्यस्त्वृषीणां तु ब्रह्मलोके वसन्त्युत ।
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम्  ॥ ०३५  ॥

ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम् ।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते  ॥ ०३६  ॥

प्रत्यक्षं च तवाप्येतद्ब्राह्मणेषु तपस्विषु ।
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः  ॥ ०३७  ॥

तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते  ॥ ०३७  ॥

मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु ।
शुश्रूषते यः पितरं न चासूयेत्कथञ्चन  ॥ ०३८  ॥

मातरं वानहंवादी गुरुमाचार्यमेव च  ॥ ०३८  ॥

तस्य राजन्फलं विद्धि स्वर्लोके स्थानमुत्तमम् ।
न च पश्येत नरकं गुरुशुश्रूषुरात्मवान्  ॥ ०३९  ॥

---

# गोप्रदानिकम्

## अध्याय ०७५

युधिष्ठिर उवाच  ॥

विधिं गवां परमहं श्रोतुमिच्छामि तत्त्वतः ।
येन ताञ्शाश्वता.ण्ल्लोकानखिलानश्नुवीमहि ॥ ००१ ॥

भीष्म उवाच ॥

न गोदानात्परं किञ्चिद्विद्यते वसुधाधिप ।
गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलम् ॥ ००२ ॥

सतामर्थे सम्यगुत्पादितो यः ; स वै क्लृप्तः सम्यगिष्टः प्रजाभ्यः ।
तस्मात्पूर्वं ह्यादिकाले प्रवृत्तं ; गवां दाने शृणु राजन्विधिं मे ॥ ००३ ॥

पुरा गोषूपनीतासु गोषु संदिग्धदर्शिना ।
मान्धात्रा प्रकृतं प्रश्नं बृहस्पतिरभाषत ॥ ००४ ॥

द्विजातिमभिसत्कृत्य श्वः कालमभिवेद्य च ।
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः ॥ ००५ ॥

आह्वानं च प्रयुञ्जीत समङ्गे बहुलेति च ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥ ००६ ॥

गौर्मे माता गोवृषभः पिता मे ; दिवं शर्म जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु ; मुनिर्वाणीमुत्सृजेद्गोप्रदाने ॥ ००७ ॥

स तामेकां निशां गोभिः समसख्यः समव्रतः ।
ऐकात्म्यगमनात्सद्यः कल्मषाद्विप्रमुच्यते ॥ ००८ ॥

उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।
त्रिविधं प्रतिपत्तव्यमर्थवादाशिषः स्तवाः ॥ ००९ ॥

ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो ; गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।

क्षितौ राधःप्रभवः शश्वदेव ; प्राजापत्याः सर्वमित्यर्थवादः ॥ ०१० ॥

गावो ममैनः प्रणुदन्तु सौर्या ;स्तथा सौम्याः स्वर्गयानाय सन्तु ।
आम्नाता मे ददतीराश्रयं तु ; तथानुक्ताः सन्तु सर्वाशिषो मे ॥ ०११ ॥

शेषोत्सर्गे कर्मभिर्देहमोक्षे ; सरस्वत्यः श्रेयसि संप्रवृत्ताः ।
यूयं नित्यं पुण्यकर्मोपवाह्या ; दिशध्वं मे गतिमिष्टां प्रपन्नाः ॥ ०१२ ॥

या वै यूयं सोऽहमद्यैकभावो ; युष्मान्दत्त्वा चाहमात्मप्रदाता ।
मनश्च्युता मनएवोपपन्नाः ; संधुक्षध्वं सौम्यरूपोग्ररूपाः ॥ ०१३ ॥

एवं तस्याग्रे पूर्वमर्धं वदेत ; गवां दाता विधिवत्पूर्वदृष्टम् ।
प्रतिब्रूयाच्छेषमर्धं द्विजातिः ; प्रतिगृह्णन्वै गोप्रदाने विधिज्ञः ॥ ०१४ ॥

गां ददानीति वक्तव्यमर्घ्यवस्त्रवसुप्रदः ।
ऊधस्या भरितव्या च वैष्णवीति च चोदयेत् ॥ ०१५ ॥

नाम सङ्कीर्तयेत्तस्या यथासंख्योत्तरं स वै ।
फलं षड्विंशदष्टौ च सहस्राणि च विंशतिः ॥ ०१६ ॥

एवमेतान्गुणान्वृद्धान्गवादीनां यथाक्रमम् ।
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे ॥ ०१७ ॥

गोदः शीली निर्भयश्चार्घदाता ; न स्याद्दुःखी वसुदाता च कामी ।
ऊधस्योढा भारत यश्च विद्वा ;न्व्याख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥ ०१८ ॥

गा वै दत्त्वा गोव्रती स्यात्त्रिरात्रं ; निशां चैकां संवसेतेह ताभिः ।
काम्याष्टम्यां वर्तितव्यं त्रिरात्रं ; रसैर्वा गोः शकृता प्रस्नवैर्वा ॥ ०१९ ॥

वेदव्रती स्याद्वृषभप्रदाता ; वेदावाप्तिर्गोयुगस्य प्रदाने ।
तथा गवां विधिमासाद्य यज्वा ; लोकानग्र्यान्विन्दते नाविधिज्ञः ॥ ०२० ॥

कामान्सर्वान्पार्थिवानेकसंस्था ;न्यो वै दद्यात्कामदुघां च धेनुम् ।
सम्यक्ताः स्युर्हव्यकव्यौघवत्य ;स्तासामुक्ष्णां ज्यायसां संप्रदानम्  ॥ ०२१  ॥

न चाशिष्यायाव्रतायोपकुर्या ;न्नाश्रद्दधानाय न वक्रबुद्धये ।
गुह्यो ह्ययं सर्वलोकस्य धर्मो ; नेमं धर्मं यत्र तत्र प्रजल्पेत्  ॥ ०२२  ॥

सन्ति लोके श्रद्दधाना मनुष्याः ; सन्ति क्षुद्रा राक्षसा मानुषेषु ।
येषां दानं दीयमानं ह्यनिष्टं ; नास्तिक्यं चाप्याश्रयन्ते ह्यपुण्याः  ॥ ०२३  ॥

बार्हस्पत्यं वाक्यमेतन्निशम्य ; ये राजानो गोप्रदानानि कृत्वा ।
लोकान्प्राप्ताः पुण्यशीलाः सुवृत्ता ;स्तान्मे राजन्कीर्त्यमानान्निबोध  ॥ ०२४  ॥

उशीनरो विष्वगश्वो नृगश्च ; भगीरथो विश्रुतो यौवनाश्वः ।
मान्धाता वै मुचुकुन्दश्च राजा ; भूरिद्युम्नो नैषधः सोमकश्च  ॥ ०२५  ॥

पुरूरवा भरतश्चक्रवर्ती ; यस्यान्वये भारताः सर्व एव ।
तथा वीरो दाशरथिश्च रामो ; ये चाप्यन्ये विश्रुताः कीर्तिमन्तः  ॥ ०२६  ॥

तथा राजा पृथुकर्मा दिलीपो ; दिवं प्राप्तो गोप्रदाने विधिज्ञः ।
यज्ञैर्दानैस्तपसा राजधर्मै ;र्मान्धाताभूद्गोप्रदानैश्च युक्तः  ॥ ०२७  ॥

तस्मात्पार्थ त्वमपीमां मयोक्तां ; बार्हस्पतीं भारतीं धारयस्व ।
द्विजाग्र्येभ्यः संप्रयच्छ प्रतीतो ; गाः पुण्या वै प्राप्य राज्यं कुरूणाम्  ॥ ०२८
॥

वैशंपायन उवाच  ॥

तथा सर्वं कृतवान्धर्मराजो ; भीष्मेणोक्तो विधिवद्गोप्रदाने ।
स मान्धातुर्देवदेवोपदिष्टं ; सम्यग्धर्मं धारयामास राजा  ॥ ०२९  ॥

इति नृप सततं गवां प्रदाने ; यवशकलान्सह गोमयैः पिबानः ।
क्षितितलशयनः शिखी यतात्मा ; वृष इव राजवृषस्तदा बभूव ॥ ०३० ॥

स नृपतिरभवत्सदैव ताभ्यः ; प्रयतमना ह्यभिसंस्तुवंश्च गा वै ।
नृपधुरि च न गामयुङ्क्त भूय ;स्तुरगवरैरगमच्च यत्र तत्र ॥ ०३१ ॥

---

# अध्याय ०७६

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा भूयः शांतनवं नृप ।
गोदाने विस्तरं धीमान्पप्रच्छ विनयान्वितः ॥ ००१ ॥

युधिष्ठिर उवाच ॥

गोप्रदाने गुणान्सम्यक्पुनः प्रब्रूहि भारत ।
न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम् ॥ ००२ ॥

इत्युक्तो धर्मराजेन तदा शांतनवो नृप ।
सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ॥ ००३ ॥

भीष्म उवाच ॥

वत्सलां गुणसंपन्नां तरुणीं वस्त्रसंवृताम् ।
दत्त्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते ॥ ००४ ॥

असुर्या नाम ते लोका गां दत्त्वा तत्र गच्छति ।
पीतोदकां जग्धतृणां नष्टदुग्धां निरिन्द्रियाम् ॥ ००५ ॥

जरोग्रामुपयुक्तार्थां जीर्णां कूपमिवाजलम् ।
दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ॥ ००६ ॥

दुष्टा रुष्टा व्याधिता दुर्बला वा ; न दातव्या याश्च मूल्यैरदत्तैः ।
क्लेशैर्विप्रं योऽफलैः संयुनक्ति ; तस्यावीर्याश्चाफलाश्चैव लोकाः ॥ ००७ ॥

बलान्विताः शीलवयोपपन्नाः ; सर्वाः प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा ; तथार्जुनीनां कपिला वरिष्ठा ॥ ००८ ॥

युधिष्ठिर उवाच ॥

कस्मात्समाने बहुलाप्रदाने ; सद्भिः प्रशस्तं कपिलाप्रदानम् ।
विशेषमिच्छामि महानुभाव ; श्रोतुं समर्थो हि भवान्प्रवक्तुम् ॥ ००९ ॥

भीष्म उवाच ॥

वृद्धानां ब्रुवतां तात श्रुतं मे यत्प्रभाषसे ।
वक्ष्यामि तदशेषेण रोहिण्यो निर्मिता यथा ॥ ०१० ॥

प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
असृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ॥ ०११ ॥

यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः ।
तथा वृत्तिं समाश्रित्य वर्तयन्ति प्रजा विभो ॥ ०१२ ॥

अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठास्ततो नराः ।
ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ॥ ०१३ ॥

यज्ञैराप्यायते सोमः स च गोषु प्रतिष्ठितः ।
सर्वे देवाः प्रमोदन्ते पूर्ववृत्तास्ततः प्रजाः ॥ ०१४ ॥

एतान्येव तु भूतानि प्राक्रोशन्वृत्तिकाङ्क्षया ।
वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत्  ॥ ०१५  ॥

इतीदं मनसा गत्वा प्रजासर्गार्थमात्मनः ।
प्रजापतिर्बलाधानममृतं प्रापिबत्तदा  ॥ ०१६  ॥

स गतस्तस्य तृप्तिं तु गन्धं सुरभिमुद्गिरन् ।
ददर्शोद्गारसंवृत्तां सुरभिं मुखजां सुताम्  ॥ ०१७  ॥

सासृजत्सौरभेयीस्तु सुरभिर्लोकमातरः ।
सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः  ॥ ०१८  ॥

तासाममृतवर्णानां क्षरन्तीनां समन्ततः ।
बभूवामृतजः फेनः स्रवन्तीनामिवोर्मिजः  ॥ ०१९  ॥

स वत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः ।
शिरस्यवाप तत्क्रुद्धः स तदोदैक्षत प्रभुः  ॥ ०२०  ॥

ललाटप्रभवेनाक्ष्णा रोहिणीः प्रदहन्निव  ॥ ०२०  ॥

तत्तेजस्तु ततो रौद्रं कपिला गा विशां पते ।
नानावर्णत्वमनयन्मेघानिव दिवाकरः  ॥ ०२१  ॥

यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः ।
यथोत्पन्नाः स्ववर्णस्थास्ता नीता नान्यवर्णताम्  ॥ ०२२  ॥

अथ क्रुद्धं महादेवं प्रजापतिरभाषत ।
अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यते गवाम्  ॥ ०२३  ॥

यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः ।

तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसंभवाः ॥ ०२४ ॥

न दुष्यत्यनिलो नाग्निर्न सुवर्णं न चोदधिः ।
नामृतेनामृतं पीतं वत्सपीता न वत्सला ॥ ०२५ ॥

इमा.णल्लोकान्भरिष्यन्ति हविषा प्रस्नवेन च ।
आसामैश्वर्यमश्नीहि सर्वामृतमयं शुभम् ॥ ०२६ ॥

वृषभं च ददौ तस्मै सह ताभिः प्रजापतिः ।
प्रसादयामास मनस्तेन रुद्रस्य भारत ॥ ०२७ ॥

प्रीतश्चापि महादेवश्चकार वृषभं तदा ।
ध्वजं च वाहनं चैव तस्मात्स वृषभध्वजः ॥ ०२८ ॥

ततो देवैर्महादेवस्तदा पशुपतिः कृतः ।
ईश्वरः स गवां मध्ये वृषाङ्क इति चोच्यते ॥ ०२९ ॥

एवमव्यग्रवर्णानां कपिलानां महौजसाम् ।
प्रदाने प्रथमः कल्पः सर्वासामेव कीर्तितः ॥ ०३० ॥

लोकज्येष्ठा लोकवृत्तिप्रवृत्ता ; रुद्रोपेताः सोमविष्यन्दभूताः ।
सौम्याः पुण्याः कामदाः प्राणदाश्च ; गा वै दत्त्वा सर्वकामप्रदः स्यात् ॥ ०३१ ॥

इमं गवां प्रभवविधानमुत्तमं ; पठन्सदा शुचिरतिमङ्गलप्रियः ।
विमुच्यते कलिकलुषेण मानवः ; प्रियं सुतान्पशुधनमाप्नुयात्तथा ॥ ०३२ ॥

हव्यं कव्यं तर्पणं शान्तिकर्म ; यानं वासो वृद्धबालस्य पुष्टिम् ।
एतान्सर्वान्गोप्रदाने गुणान्वै ; दाता राजन्नाप्नुयाद्वै सदैव ॥ ०३३ ॥

वैशंपायन उवाच ॥

पितामहस्याथ निशम्य वाक्यं ; राजा सह भ्रातृभिराजमीढः ।
सौवर्णकांस्योपदुहास्ततो गाः ; पार्थो ददौ ब्राह्मणसत्तमेभ्यः ॥ ०३४ ॥

तथैव तेभ्योऽभिददौ द्विजेभ्यो ; गवां सहस्राणि शतानि चैव ।
यज्ञान्समुद्दिश्य च दक्षिणार्थे ; लोकान्विजेतुं परमां च कीर्तिम् ॥ ०३५ ॥

---

# अध्याय ०७७

भीष्म उवाच ॥

एतस्मिन्नेव काले तु वसिष्ठमृषिसत्तमम् ।
इक्ष्वाकुवंशजो राजा सौदासो ददतां वरः ॥ ००१ ॥

सर्वलोकचरं सिद्धं ब्रह्मकोशं सनातनम् ।
पुरोहितमिदं प्रष्टुमभिवाद्योपचक्रमे ॥ ००२ ॥

सौदास उवाच ॥

त्रैलोक्ये भगवन्किं स्वित्पवित्रं कथ्यतेऽनघ ।
यत्कीर्तयन्सदा मर्त्यः प्राप्नुयात्पुण्यमुत्तमम् ॥ ००३ ॥

भीष्म उवाच ॥

तस्मै प्रोवाच वचनं प्रणताय हितं तदा ।
गवामुपनिषद्विद्वान्नमस्कृत्य गवां शुचिः ॥ ००४ ॥

गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धिकाः ।

गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥ ००५ ॥

गावो भूतं भविष्यच्च गावः पुष्टिः सनातनी ।
गावो लक्ष्म्यास्तथा मूलं गोषु दत्तं न नश्यति ॥ ००६ ॥

अन्नं हि सततं गावो देवानां परमं हविः ॥ ००६ ॥

स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः ॥ ००७ ॥

सायं प्रातश्च सततं होमकाले महामते ।
गावो ददति वै होम्यमृषिभ्यः पुरुषर्षभ ॥ ००८ ॥

कानिचिद्यानि दुर्गाणि दुष्कृतानि कृतानि च ।
तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ॥ ००९ ॥

एकां च दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्सर्वे तुल्यफला हि ते ॥ ०१० ॥

अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
समृद्धो यश्च कीनाशो नार्घ्यमर्हन्ति ते त्रयः ॥ ०११ ॥

कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनाम् ।
सुव्रतां वस्त्रसंवीतामुभौ लोकौ जयन्ति ते ॥ ०१२ ॥

युवानमिन्द्रियोपेतं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥ ०१३ ॥

वृषभं ये प्रयच्छन्ति श्रोत्रियाय परंतप ।
ऐश्वर्यं तेऽभिजायन्ते जायमानाः पुनः पुनः ॥ ०१४ ॥

नाकीर्तयित्वा गाः सुप्यान्नास्मृत्य पुनरुत्पतेत् ।
सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात् ॥ ०१५ ॥

गवां मूत्रपुरीषस्य नोद्विजेत कदाचन ।
न चासां मांसमश्नीयाद्गवां व्युष्टिं तथाश्नुते ॥ ०१६ ॥

गाश्च सङ्कीर्तयेन्नित्यं नावमन्येत गास्तथा ।
अनिष्टं स्वप्नमालक्ष्य गां नरः संप्रकीर्तयेत् ॥ ०१७ ॥

गोमयेन सदा स्नायाद्गोकरीषे च संविशेत् ।
श्लेष्ममूत्रपुरीषाणि प्रतिघातं च वर्जयेत् ॥ ०१८ ॥

सार्द्रचर्मणि भुञ्जीत निरीक्षन्वारुणीं दिशम् ।
वाग्यतः सर्पिषा भूमौ गवां व्युष्टिं तथाश्नुते ॥ ०१९ ॥

घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं दद्याद्घृतं प्राशेद्गवां व्युष्टिं तथाश्नुते ॥ ०२० ॥

गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः ।
रसरत्नमयीं दद्यान्न स शोचेत्कृताकृते ॥ ०२१ ॥

गावो मामुपतिष्ठन्तु हेमशृङ्गाः पयोमुचः ।
सुरभ्यः सौरभेयाश्च सरितः सागरं यथा ॥ ०२२ ॥

गावः पश्यन्तु मां नित्यं गावः पश्याम्यहं तदा ।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥ ०२३ ॥

एवं रात्रौ दिवा चैव समेषु विषमेषु च ।
महाभयेषु च नरः कीर्तयन्मुच्यते भयात् ॥ ०२४ ॥

# अध्याय ०७८

वसिष्ठ उवाच ॥

शतं वर्षसहस्राणां तपस्तप्तं सुदुश्चरम् ।
गोभिः पूर्वविसृष्टाभिर्गच्छेम श्रेष्ठतामिति ॥ ००१ ॥

लोकेऽस्मिन्दक्षिणानां च सर्वासां वयमुत्तमाः ।
भवेम न च लिप्येम दोषेणेति परंतप ॥ ००२ ॥

स एव चेतसा तेन हतो लिप्येत सर्वदा ।
शकृता च पवित्रार्थं कुर्वीरन्देवमानुषाः ॥ ००३ ॥

तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
प्रदातारश्च गोलोकान्गच्छेयुरिति मानद ॥ ००४ ॥

ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः ।
एवं भवत्विति विभुर्लोकांस्तारयतेति च ॥ ००५ ॥

उत्तस्थुः सिद्धिकामास्ता भूतभव्यस्य मातरः ।
तपसोऽन्ते महाराज गावो लोकपरायणाः ॥ ००६ ॥

तस्माद्गावो महाभागाः पवित्रं परमुच्यते ।
तथैव सर्वभूतानां गावस्तिष्ठन्ति मूर्धनि ॥ ००७ ॥

समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते ॥ ००८ ॥

रोहिणीं तुल्यवत्सां तु धेनुं दत्त्वा पयस्विनीम् ।

सुव्रतां वस्त्रसंवीतां सूर्यलोके महीयते ॥ ००९ ॥

समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां सोमलोके महीयते ॥ ०१० ॥

समानवत्सां श्वेतां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ॥ ०११ ॥

समानवत्सां कृष्णां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामग्निलोके महीयते ॥ ०१२ ॥

समानवत्सां धूम्रां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां याम्यलोके महीयते ॥ ०१३ ॥

अपां फेनसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते ॥ ०१४ ॥

वातरेणुसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥ ०१५ ॥

हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां कौबेरं लोकमश्नुते ॥ ०१६ ॥

पलालधूम्रवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां पितृलोके महीयते ॥ ०१७ ॥

सवत्सां पीवरीं दत्त्वा शितिकण्ठामलङ्कृताम् ।
वैश्वदेवमसंबाधं स्थानं श्रेष्ठं प्रपद्यते ॥ ०१८ ॥

समानवत्सां गौरीं तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते ॥ ०१९ ॥

पाण्डुकम्बलवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते ॥ ०२० ॥

वैराटपृष्ठमुक्षाणं सर्वरत्नैरलङ्कृतम् ।
प्रदाय मरुतां लोकानजरान्प्रतिपद्यते ॥ ०२१ ॥

वत्सोपपन्नां नीलाङ्गां सर्वरत्नसमन्विताम् ।
गन्धर्वाप्सरसां लोकान्दत्त्वा प्राप्नोति मानवः ॥ ०२२ ॥

शितिकण्ठमनड्वाहं सर्वरत्नैरलङ्कृतम् ।
दत्त्वा प्रजापतेर्लोकान्विशोकः प्रतिपद्यते ॥ ०२३ ॥

गोप्रदानरतो याति भित्त्वा जलदसञ्चयान् ।
विमानेनार्कवर्णेन दिवि राजन्विराजता ॥ ०२४ ॥

तं चारुवेषाः सुश्रोण्यः सहस्रं वरयोषितः ।
रमयन्ति नरश्रेष्ठ गोप्रदानरतं नरम् ॥ ०२५ ॥

वीणानां वल्लकीनां च नूपुराणां च शिञ्जितैः ।
हासैश्च हरिणाक्षीणां प्रसुप्तः प्रतिबोध्यते ॥ ०२६ ॥

यावन्ति लोमानि भवन्ति धेन्वा ;स्तावन्ति वर्षाणि महीयते सः ।
स्वर्गाच्च्युतश्चापि ततो नृलोके ; कुले समुत्पत्स्यति गोमिनां सः ॥ ०२७ ॥

# अध्याय ०७९

वसिष्ठ उवाच ॥

घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।
घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥ ००१ ॥

घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।
घृतं सर्वेषु गात्रेषु घृतं मे मनसि स्थितम् ॥ ००२ ॥

गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥ ००३ ॥

इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा ।
यदह्ना कुरुते पापं तस्मात्स परिमुच्यते ॥ ००४ ॥

प्रासादा यत्र सौवर्णा वसोर्धारा च यत्र सा ।
गन्धर्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः ॥ ००५ ॥

नवनीतपङ्काः क्षीरोदा दधिशैवलसङ्कुलाः ।
वहन्ति यत्र नद्यो वै तत्र यान्ति सहस्रदाः ॥ ००६ ॥

गवां शतसहस्रं तु यः प्रयच्छेद्यथाविधि ।
परामृद्धिमवाप्याथ स गोलोके महीयते ॥ ००७ ॥

दश चोभयतः प्रेत्य मातापित्रोः पितामहान् ।
दधाति सुकृता.ण्ल्लोकान्पुनाति च कुलं नरः ॥ ००८ ॥

धेन्वाः प्रमाणेन समप्रमाणां ; धेनुं तिलानामपि च प्रदाय ।
पानीयदाता च यमस्य लोके ; न यातनां काञ्चिदुपैति तत्र ॥ ००९ ॥

पवित्रमग्र्यं जगतः प्रतिष्ठा ; दिवौकसां मातरोऽथाप्रमेयाः ।
अन्वालभेद्दक्षिणतो व्रजेच्च ; दद्याच्च पात्रे प्रसमीक्ष्य कालम् ॥ ०१० ॥

धेनुं सवत्सां कपिलां भूरिशृङ्गां ; कांस्योपदोहां वसनोत्तरीयाम् ।
प्रदाय तां गाहति दुर्विगाह्यां ; याम्यां सभां वीतभयो मनुष्यः ॥ ०११ ॥

सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
गावो मामुपतिष्ठन्तामिति नित्यं प्रकीर्तयेत् ॥ ०१२ ॥

नातः पुण्यतरं दानं नातः पुण्यतरं फलम् ।
नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥ ०१३ ॥

त्वचा लोम्नाथ शृङ्गैश्च वालैः क्षीरेण मेदसा ।
यज्ञं वहन्ति संभूय किमस्त्यभ्यधिकं ततः ॥ ०१४ ॥

यया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ।
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ॥ ०१५ ॥

गुणवचनसमुच्चयैकदेशो ; नृवर मयैष गवां प्रकीर्तितस्ते ।
न हि परमिह दानमस्ति गोभ्यो ; भवन्ति न चापि परायणं तथान्यत् ॥ ०१६ ॥

भीष्म उवाच ॥

परमिदमिति भूमिपो विचिन्त्य ; प्रवरमृषेर्वचनं ततो महात्मा ।
व्यसृजत नियतात्मवान्द्विजेभ्यः ; सुबहु च गोधनमाप्तवांश्च लोकान् ॥ ०१७ ॥

# अध्याय ०८०

युधिष्ठिर उवाच ॥

पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत् ।
पावनं परमं चैव तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

गावो महार्थाः पुण्याश्च तारयन्ति च मानवान् ।
धारयन्ति प्रजाश्चेमाः पयसा हविषा तथा ॥ ००२ ॥

न हि पुण्यतमं किञ्चिद्गोभ्यो भरतसत्तम ।
एताः पवित्राः पुण्याश्च त्रिषु लोकेष्वनुत्तमाः ॥ ००३ ॥

देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै ।
दत्त्वा चैता नरपते यान्ति स्वर्गं मनीषिणः ॥ ००४ ॥

मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा ।
गावो ददन्तः सततं सहस्रशतसंमिताः ॥ ००५ ॥

गताः परमकं स्थानं देवैरपि सुदुर्लभम् ॥ ००५ ॥

अपि चात्र पुरावृत्तं कथयिष्यामि तेऽनघ ।
ऋषीणामुत्तमं धीमान्कृष्णद्वैपायनं शुकः ।
अभिवाद्याह्निकं कृत्वा शुचिः प्रयतमानसः ॥ ००७ ॥

पितरं परिपप्रच्छ दृष्टलोकपरावरम् ॥ ००७ ॥

को यज्ञः सर्वयज्ञानां वरिष्ठ उपलक्ष्यते ।
किं च कृत्वा परं स्वर्गं प्राप्नुवन्ति मनीषिणः ॥ ००८ ॥

केन देवाः पवित्रेण स्वर्गमश्नन्ति वा विभो ।
किं च यज्ञस्य यज्ञत्वं क्व च यज्ञः प्रतिष्ठितः ॥ ००९ ॥

दानानामुत्तमं किं च किं च सत्रमतः परम् ।
पवित्राणां पवित्रं च यत्तद्ब्रूहि ममानघ ॥ ०१० ॥

एतच्छ्रुत्वा तु वचनं व्यासः परमधर्मवित् ।
पुत्रायाकथयत्सर्वं तत्त्वेन भरतर्षभ ॥ ०११ ॥

व्यास उवाच ॥

गावः प्रतिष्ठा भूतानां तथा गावः परायणम् ।
गावः पुण्याः पवित्राश्च पावनं धर्म एव च ॥ ०१२ ॥

पूर्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुमः ।
शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययम् ॥ ०१३ ॥

ततो ब्रह्मा तु गाः प्रायमुपविष्टाः समीक्ष्य ह ।
ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः ॥ ०१४ ॥

तासां शृङ्गाण्यजायन्त यस्या यादृङ्मनोगतम् ।
नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक ॥ ०१५ ॥

ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः ।
पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः ॥ ०१६ ॥

गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते ॥ ०१६ ॥

ये चैताः संप्रयच्छन्ति साधवो वीतमत्सराः ।
ते वै सुकृतिनः प्रोक्ताः सर्वदानप्रदाश्च ते ॥ ०१७ ॥

गवां लोकं तथा पुण्यमाप्नुवन्ति च तेऽनघ ॥ ०१७ ॥

यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः ।
पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम ॥ ०१८ ॥

सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका ।
सर्वत्र सुखसंस्पर्शा निष्पङ्का नीरजा शुभा ॥ ०१९ ॥

रक्तोत्पलवनैश्चैव मणिदण्डैर्हिरण्मयैः ।
तरुणादित्यसङ्काशैर्भान्ति तत्र जलाशयाः ॥ ०२० ॥

महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः ।
नीलोत्पलविमिश्रैश्च सरोभिर्बहुपङ्कजैः ॥ ०२१ ॥

करवीरवनैः फुल्लैः सहस्रावर्तसंवृतैः ।
संतानकवनैः फुल्लैर्वृक्षैश्च समलङ्कृताः ॥ ०२२ ॥

निर्मलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ।
उद्धूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ ०२३ ॥

सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ।
जातरूपमयैश्चान्यैर्हुताशनसमप्रभैः ॥ ०२४ ॥

सौवर्णगिरयस्तत्र मणिरत्नशिलोच्चयाः ।
सर्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः ॥ ०२५ ॥

नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ ॥ ०२६ ॥

रमन्ते पुण्यकर्माणस्तत्र नित्यं युधिष्ठिर ।

सर्वकामसमृद्धार्था निःशोका गतमन्यवः ॥ ०२७ ॥

विमानेषु विचित्रेषु रमणीयेषु भारत ।
मोदन्ते पुण्यकर्माणो विहरन्तो यशस्विनः ॥ ०२८ ॥

उपक्रीडन्ति तान्राजञ्शुभाश्चाप्सरसां गणाः ।
एता.ण्ल्लोकानवाप्नोति गां दत्त्वा वै युधिष्ठिर ॥ ०२९ ॥

यासामधिपतिः पूषा मारुतो बलवान्बली ।
ऐश्वर्ये वरुणो राजा ता मां पान्तु युगंधराः ॥ ०३० ॥

सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
प्राजापत्या इति ब्रह्मञ्जपेन्नित्यं यतव्रतः ॥ ०३१ ॥

गास्तु शुश्रूषते यश्च समन्वेति च सर्वशः ।
तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् ॥ ०३२ ॥

न द्रुह्येन्मनसा चापि गोषु ता हि सुखप्रदाः ।
अर्चयेत सदा चैव नमस्कारैश्च पूजयेत् ॥ ०३३ ॥

दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाश्नुते ॥ ०३३ ॥

येन देवाः पवित्रेण भुञ्जते लोकमुत्तमम् ।
यत्पवित्रं पवित्राणां तद्घृतं शिरसा वहेत् ॥ ०३४ ॥

घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं प्राशेद्घृतं दद्याद्गवां व्युष्टिं तथाश्नुते ॥ ०३५ ॥

त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत्पयः ।
गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत् ॥ ०३६ ॥

त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्त्र्यहम् ॥ ०३६ ॥

निर्हृतैश्च यवैर्गोभिर्मासं प्रसृतयावकः ।
ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यति ॥ ०३७ ॥

पराभवार्थं दैत्यानां देवैः शौचमिदं कृतम् ।
देवत्वमपि च प्राप्ताः संसिद्धाश्च महाबलाः ॥ ०३८ ॥

गावः पवित्राः पुण्याश्च पावनं परमं महत् ।
ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ॥ ०३९ ॥

गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् ।
पूताभिरद्भिराचम्य शुचिर्भवति निर्मलः ॥ ०४० ॥

अग्निमध्ये गवां मध्ये ब्राह्मणानां च संसदि ।
विद्यावेदव्रतस्नाता ब्राह्मणाः पुण्यकर्मिणः ॥ ०४१ ॥

अध्यापयेरञ्शिष्यान्वै गोमतीं यज्ञसंमिताम् ।
त्रिरात्रोपोषितः श्रुत्वा गोमतीं लभते वरम् ॥ ०४२ ॥

पुत्रकामश्च लभते पुत्रं धनमथापि च ।
पतिकामा च भर्तारं सर्वकामांश्च मानवः ॥ ०४३ ॥

गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः ॥ ०४३ ॥

एवमेता महाभागा यज्ञियाः सर्वकामदाः ।
रोहिण्य इति जानीहि नैताभ्यो विद्यते परम् ॥ ०४४ ॥

इत्युक्तः स महातेजाः शुकः पित्रा महात्मना ।
पूजयामास गा नित्यं तस्मात्त्वमपि पूजय ॥ ०४५ ॥

# श्रीगोसंवादः

## अध्याय ०८१

युधिष्ठिर उवाच ॥

मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतम् ।
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गोभिर्नृपेह संवादं श्रिया भरतसत्तम ॥ ००२ ॥

श्रीः कृत्वेह वपुः कान्तं गोमध्यं प्रविवेश ह ।
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य संपदम् ॥ ००३ ॥

गाव ऊचुः ॥

कासि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि ।
विस्मिताः स्म महाभागे तव रूपस्य संपदा ॥ ००४ ॥

इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि ।
तत्त्वेन च सुवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ ००५ ॥

श्रीरुवाच ॥

लोककान्तास्मि भद्रं वः श्रीर्नाम्नेह परिश्रुता ।
मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ॥ ००६ ॥

इन्द्रो विवस्वान्सोमश्च विष्णुरापोऽग्निरेव च ।
मयाभिपन्ना ऋध्यन्ते ऋषयो देवतास्तथा ॥ ००७ ॥

यांश्च द्विषाम्यहं गावस्ते विनश्यन्ति सर्वशः ।
धर्मार्थकामहीनाश्च ते भवन्त्यसुखान्विताः ॥ ००८ ॥

एवंप्रभावां मां गावो विजानीत सुखप्रदाम् ।
इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा ॥ ००९ ॥

आगता प्रार्थयानाहं श्रीजुष्टा भवतानघाः ॥ ००९ ॥

गाव ऊचुः ॥

अध्रुवां चञ्चलां च त्वां सामान्यां बहुभिः सह ।
न त्वामिच्छामि भद्रं ते गम्यतां यत्र रोचते ॥ ०१० ॥

वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाद्य वै ।
यत्रेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ॥ ०११ ॥

श्रीरुवाच ॥

किमेतद्वः क्षमं गावो यन्मां नेहाभ्यनन्दथ ।
न मां संप्रति गृह्णीथ कस्माद्वै दुर्लभां सतीम् ॥ ०१२ ॥

सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः ।
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ॥ ०१३ ॥

महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः ।

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ ०१४ ॥

क्षममेतद्धि वो गावः प्रतिगृह्णीत मामिह ।
नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे ॥ ०१५ ॥

गाव ऊचुः ॥

नावमन्यामहे देवि न त्वां परिभवामहे ।
अध्रुवा चलचित्तासि ततस्त्वां वर्जयामहे ॥ ०१६ ॥

बहुनात्र किमुक्तेन गम्यतां यत्र वाञ्छसि ।
वपुष्मत्यो वयं सर्वाः किमस्माकं त्वयानघे ॥ ०१७ ॥

श्रीरुवाच ॥

अवज्ञाता भविष्यामि सर्वलोकेषु मानदाः ।
प्रत्याख्यानेन युष्माभिः प्रसादः क्रियतामिति ॥ ०१८ ॥

महाभागा भवत्यो वै शरण्याः शरणागताम् ।
परित्रायन्तु मां नित्यं भजमानामनिन्दिताम् ॥ ०१९ ॥

माननां त्वहमिच्छामि भवत्यः सततं शुभाः ॥ ०१९ ॥

अप्येकाङ्गे तु वो वस्तुमिच्छामि च सुकुत्सिते ।
न वोऽस्ति कुत्सितं किञ्चिदङ्गेष्वालक्ष्यतेऽनघाः ॥ ०२० ॥

पुण्याः पवित्राः सुभगा ममादेशं प्रयच्छत ।
वसेयं यत्र चाङ्गेऽहं तन्मे व्याख्यातुमर्हथ ॥ ०२१ ॥

भीष्म उवाच ॥

एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः ।
संमन्त्र्य सहिताः सर्वाः श्रियमूचुर्नराधिप ॥ ०२२ ॥

अवश्यं मानना कार्या तवास्माभिर्यशस्विनि ।
शकृन्मूत्रे निवस नः पुण्यमेतद्धि नः शुभे ॥ ०२३ ॥

श्रीरुवाच ॥

दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः ।
एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः ॥ ०२४ ॥

भीष्म उवाच ॥

एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत ।
पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ॥ ०२५ ॥

एतद्गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम् ।
माहात्म्यं च गवां भूयः श्रूयतां गदतो मम ॥ ०२६ ॥

---

# गोलोकप्रश्नः

## अध्याय ०८२

भीष्म उवाच ॥

ये च गाः संप्रयच्छन्ति हुतशिष्टाशिनश्च ये ।
तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ ००१ ॥

ऋते दधिघृतेनेह न यज्ञः संप्रवर्तते ।
तेन यज्ञस्य यज्ञत्वमतोमूलं च लक्ष्यते ॥ ००२ ॥

दानानामपि सर्वेषां गवां दानं प्रशस्यते ।
गावः श्रेष्ठाः पवित्राश्च पावनं ह्येतदुत्तमम् ॥ ००३ ॥

पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह ।
पयो दधि घृतं यासां सर्वपापप्रमोचनम् ॥ ००४ ॥

गावस्तेजः परं प्रोक्तमिह लोके परत्र च ।
न गोभ्यः परमं किञ्चित्पवित्रं पुरुषर्षभ ॥ ००५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितामहस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ ००६ ॥

पराभूतेषु दैत्येषु शक्रे त्रिभुवनेश्वरे ।
प्रजाः समुदिताः सर्वाः सत्यधर्मपरायणाः ॥ ००७ ॥

अथर्षयः सगन्धर्वाः किंनरोरगराक्षसाः ।
देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ॥ ००८ ॥

पर्युपासन्त कौरव्य कदाचिद्वै पितामहम् ॥ ००८ ॥

नारदः पर्वतश्चैव विश्वावसुहहाहुहू ।
दिव्यतानेषु गायन्तः पर्युपासन्त तं प्रभुम् ॥ ००९ ॥

तत्र दिव्यानि पुष्पाणि प्रावहत्पवनस्तथा ।
आजह्रुरृतवश्चापि सुगन्धीनि पृथक्पृथक् ॥ ०१० ॥

तस्मिन्देवसमावाये सर्वभूतसमागमे ।

दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते ॥ ०११ ॥

इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च ॥ ०११ ॥

देवानां भगवन्कस्माल्लोकेशानां पितामह ।
उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुम् ॥ ०१२ ॥

किं तपो ब्रह्मचर्यं वा गोभिः कृतमिहेश्वर ।
देवानामुपरिष्टाद्यद्वसन्त्यरजसः सुखम् ॥ ०१३ ॥

ततः प्रोवाच तं ब्रह्मा शक्रं बलनिसूदनम् ।
अवज्ञातास्त्वया नित्यं गावो बलनिसूदन ॥ ०१४ ॥

तेन त्वमासां माहात्म्यं न वेत्थ शृणु तत्प्रभो ।
गवां प्रभावं परमं माहात्म्यं च सुरर्षभ ॥ ०१५ ॥

यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव ।
एताभिश्चाप्यृते यज्ञो न प्रवर्तेत्कथञ्चन ॥ ०१६ ॥

धारयन्ति प्रजाश्चैव पयसा हविषा तथा ।
एतासां तनयाश्चापि कृषियोगमुपासते ॥ ०१७ ॥

जनयन्ति च धान्यानि बीजानि विविधानि च ।
ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः ॥ ०१८ ॥

पयो दधि घृतं चैव पुण्याश्चैताः सुराधिप ।
वहन्ति विविधान्भारान्क्षुत्तृष्णापरिपीडिताः ॥ ०१९ ॥

मुनींश्च धारयन्तीह प्रजाश्चैवापि कर्मणा ।
वासवाकूटवाहिन्यः कर्मणा सुकृतेन च ॥ ०२० ॥

उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि ॥ ०२० ॥

एतत्ते कारणं शक्र निवासकृतमद्य वै ।
गवां देवोपरिष्टाद्धि समाख्यातं शतक्रतो ॥ ०२१ ॥

एता हि वरदत्ताश्च वरदाश्चैव वासव ।
सौरभ्यः पुण्यकर्मिण्यः पावनाः शुभलक्षणाः ॥ ०२२ ॥

यदर्थं गा गताश्चैव सौरभ्यः सुरसत्तम ।
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन ॥ ०२३ ॥

पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु ।
त्री.ण्ल्लोकाननुशासत्सु विष्णौ गर्भत्वमागते ॥ ०२४ ॥

अदित्यास्तप्यमानायास्तपो घोरं सुदुश्चरम् ।
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥ ०२५ ॥

तां तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः ।
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः ॥ ०२६ ॥

अतप्यत तपो घोरं हृष्टा धर्मपरायणा ।
कैलासशिखरे रम्ये देवगन्धर्वसेविते ॥ ०२७ ॥

व्यतिष्ठदेकपादेन परमं योगमास्थिता ।
दश वर्षसहस्राणि दश वर्षशतानि च ॥ ०२८ ॥

संतप्तास्तपसा तस्या देवाः सर्षिमहोरगाः ।
तत्र गत्वा मया सार्धं पर्युपासन्त तां शुभाम् ॥ ०२९ ॥

अथाहमब्रुवं तत्र देवीं तां तपसान्विताम् ।
किमर्थं तप्यते देवि तपो घोरमनिन्दिते ॥ ०३० ॥

प्रीतस्तेऽहं महाभागे तपसानेन शोभने ।
वरयस्व वरं देवि दातास्मीति पुरंदर ॥ ०३१ ॥

सुरभ्युवाच ॥

वरेण भगवन्मह्यं कृतं लोकपितामह ।
एष एव वरो मेऽद्य यत्प्रीतोऽसि ममानघ ॥ ०३२ ॥

ब्रह्मोवाच ॥

तामेवं ब्रुवतीं देवीं सुरभीं त्रिदशेश्वर ।
प्रत्यब्रुवं यद्देवेन्द्र तन्निबोध शचीपते ॥ ०३३ ॥

अलोभकाम्यया देवि तपसा च शुभेन ते ।
प्रसन्नोऽहं वरं तस्मादमरत्वं ददानि ते ॥ ०३४ ॥

त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि ।
मत्प्रसादाच्च विख्यातो गोलोकः स भविष्यति ॥ ०३५ ॥

मानुषेषु च कुर्वाणाः प्रजाः कर्म सुतास्तव ।
निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ॥ ०३६ ॥

मनसा चिन्तिता भोगास्त्वया वै दिव्यमानुषाः ।
यच्च स्वर्गसुखं देवि तत्ते संपत्स्यते शुभे ॥ ०३७ ॥

तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः ।
न तत्र क्रमते मृत्युर्न जरा न च पावकः ॥ ०३८ ॥

न दैन्यं नाशुभं किञ्चिद्विद्यते तत्र वासव ॥ ०३८ ॥

तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च ।
विमानानि च युक्तानि कामगानि च वासव ॥ ०३९ ॥

व्रतैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात् ।
तपसा महता चैव सुकृतेन च कर्मणा ॥ ०४० ॥

शक्यः समासादयितुं गोलोकः पुष्करेक्षण ॥ ०४० ॥

एतत्ते सर्वमाख्यातं मया शक्रानुपृच्छते ।
न ते परिभवः कार्यो गवामरिनिसूदन ॥ ०४१ ॥

भीष्म उवाच ॥

एतच्छ्रुत्वा सहस्राक्षः पूजयामास नित्यदा ।
गाश्चक्रे बहुमानं च तासु नित्यं युधिष्ठिर ॥ ०४२ ॥

एतत्ते सर्वमाख्यातं पावनं च महाद्युते ।
पवित्रं परमं चापि गवां माहात्म्यमुत्तमम् ॥ ०४३ ॥

कीर्तितं पुरुषव्याघ्र सर्वपापविनाशनम् ॥ ०४३ ॥

य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः ।
हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह ॥ ०४४ ॥

सार्वकामिकमक्षय्यं पितृंस्तस्योपतिष्ठति ॥ ०४४ ॥

गोषु भक्तश्च लभते यद्यदिच्छति मानवः ।
स्त्रियोऽपि भक्ता या गोषु ताश्च कामानवाप्नुयुः ॥ ०४५ ॥

पुत्रार्थी लभते पुत्रं कन्या पतिमवाप्नुयात् ।
धनार्थी लभते वित्तं धर्मार्थी धर्ममाप्नुयात् ॥ ०४६ ॥

विद्यार्थी प्राप्नुयाद्विद्यां सुखार्थी प्राप्नुयात्सुखम् ।
न किञ्चिद्दुर्लभं चैव गवां भक्तस्य भारत ॥ ०४७ ॥

---

# सुवर्णोत्पत्तिः

## अध्याय ०८३

युधिष्ठिर उवाच ॥

उक्तं पितामहेनेदं गवां दानमनुत्तमम् ।
विशेषेण नरेन्द्राणामिति धर्ममवेक्षताम् ॥ ००१ ॥

राज्यं हि सततं दुःखमाश्रमाश्च सुदुर्विदाः ।
परिवारेण वै दुःखं दुर्धरं चाकृतात्मभिः ॥ ००२ ॥

भूयिष्ठं च नरेन्द्राणां विद्यते न शुभा गतिः ॥ ००२ ॥

पूयन्ते तेऽत्र नियतं प्रयच्छन्तो वसुंधराम् ।
पूर्वं च कथिता धर्मास्त्वया मे कुरुनन्दन ॥ ००३ ॥

एवमेव गवामुक्तं प्रदानं ते नृगेण ह ।
ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितम् ॥ ००४ ॥

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टं भूमिर्गावोऽथ काञ्चनम् ॥ ००५ ॥

तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
एतदिच्छाम्यहं श्रोतुं पितामह यथातथम् ॥ ००६ ॥

किं सुवर्णं कथं जातं कस्मिन्काले किमात्मकम् ।
किं दानं किं फलं चैव कस्माच्च परमुच्यते ॥ ००७ ॥

कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः ।
कस्माच्च दक्षिणार्थं तद्यज्ञकर्मसु शस्यते ॥ ००८ ॥

कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनम् ।
परमं दक्षिणार्थे च तद्ब्रवीहि पितामह ॥ ००९ ॥

भीष्म उवाच ॥

शृणु राजन्नवहितो बहुकारणविस्तरम् ।
जातरूपसमुत्पत्तिमनुभूतं च यन्मया ॥ ०१० ॥

पिता मम महातेजाः शंतनुर्निधनं गतः ।
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमम् ॥ ०११ ॥

तत्रागम्य पितुः पुत्र श्राद्धकर्म समारभम् ।
माता मे जाह्नवी चैव साहाय्यमकरोत्तदा ॥ ०१२ ॥

ततोऽग्रतस्तपःसिद्धानुपवेश्य बहूनृषीन् ।
तोयप्रदानात्प्रभृति कार्याण्यहमथारभम् ॥ ०१३ ॥

तत्समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः ।
दातुं निर्वपणं सम्यग्यथावदहमारभम् ॥ ०१४ ॥

ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः ।
प्रलम्बाभरणो बाहुरुदतिष्ठद्विशां पते ॥ ०१५ ॥

तमुत्थितमहं दृष्ट्वा परं विस्मयमागमम् ।
प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ॥ ०१६ ॥

ततो मे पुनरेवासीत्सञ्ज्ञा सञ्चिन्त्य शास्त्रतः ।
नायं वेदेषु विहितो विधिर्हस्त इति प्रभो ॥ ०१७ ॥

पिण्डो देयो नरेणेह ततो मतिरभून्मम ॥ ०१७ ॥

साक्षान्नेह मनुष्यस्य पितरोऽन्तर्हिताः क्वचित् ।
गृह्णन्ति विहितं त्वेवं पिण्डो देयः कुशेष्विति ॥ ०१८ ॥

ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनम् ।
शास्त्रप्रमाणात्सूक्ष्मं तु विधिं पार्थिव संस्मरन् ॥ ०१९ ॥

ततो दर्भेषु तत्सर्वमददं भरतर्षभ ।
शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ ॥ ०२० ॥

ततः सोऽन्तर्हितो बाहुः पितुर्मम नराधिप ।
ततो मां दर्शयामासुः स्वप्नान्ते पितरस्तदा ॥ ०२१ ॥

प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ ।
विज्ञानेन तवानेन यन्न मुह्यसि धर्मतः ॥ ०२२ ॥

त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव ।
आत्मा धर्मः श्रुतं वेदाः पितरश्च महर्षिभिः ॥ ०२३ ॥

साक्षात्पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ।
प्रमाणमुपनीता वै स्थितिश्च न विचालिता ॥ ०२४ ॥

तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ ।

किं तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ॥ ०२५ ॥

एवं वयं च धर्मश्च सर्वे चास्मत्पितामहाः ।
पाविता वै भविष्यन्ति पावनं परमं हि तत् ॥ ०२६ ॥

दश पूर्वान्दश परांस्तथा संतारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति एवं मे पितरोऽब्रुवन् ॥ ०२७ ॥

ततोऽहं विस्मितो राजन्प्रतिबुद्धो विशां पते ।
सुवर्णदानेऽकरवं मतिं भरतसत्तम ॥ ०२८ ॥

इतिहासमिमं चापि शृणु राजन्पुरातनम् ।
जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च ॥ ०२९ ॥

जामदग्न्येन रामेण तीव्ररोषान्वितेन वै ।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ ०३० ॥

ततो जित्वा महीं कृत्स्नां रामो राजीवलोचनः ।
आजहार क्रतुं वीरो ब्रह्मक्षत्रेण पूजितम् ॥ ०३१ ॥

वाजिमेधं महाराज सर्वकामसमन्वितम् ।
पावनं सर्वभूतानां तेजोद्युतिविवर्धनम् ॥ ०३२ ॥

विपाप्मापि स तेजस्वी तेन क्रतुफलेन वै ।
नैवात्मनोऽथ लघुतां जामदग्न्योऽभ्यगच्छत ॥ ०३३ ॥

स तु क्रतुवरेणेष्ट्वा महात्मा दक्षिणावता ।
पप्रच्छागमसंपन्नानृषीन्देवांश्च भार्गवः ॥ ०३४ ॥

पावनं यत्परं नृणामुग्रे कर्मणि वर्तताम् ।
तदुच्यतां महाभागा इति जातघृणोऽब्रवीत् ॥ ०३५ ॥

वसिष्ठ उवाच ॥

देवतास्ते प्रयच्छन्ति सुवर्णं ये ददत्युत ।
अग्निर्हि देवताः सर्वाः सुवर्णं च तदात्मकम् ॥ ०३६ ॥

तस्मात्सुवर्णं ददता दत्ताः सर्वाश्च देवताः ।
भवन्ति पुरुषव्याघ्र न ह्यतः परमं विदुः ॥ ०३७ ॥

भूय एव च माहात्म्यं सुवर्णस्य निबोध मे ।
गदतो मम विप्रर्षे सर्वशस्त्रभृतां वर ॥ ०३८ ॥

मया श्रुतमिदं पूर्वं पुराणे भृगुनन्दन ।
प्रजापतेः कथयतो मनोः स्वायंभुवस्य वै ॥ ०३९ ॥

शूलपाणेर्भगवतो रुद्रस्य च महात्मनः ।
गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ॥ ०४० ॥

देव्या विवाहे निर्वृत्ते रुद्राण्या भृगुनन्दन ।
समागमे भगवतो देव्या सह महात्मनः ॥ ०४१ ॥

ततः सर्वे समुद्विग्ना भगवन्तमुपागमन् ॥ ०४१ ॥

ते महादेवमासीनं देवीं च वरदामुमाम् ।
प्रसाद्य शिरसा सर्वे रुद्रमूचुर्भृगूद्वह ॥ ०४२ ॥

अयं समागमो देव देव्या सह तवानघ ।
तपस्विनस्तपस्विन्या तेजस्विन्यातितेजसः ॥ ०४३ ॥

अमोघतेजास्त्वं देव देवी चेयमुमा तथा ॥ ०४३ ॥

अपत्यं युवयोर्देव बलवद्भविता प्रभो ।
तन्नूनं त्रिषु लोकेषु न किञ्चिच्छेषयिष्यति ॥ ०४४ ॥

तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन ।
वरं प्रयच्छ लोकेश त्रैलोक्यहितकाम्यया ॥ ०४५ ॥

अपत्यार्थं निगृह्णीष्व तेजो ज्वलितमुत्तमम् ॥ ०४५ ॥

इति तेषां कथयतां भगवान्गोवृषध्वजः ।
एवमस्त्विति देवांस्तान्विप्रर्षे प्रत्यभाषत ॥ ०४६ ॥

इत्युक्त्वा चोर्ध्वमनयत्तद्रेतो वृषवाहनः ।
ऊर्ध्वरेताः समभवत्ततःप्रभृति चापि सः ॥ ०४७ ॥

रुद्राणी तु ततः क्रुद्धा प्रजोच्छेदे तथा कृते ।
देवानथाब्रवीत्तत्र स्त्रीभावात्परुषं वचः ॥ ०४८ ॥

यस्मादपत्यकामो वै भर्ता मे विनिवर्तितः ।
तस्मात्सर्वे सुरा यूयमनपत्या भविष्यथ ॥ ०४९ ॥

प्रजोच्छेदो मम कृतो यस्माद्युष्माभिरद्य वै ।
तस्मात्प्रजा वः खगमाः सर्वेषां न भविष्यति ॥ ०५० ॥

पावकस्तु न तत्रासीच्छापकाले भृगूद्वह ।
देवा देव्यास्तथा शापादनपत्यास्तदाभवन् ॥ ०५१ ॥

रुद्रस्तु तेजोऽप्रतिमं धारयामास तत्तदा ।
प्रस्कन्नं तु ततस्तस्मात्किञ्चित्तत्रापतद्भुवि ॥ ०५२ ॥

तत्पपात तदा चाग्नौ ववृधे चाद्भुतोपमम् ।
तेजस्तेजसि संपृक्तमेकयोनित्वमागतम् ॥ ०५३ ॥

एतस्मिन्नेव काले तु देवाः शक्रपुरोगमाः ।
असुरस्तारको नाम तेन संतापिता भृशम् ॥ ०५४ ॥

आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि ।
साध्याश्च सर्वे संत्रस्ता दैतेयस्य पराक्रमात् ॥ ०५५ ॥

स्थानानि देवतानां हि विमानानि पुराणि च ।
ऋषीणामाश्रमाश्चैव बभूवुरसुरैर्हृताः ॥ ०५६ ॥

ते दीनमनसः सर्वे देवाश्च ऋषयश्च ह ।
प्रजग्मुः शरणं देवं ब्रह्माणमजरं प्रभुम् ॥ ०५७ ॥

---

# कार्त्तिकेयोत्पत्तिः

## अध्याय ०८४

देवा ऊचुः ॥

असुरस्तारको नाम त्वया दत्तवरः प्रभो ।
सुरानृषींश्च क्लिश्नाति वधस्तस्य विधीयताम् ॥ ००१ ॥

तस्माद्भयं समुत्पन्नमस्माकं वै पितामह ।
परित्रायस्व नो देव न ह्यन्या गतिरस्ति नः ॥ ००२ ॥

ब्रह्मोवाच ॥

समोऽहं सर्वभूतानामधर्मं नेह रोचये ।
हन्यतां तारकः क्षिप्रं सुरर्षिगणबाधकः ॥ ००३ ॥

वेदा धर्माश्च नोत्सादं गच्छेयुः सुरसत्तमाः ।
विहितं पूर्वमेवात्र मया वै व्येतु वो ज्वरः ॥ ००४ ॥

देवा ऊचुः ॥

वरदानाद्भगवतो दैतेयो बलगर्वितः ।
देवैर्न शक्यते हन्तुं स कथं प्रशमं व्रजेत् ॥ ००५ ॥

स हि नैव स्म देवानां नासुराणां न रक्षसाम् ।
वध्यः स्यामिति जग्राह वरं त्वत्तः पितामह ॥ ००६ ॥

देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुरा कृते ।
न भविष्यति वोऽपत्यमिति सर्वजगत्पते ॥ ००७ ॥

ब्रह्मोवाच ॥

हुताशनो न तत्रासीच्छापकाले सुरोत्तमाः ।
स उत्पादयितापत्यं वधार्थं त्रिदशद्विषाम् ॥ ००८ ॥

तद्वै सर्वानतिक्रम्य देवदानवराक्षसान् ।
मानुषानथ गन्धर्वान्नागानथ च पक्षिणः ॥ ००९ ॥

अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति ।
यतो वो भयमुत्पन्नं ये चान्ये सुरशत्रवः ॥ ०१० ॥

सनातनो हि सङ्कल्पः काम इत्यभिधीयते ।
रुद्रस्य तेजः प्रस्कन्नमग्नौ निपतितं च तत् ॥ ०११ ॥

तत्तेजोऽग्निर्महद्भूतं द्वितीयमिव पावकम् ।
वधार्थं देवशत्रूणां गङ्गायां जनयिष्यति ॥ ०१२ ॥

स तु नावाप तं शापं नष्टः स हुतभुक्तदा ।
तस्माद्वो भयहृद्देवाः समुत्पत्स्यति पावकिः ॥ ०१३ ॥

अन्विष्यतां वै ज्वलनस्तथा चाद्य नियुज्यताम् ।
तारकस्य वधोपायः कथितो वै मयानघाः ॥ ०१४ ॥

न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै ।
बलान्यतिबलं प्राप्य नबलानि भवन्ति वै ॥ ०१५ ॥

हन्यादवध्यान्वरदानपि चैव तपस्विनः ।
सङ्कल्पाभिरुचिः कामः सनातनतमोऽनलः ॥ ०१६ ॥

जगत्पतिरनिर्देश्यः सर्वगः सर्वभावनः ।
हृच्छयः सर्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥ ०१७ ॥

अन्विष्यतां स तु क्षिप्रं तेजोराशिर्हुताशनः ।
स वो मनोगतं कामं देवः संपादयिष्यति ॥ ०१८ ॥

एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः ।
जग्मुः संसिद्धसङ्कल्पाः पर्येषन्तो विभावसुम् ॥ ०१९ ॥

ततस्त्रैलोक्यमृषयो व्यचिन्वन्त सुरैः सह ।
काङ्क्षन्तो दर्शनं वह्नेः सर्वे तद्गतमानसाः ॥ ०२० ॥

परेण तपसा युक्ताः श्रीमन्तो लोकविश्रुताः ।
लोकानन्वचरन्सिद्धाः सर्व एव भृगूद्वह ॥ ०२१ ॥

नष्टमात्मनि संलीनं नाधिजग्मुर्हुताशनम् ॥ ०२१ ॥

ततः सञ्जातसंत्रासानग्नेर्दर्शनलालसान् ।
जलेचरः क्लान्तमनास्तेजसाग्नेः प्रदीपितः ॥ ०२२ ॥

उवाच देवान्मण्डूको रसातलतलोत्थितः ॥ ०२२ ॥

रसातलतले देवा वसत्यग्निरिति प्रभो ।
संतापादिह संप्राप्तः पावकप्रभवादहम् ॥ ०२३ ॥

स संसुप्तो जले देवा भगवान्हव्यवाहनः ।
अपः संसृज्य तेजोभिस्तेन संतापिता वयम् ॥ ०२४ ॥

तस्य दर्शनमिष्टं वो यदि देवा विभावसोः ।
तत्रैनमभिगच्छध्वं कार्यं वो यदि वह्निना ॥ ०२५ ॥

गम्यतां साधयिष्यामो वयं ह्यग्निभयात्सुराः ।
एतावदुक्त्वा मण्डूकस्त्वरितो जलमाविशत् ॥ ०२६ ॥

हुताशनस्तु बुबुधे मण्डूकस्याथ पैशुनम् ।
शशाप स तमासाद्य न रसान्वेत्स्यसीति वै ॥ ०२७ ॥

तं स संयुज्य शापेन मण्डूकं पावको ययौ ।
अन्यत्र वासाय विभुर्न च देवानदर्शयत् ॥ ०२८ ॥

देवास्त्वनुग्रहं चक्रुर्मण्डूकानां भृगूद्वह ।
यत्तच्छृणु महाबाहो गदतो मम सर्वशः ॥ ०२९ ॥

देवा ऊचुः ॥

अग्निशापादजिह्वापि रसज्ञानबहिष्कृताः ।
सरस्वतीं बहुविधां यूयमुच्चारयिष्यथ ॥ ०३० ॥

बिलवासगतांश्चैव निरादानानचेतसः ।
गतासूनपि वः शुष्कान्भूमिः संधारयिष्यति ॥ ०३१ ॥

तमोगतायामपि च निशायां विचरिष्यथ ॥ ०३१ ॥

इत्युक्त्वा तांस्ततो देवाः पुनरेव महीमिमाम् ।
परीयुर्ज्वलनस्यार्थे न चाविन्दन्हुताशनम् ॥ ०३२ ॥

अथ तान्द्विरदः कश्चित्सुरेन्द्रद्विरदोपमः ।
अश्वत्थस्थोऽग्निरित्येवं प्राह देवान्भृगूद्वह ॥ ०३३ ॥

शशाप ज्वलनः सर्वान्द्विरदान्क्रोधमूर्छितः ।
प्रतीपा भवतां जिह्वा भवित्रीति भृगूद्वह ॥ ०३४ ॥

इत्युक्त्वा निःसृतोऽश्वत्थादग्निर्वारणसूचितः ।
प्रविवेश शमीगर्भमथ वह्निः सुषुप्सया ॥ ०३५ ॥

अनुग्रहं तु नागानां यं चक्रुः शृणु तं प्रभो ।
देवा भृगुकुलश्रेष्ठ प्रीताः सत्यपराक्रमाः ॥ ०३६ ॥

देवा ऊचुः ॥

प्रतीपया जिह्वयापि सर्वाहारान्करिष्यथ ।
वाचं चोच्चारयिष्यध्वमुच्चैरव्यञ्जिताक्षरम् ॥ ०३७ ॥

इत्युक्त्वा पुनरेवाग्निमनुसस्रुर्दिवौकसः ॥ ०३७ ॥

अश्वत्थान्निःसृतश्चाग्निः शमीगर्भगतस्तदा ।
शुकेन ख्यापितो विप्र तं देवाः समुपाद्रवन् ॥ ०३८ ॥

शशाप शुकमग्निस्तु वाग्विहीनो भविष्यसि ।
जिह्वां चावर्तयामास तस्यापि हुतभुक्तदा ॥ ०३९ ॥

दृष्ट्वा तु ज्वलनं देवाः शुकमूचुर्दयान्विताः ।
भविता न त्वमत्यन्तं शकुने नष्टवागिति ॥ ०४० ॥

आवृत्तजिह्वस्य सतो वाक्यं कान्तं भविष्यति ।
बालस्येव प्रवृद्धस्य कलमव्यक्तमद्भुतम् ॥ ०४१ ॥

इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः ।
तदेवायतनं चक्रुः पुण्यं सर्वक्रियास्वपि ॥ ०४२ ॥

ततःप्रभृति चाप्यग्निः शमीगर्भेषु दृश्यते ।
उत्पादने तथोपायमनुजग्मुश्च मानवाः ॥ ०४३ ॥

आपो रसातले यास्तु संसृष्टाश्चित्रभानुना ।
ताः पर्वतप्रस्रवणैरूष्मां मुञ्चन्ति भार्गव ॥ ०४४ ॥

पावकेनाधिशयता संतप्तास्तस्य तेजसा ॥ ०४४ ॥

ततोऽग्निर्देवता दृष्ट्वा बभूव व्यथितस्तदा ।
किमागमनमित्येवं तानपृच्छत पावकः ॥ ०४५ ॥

तमूचुर्विबुधाः सर्वे ते चैव परमर्षयः ।
त्वां नियोक्ष्यामहे कार्ये तद्भवान्कर्तुमर्हति ॥ ०४६ ॥

कृते च तस्मिन्भविता तवापि सुमहान्गुणः ॥ ०४६ ॥

अग्निरुवाच ॥

ब्रूत यद्भवतां कार्यं सर्वं कर्तास्मि तत्सुराः ।

भवतां हि नियोज्योऽहं मा वोऽत्रास्तु विचारणा ॥ ०४७ ॥

देवा ऊचुः ॥

असुरस्तारको नाम ब्रह्मणो वरदर्पितः ।
अस्मान्प्रबाधते वीर्याद्वधस्तस्य विधीयताम् ॥ ०४८ ॥

इमान्देवगणांस्तात प्रजापतिगणांस्तथा ।
ऋषींश्चापि महाभागान्परित्रायस्व पावक ॥ ०४९ ॥

अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो ।
यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन ॥ ०५० ॥

शप्तानां नो महादेव्या नान्यदस्ति परायणम् ।
अन्यत्र भवतो वीर्यं तस्मात्त्रायस्व नस्ततः ॥ ०५१ ॥

इत्युक्तः स तथेत्युक्त्वा भगवान्हव्यकव्यभुक् ।
जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति ॥ ०५२ ॥

तया चाप्यभवन्मिश्रो गर्भश्चास्याभवत्तदा ।
ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा ॥ ०५३ ॥

तेजसा तस्य गर्भस्य गङ्गा विह्वलचेतना ।
संतापमगमत्तीव्रं सा सोढुं न शशाक ह ॥ ०५४ ॥

आहिते ज्वलनेनाथ गर्भे तेजःसमन्विते ।
गङ्गायामसुरः कश्चिद्भैरवं नादमुत्सृजत् ॥ ०५५ ॥

अबुद्धापतितेनाथ नादेन विपुलेन सा ।
वित्रस्तोद्भ्रान्तनयना गङ्गा विप्लुतलोचना ॥ ०५६ ॥

विसञ्ज्ञा नाशकद्गर्भं संधारयितुमात्मना ॥ ०५६ ॥

सा तु तेजःपरीताङ्गी कम्पमाना च जाह्नवी ।
उवाच वचनं विप्र तदा गर्भबलोद्धता ॥ ०५७ ॥

न ते शक्तास्मि भगवंस्तेजसोऽस्य विधारणे ॥ ०५७ ॥

विमूढास्मि कृतानेन तथास्वास्थ्यं कृतं परम् ।
विह्वला चास्मि भगवंस्तेजो नष्टं च मेऽनघ ॥ ०५८ ॥

धारणे नास्य शक्ताहं गर्भस्य तपतां वर ।
उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात्कथञ्चन ॥ ०५९ ॥

न चेतसोऽस्ति संस्पर्शो मम देव विभावसो ।
आपदर्थे हि संबन्धः सुसूक्ष्मोऽपि महाद्युते ॥ ०६० ॥

यदत्र गुणसंपन्नमितरं वा हुताशन ।
त्वय्येव तदहं मन्ये धर्माधर्मौ च केवलौ ॥ ०६१ ॥

तामुवाच ततो वह्निर्धार्यतां धार्यतामयम् ।
गर्भो मत्तेजसा युक्तो महागुणफलोदयः ॥ ०६२ ॥

शक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं तथा ।
न हि ते किञ्चिदप्राप्यं मद्रेतोधारणादृते ॥ ०६३ ॥

सा वह्निना वार्यमाणा देवैश्चापि सरिद्वरा ।
समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदा ॥ ०६४ ॥

समर्था धारणे चापि रुद्रतेजःप्रधर्षिता ।
नाशकत्तं तदा गर्भं संधारयितुमोजसा ॥ ०६५ ॥

सा समुत्सृज्य तं दुःखाद्दीप्तवैश्वानरप्रभम् ।
दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह ॥ ०६६ ॥

पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः ॥ ०६६ ॥

कीदृग्वर्णोऽपि वा देवि कीदृग्रूपश्च दृश्यते ।
तेजसा केन वा युक्तः सर्वमेतद्ब्रवीहि मे ॥ ०६७ ॥

गङ्गोवाच ॥

जातरूपः स गर्भो वै तेजसा त्वमिवानल ।
सुवर्णो विमलो दीप्तः पर्वतं चावभासयत् ॥ ०६८ ॥

पद्मोत्पलविमिश्राणां ह्रदानामिव शीतलः ।
गन्धोऽस्य स कदम्बानां तुल्यो वै तपतां वर ॥ ०६९ ॥

तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः ।
यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु वा ॥ ०७० ॥

तत्सर्वं काञ्चनीभूतं समन्तात्प्रत्यदृश्यत ॥ ०७० ॥

पर्यधावत शैलांश्च नदीः प्रस्रवणानि च ।
व्यदीपयत्तेजसा च त्रैलोक्यं सचराचरम् ॥ ०७१ ॥

एवंरूपः स भगवान्पुत्रस्ते हव्यवाहन ।
सूर्यवैश्वानरसमः कान्त्या सोम इवापरः ॥ ०७२ ॥

एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत ॥ ०७२ ॥

पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम् ।
जगामेष्टं ततो देशं तदा भार्गवनन्दन ॥ ०७३ ॥

एतैः कर्मगुणैर्लोके नामाग्नेः परिगीयते ।
हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा ॥ ०७४ ॥

पृथिवी च तदा देवी ख्याता वसुमतीति वै ॥ ०७४ ॥

स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः ।
दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः ॥ ०७५ ॥

ददृशुः कृत्तिकास्तं तु बालार्कसदृशद्युतिम् ।
जातस्नेहाश्च तं बालं पुपुषुः स्तन्यविस्रवैः ॥ ०७६ ॥

ततः स कार्त्तिकेयत्वमवाप परमद्युतिः ।
स्कन्नत्वात्स्कन्दतां चापि गुहावासाद्गुहोऽभवत् ॥ ०७७ ॥

एवं सुवर्णमुत्पन्नमपत्यं जातवेदसः ।
तत्र जाम्बूनदं श्रेष्ठं देवानामपि भूषणम् ॥ ०७८ ॥

ततःप्रभृति चाप्येतज्जातरूपमुदाहृतम् ।
यत्सुवर्णं स भगवानग्निरीशः प्रजापतिः ॥ ०७९ ॥

पवित्राणां पवित्रं हि कनकं द्विजसत्तम ।
अग्नीषोमात्मकं चैव जातरूपमुदाहृतम् ॥ ०८० ॥

रत्नानामुत्तमं रत्नं भूषणानां तथोत्तमम् ।
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ॥ ०८१ ॥

# अध्याय ०८५

वसिष्ठ उवाच ॥

अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनम् ।
पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥ ००१ ॥

देवस्य महतस्तात वारुणीं बिभ्रतस्तनुम् ।
ऐश्वर्ये वारुणे राम रुद्रस्येशस्य वै प्रभो ॥ ००२ ॥

आजग्मुर्मुनयः सर्वे देवाश्चाग्निपुरोगमाः ।
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ॥ ००३ ॥

मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः ।
ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ॥ ००४ ॥

लक्षणानि स्वराः स्तोभा निरुक्तं स्वरभक्तयः ।
ओङ्कारश्चावसन्नेत्रे निग्रहप्रग्रहौ तथा ॥ ००५ ॥

वेदाश्च सोपनिषदो विद्या सावित्र्यथापि च ।
भूतं भव्यं भविष्यच्च दधार भगवाञ्शिवः ॥ ००६ ॥

जुह्वच्चात्मन्यथात्मानं स्वयमेव तदा प्रभो ॥ ००६ ॥

देवपत्न्यश्च कन्याश्च देवानां चैव मातरः ।
आजग्मुः सहितास्तत्र तदा भृगुकुलोद्वह ॥ ००७ ॥

यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः ।
स्वयंभुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ॥ ००८ ॥

तस्य शुक्रस्य निष्पन्दात्पांसून्सङ्गृह्य भूमितः ।

प्रास्यत्पूषा कराभ्यां वै तस्मिन्नेव हुताशने ॥ ००९ ॥

ततस्तस्मिन्संप्रवृत्ते सत्रे ज्वलितपावके ।
ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूव ह ॥ ०१० ॥

स्कन्नमात्रं च तच्छुक्रं स्रुवेण प्रतिगृह्य सः ।
आज्यवन्मन्त्रवच्चापि सोऽजुहोद्भृगुनन्दन ॥ ०११ ॥

ततः सञ्जनयामास भूतग्रामं स वीर्यवान् ।
ततस्तु तेजसस्तस्माज्जज्ञे लोकेषु तैजसम् ॥ ०१२ ॥

तमसस्तामसा भावा व्यापि सत्त्वं तथोभयम् ।
सगुणस्तेजसो नित्यं तमस्याकाशमेव च ॥ ०१३ ॥

सर्वभूतेष्वथ तथा सत्त्वं तेजस्तथा तमः ।
शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो ॥ ०१४ ॥

पुरुषा वपुषा युक्ता युक्ताः प्रसवजैर्गुणैः ।
भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराभवत् ॥ ०१५ ॥

अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् ।
सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद्भृगुः स्मृतः ॥ ०१६ ॥

मरीचिभ्यो मरीचिस्तु मारीचः कश्यपो ह्यभूत् ।
अङ्गारेभ्योऽङ्गिरास्तात वालखिल्याः शिलोच्चयात् ॥ ०१७ ॥

अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि ॥ ०१७ ॥

तथा भस्मव्यपोहेभ्यो ब्रह्मर्षिगणसंमिताः ।
वैखानसाः समुत्पन्नास्तपःश्रुतगुणेप्सवः ॥ ०१८ ॥

अश्रुतोऽस्य समुत्पन्नावश्विनौ रूपसंमतौ ॥ ०१८ ॥

शेषाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे ।
ऋषयो लोमकूपेभ्यः स्वेदाच्छन्दो मलात्मकम् ॥ ०१९ ॥

एतस्मात्कारणादाहुरग्निं सर्वास्तु देवताः ।
ऋषयः श्रुतसंपन्ना वेदप्रामाण्यदर्शनात् ॥ ०२० ॥

यानि दारूणि ते मासा निर्यासाः पक्षसञ्ज्ञिताः ।
अहोरात्रा मुहूर्तास्तु पित्तं ज्योतिश्च वारुणम् ॥ ०२१ ॥

रौद्रं लोहितमित्याहुर्लोहितात्कनकं स्मृतम् ।
तन्मैत्रमिति विज्ञेयं धूमाच्च वसवः स्मृताः ॥ ०२२ ॥

अर्चिषो याश्च ते रुद्रास्तथादित्या महाप्रभाः ।
उद्दिष्टास्ते तथाङ्गारा ये धिष्ण्येषु दिवि स्थिताः ॥ ०२३ ॥

आदिनाथश्च लोकस्य तत्परं ब्रह्म तद्ध्रुवम् ।
सर्वकामदमित्याहुस्तत्र हव्यमुदावहत् ॥ ०२४ ॥

ततोऽब्रवीन्महादेवो वरुणः परमात्मकः ।
मम सत्रमिदं दिव्यमहं गृहपतिस्त्विह ॥ ०२५ ॥

त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः ।
इति जानीत खगमा मम यज्ञफलं हि तत् ॥ ०२६ ॥

अग्निरुवाच ॥

मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च ।
ममैव तान्यपत्यानि वरुणो ह्यवशात्मकः ॥ ०२७ ॥

अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः ।
ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत् ॥ ०२८ ॥

अहं वक्ता च मन्त्रस्य होता शुक्रस्य चैव ह ।
यस्य बीजं फलं तस्य शुक्रं चेत्कारणं मतम् ॥ ०२९ ॥

ततोऽब्रुवन्देवगणाः पितामहमुपेत्य वै ।
कृताञ्जलिपुटाः सर्वे शिरोभिरभिवन्द्य च ॥ ०३० ॥

वयं च भगवन्सर्वे जगच्च सचराचरम् ।
तवैव प्रसवाः सर्वे तस्मादग्निर्विभावसुः ॥ ०३१ ॥

वरुणश्चेश्वरो देवो लभतां काममीप्सितम् ॥ ०३१ ॥

निसर्गाद्वरुणश्चापि ब्रह्मणो यादसां पतिः ।
जग्राह वै भृगुं पूर्वमपत्यं सूर्यवर्चसम् ॥ ०३२ ॥

ईश्वरोऽङ्गिरसं चाग्नेरपत्यार्थेऽभ्यकल्पयत् ।
पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित् ॥ ०३३ ॥

तदा स वारुणः ख्यातो भृगुः प्रसवकर्मकृत् ।
आग्नेयस्त्वङ्गिराः श्रीमान्कविर्ब्राह्मो महायशाः ॥ ०३४ ॥

भार्गवाङ्गिरसौ लोके लोकसंतानलक्षणौ ॥ ०३४ ॥

एते विप्रवराः सर्वे प्रजानां पतयस्त्रयः ।
सर्वं संतानमेतेषामिदमित्युपधारय ॥ ०३५ ॥

भृगोस्तु पुत्रास्तत्रासन्सप्त तुल्या भृगोर्गुणैः ।
च्यवनो वज्रशीर्षश्च शुचिरौर्वस्तथैव च ॥ ०३६ ॥

शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते ।
भार्गवा वारुणाः सर्वे येषां वंशे भवानपि ॥ ०३७ ॥

अष्टौ चाङ्गिरसः पुत्रा वारुणास्तेऽप्युदाहृताः ।
बृहस्पतिरुतथ्यश्च वयस्यः शान्तिरेव च ॥ ०३८ ॥

घोरो विरूपः संवर्तः सुधन्वा चाष्टमः स्मृतः ।
एतेऽष्टावग्निजाः सर्वे ज्ञाननिष्ठा निरामयाः ॥ ०३९ ॥

ब्राह्मणस्य कवेः पुत्रा वारुणास्तेऽप्युदाहृताः ।
अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः ॥ ०४० ॥

कविः काव्यश्च विष्णुश्च बुद्धिमानुशनास्तथा ।
भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्मवित् ॥ ०४१ ॥

अष्टौ कविसुता ह्येते सर्वमेभिर्जगत्ततम् ।
प्रजापतय एते हि प्रजानां यैरिमाः प्रजाः ॥ ०४२ ॥

एवमङ्गिरसश्चैव कवेश्च प्रसवान्वयैः ।
भृगोश्च भृगुशार्दूल वंशजैः सततं जगत् ॥ ०४३ ॥

वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः ।
कविं तात भृगुं चैव तस्मात्तौ वारुणौ स्मृतौ ॥ ०४४ ॥

जग्राहाङ्गिरसं देवः शिखी तस्माद्धुताशनः ।
तस्मादङ्गिरसो ज्ञेयाः सर्व एव तदन्वयाः ॥ ०४५ ॥

ब्रह्मा पितामहः पूर्वं देवताभिः प्रसादितः ।
इमे नः संतरिष्यन्ति प्रजाभिर्जगदीश्वराः ॥ ०४६ ॥

सर्वे प्रजानां पतयः सर्वे चातितपस्विनः ।

त्वत्प्रसादादिमं लोकं तारयिष्यन्ति शाश्वतम् ॥ ०४७ ॥

तथैव वंशकर्तारस्तव तेजोविवर्धनाः ।
भवेयुर्वेदविदुषः सर्वे वाक्पतयस्तथा ॥ ०४८ ॥

देवपक्षधराः सौम्याः प्राजापत्या महर्षयः ।
आप्नुवन्ति तपश्चैव ब्रह्मचर्यं परं तथा ॥ ०४९ ॥

सर्वे हि वयमेते च तवैव प्रसवः प्रभो ।
देवानां ब्राह्मणानां च त्वं हि कर्ता पितामह ॥ ०५० ॥

मरीचिमादितः कृत्वा सर्वे चैवाथ भार्गवाः ।
अपत्यानीति संप्रेक्ष्य क्षमयाम पितामह ॥ ०५१ ॥

ते त्वनेनैव रूपेण प्रजनिष्यन्ति वै प्रजाः ।
स्थापयिष्यन्ति चात्मानं युगादिनिधने तथा ॥ ०५२ ॥

एवमेतत्पुरा वृत्तं तस्य यज्ञे महात्मनः ।
देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुम् ॥ ०५३ ॥

अग्निर्ब्रह्मा पशुपतिः शर्वो रुद्रः प्रजापतिः ।
अग्नेरपत्यमेतद्वै सुवर्णमिति धारणा ॥ ०५४ ॥

अग्न्यभावे च कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
जामदग्न्य प्रमाणज्ञा वेदश्रुतिनिदर्शनात् ॥ ०५५ ॥

कुशस्तम्बे जुहोत्यग्निं सुवर्णं तत्र संस्थितम् ।
हुते प्रीतिकरीमृद्धिं भगवांस्तत्र मन्यते ॥ ०५६ ॥

तस्मादग्निपराः सर्वा देवता इति शुश्रुम ।
ब्रह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनम् ॥ ०५७ ॥

तस्माद्ये वै प्रयच्छन्ति सुवर्णं धर्मदर्शिनः ।
देवतास्ते प्रयच्छन्ति समस्ता इति नः श्रुतम्  ॥ ०५८  ॥

तस्य चातमसो लोका गच्छतः परमां गतिम् ।
स्वर्लोके राजराज्येन सोऽभिषिच्येत भार्गव  ॥ ०५९  ॥

आदित्योदयने प्राप्ते विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः  ॥ ०६०  ॥

ददात्युदितमात्रे यस्तस्य पाप्मा विधूयते ।
मध्याह्ने ददतो रुक्मं हन्ति पापमनागतम्  ॥ ०६१  ॥

ददाति पश्चिमां संध्यां यः सुवर्णं धृतव्रतः ।
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः  ॥ ०६२  ॥

सेन्द्रेषु चैव लोकेषु प्रतिष्ठां प्राप्नुते शुभाम् ।
इह लोके यशः प्राप्य शान्तपाप्मा प्रमोदते  ॥ ०६३  ॥

ततः संपद्यतेऽन्येषु लोकेष्वप्रतिमः सदा ।
अनावृतगतिश्चैव कामचारी भवत्युत  ॥ ०६४  ॥

न च क्षरति तेभ्यः स शश्वच्चैवाप्नुते महत् ।
सुवर्णमक्षयं दत्त्वा लोकानाप्नोति पुष्कलान्  ॥ ०६५  ॥

यस्तु सञ्जनयित्वाग्निमादित्योदयनं प्रति ।
दद्याद्वै व्रतमुद्दिश्य सर्वान्कामान्समश्नुते  ॥ ०६६  ॥

अग्निरित्येव तत्प्राहुः प्रदानं वै सुखावहम् ।
यथेष्टगुणसंपन्नं प्रवर्तकमिति स्मृतम्  ॥ ०६७  ॥

भीष्म उवाच ॥

इत्युक्तः स वसिष्ठेन जामदग्न्यः प्रतापवान् ।
ददौ सुवर्णं विप्रेभ्यो व्यमुच्यत च किल्बिषात् ॥ ०६८ ॥

एतत्ते सर्वमाख्यातं सुवर्णस्य महीपते ।
प्रदानस्य फलं चैव जन्म चाग्र्यमनुत्तमम् ॥ ०६९ ॥

तस्मात्त्वमपि विप्रेभ्यः प्रयच्छ कनकं बहु ।
ददत्सुवर्णं नृपते किल्बिषाद्विप्रमोक्ष्यसि ॥ ०७० ॥

---

# तारकवधः

## अध्याय ०८६

युधिष्ठिर उवाच ॥

उक्ताः पितामहेनेह सुवर्णस्य विधानतः ।
विस्तरेण प्रदानस्य ये गुणाः श्रुतिलक्षणाः ॥ ००१ ॥

यत्तु कारणमुत्पत्तेः सुवर्णस्येह कीर्तितम् ।
स कथं तारकः प्राप्तो निधनं तद्ब्रवीहि मे ॥ ००२ ॥

उक्तः स देवतानां हि अवध्य इति पार्थिव ।
न च तस्येह ते मृत्युर्विस्तरेण प्रकीर्तितः ॥ ००३ ॥

एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह ।

कार्त्स्न्येन तारकवधं परं कौतूहलं हि मे ॥ ००४ ॥

भीष्म उवाच ॥

विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा ।
कृत्तिकाश्चोदयामासुरपत्यभरणाय वै ॥ ००५ ॥

न देवतानां काचिद्धि समर्था जातवेदसः ।
एकापि शक्ता तं गर्भं संधारयितुमोजसा ॥ ००६ ॥

षण्णां तासां ततः प्रीतः पावको गर्भधारणात् ।
स्वेन तेजोविसर्गेण वीर्येण परमेण च ॥ ००७ ॥

तास्तु षट्कृत्तिका गर्भं पुपुषुर्जातवेदसः ।
षट्सु वर्त्मसु तेजोऽग्नेः सकलं निहितं प्रभो ॥ ००८ ॥

ततस्ता वर्धमानस्य कुमारस्य महात्मनः ।
तेजसाभिपरीताङ्गो न क्वचिच्छर्म लेभिरे ॥ ००९ ॥

ततस्तेजःपरीताङ्ग्यः सर्वाः काल उपस्थिते ।
समं गर्भं सुषुविरे कृत्तिकास्ता नरर्षभ ॥ ०१० ॥

ततस्तं षडधिष्ठानं गर्भमेकत्वमागतम् ।
पृथिवी प्रतिजग्राह कान्तीपुरसमीपतः ॥ ०११ ॥

स गर्भो दिव्यसंस्थानो दीप्तिमान्पावकप्रभः ।
दिव्यं शरवणं प्राप्य ववृधे प्रियदर्शनः ॥ ०१२ ॥

ददृशुः कृत्तिकास्तं तु बालं वह्निसमद्युतिम् ।
जातस्नेहाश्च सौहार्दात्पुपुषुः स्तन्यविस्रवैः ॥ ०१३ ॥

अभवत्कार्त्तिकेयः स त्रैलोक्ये सचराचरे ।
स्कन्नत्वात्स्कन्दतां चाप गुहावासाद्गुहोऽभवत् ॥ ०१४ ॥

ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिग्गीश्वराः ।
रुद्रो धाता च विष्णुश्च यज्ञः पूषार्यमा भगः ॥ ०१५ ॥

अंशो मित्रश्च साध्याश्च वसवो वासवोऽश्विनौ ।
आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः ॥ ०१६ ॥

पृथग्भूतानि चान्यानि यानि देवार्पणानि वै ।
आजग्मुस्तत्र तं द्रष्टुं कुमारं ज्वलनात्मजम् ॥ ०१७ ॥

ऋषयस्तुष्टुवुश्चैव गन्धर्वाश्च जगुस्तथा ॥ ०१७ ॥

षडाननं कुमारं तं द्विषडक्षं द्विजप्रियम् ।
पीनांसं द्वादशभुजं पावकादित्यवर्चसम् ॥ ०१८ ॥

शयानं शरगुल्मस्थं दृष्ट्वा देवाः सहर्षिभिः ।
लेभिरे परमं हर्षं मेनिरे चासुरं हतम् ॥ ०१९ ॥

ततो देवाः प्रियाण्यस्य सर्व एव समाचरन् ।
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह ॥ ०२० ॥

सुपर्णोऽस्य ददौ पत्रं मयूरं चित्रबर्हिणम् ।
राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ ॥ ०२१ ॥

कुक्कुटं चाग्निसङ्काशं प्रददौ वरुणः स्वयम् ।
चन्द्रमाः प्रददौ मेषमादित्यो रुचिरां प्रभाम् ॥ ०२२ ॥

गवां माता च गा देवी ददौ शतसहस्रशः ।
छागमग्निर्गुणोपेतमिला पुष्पफलं बहु ॥ ०२३ ॥

सुधन्वा शकटं चैव रथं चामितकूबरम् ।
वरुणो वारुणान्दिव्यान्भुजङ्गान्प्रददौ शुभान्  ॥ ०२४  ॥

सिंहान्सुरेन्द्रो व्याघ्रांश्च द्वीपिनोऽन्यांश्च दंष्ट्रिणः  ॥ ०२४  ॥

श्वापदांश्च बहून्घोरांश्छत्राणि विविधानि च ।
राक्षसासुरसंघाश्च येऽनुजग्मुस्तमीश्वरम्  ॥ ०२५  ॥

वर्धमानं तु तं दृष्ट्वा प्रार्थयामास तारकः ।
उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुम्  ॥ ०२६  ॥

सेनापत्येन तं देवाः पूजयित्वा गुहालयम् ।
शशंसुर्विप्रकारं तं तस्मै तारककारितम्  ॥ ०२७  ॥

स विवृद्धो महावीर्यो देवसेनापतिः प्रभुः ।
जघानामोघया शक्त्या दानवं तारकं गुहः  ॥ ०२८  ॥

तेन तस्मिन्कुमारेण क्रीडता निहतेऽसुरे ।
सुरेन्द्रः स्थापितो राज्ये देवानां पुनरीश्वरः  ॥ ०२९  ॥

स सेनापतिरेवाथ बभौ स्कन्दः प्रतापवान् ।
ईशो गोप्ता च देवानां प्रियकृच्छङ्करस्य च  ॥ ०३०  ॥

हिरण्यमूर्तिर्भगवानेष एव च पावकिः ।
सदा कुमारो देवानां सेनापत्यमवाप्तवान्  ॥ ०३१  ॥

तस्मात्सुवर्णं मङ्गल्यं रत्नमक्षय्यमुत्तमम् ।
सहजं कार्त्तिकेयस्य वह्नेस्तेजः परं मतम्  ॥ ०३२  ॥

एवं रामाय कौरव्य वसिष्ठोऽकथयत्पुरा ।

तस्मात्सुवर्णदानाय प्रयतस्व नराधिप ॥ ०३३ ॥

रामः सुवर्णं दत्त्वा हि विमुक्तः सर्वकिल्बिषैः ।
त्रिविष्टपे महत्स्थानमवापासुलभं नरैः ॥ ०३४ ॥

---

# श्राद्धकल्पः

## अध्याय ०८७

युधिष्ठिर उवाच ॥

चातुर्वर्ण्यस्य धर्मात्मन्धर्मः प्रोक्तस्त्वयानघ ।
तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव ॥ ००१ ॥

वैशंपायन उवाच ॥

युधिष्ठिरेणैवमुक्तो भीष्मः शांतनवस्तदा ।
इमं श्राद्धविधिं कृत्स्नं प्रवक्तुमुपचक्रमे ॥ ००२ ॥

भीष्म उवाच ॥

शृणुष्वावहितो राजञ्श्राद्धकल्पमिमं शुभम् ।
धन्यं यशस्यं पुत्रीयं पितृयज्ञं परंतप ॥ ००३ ॥

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
पिशाचकिंनराणां च पूज्या वै पितरः सदा ॥ ००४ ॥

पितृन्पूज्यादितः पश्चाद्देवान्संतर्पयन्ति वै ।
तस्मात्सर्वप्रयत्नेन पुरुषः पूजयेत्सदा ॥ ००५ ॥

अन्वाहार्यं महाराज पितृणां श्राद्धमुच्यते ।
तच्चामिषेण विधिना विधिः प्रथमकल्पितः ॥ ००६ ॥

सर्वेष्वहःसु प्रीयन्ते कृतैः श्राद्धैः पितामहाः ।
प्रवक्ष्यामि तु ते सर्वांस्तिथ्यां तिथ्यां गुणागुणान् ॥ ००७ ॥

येष्वहःसु कृतैः श्राद्धैर्यत्फलं प्राप्यतेऽनघ ।
तत्सर्वं कीर्तयिष्यामि यथावत्तन्निबोध मे ॥ ००८ ॥

पितृनर्च्य प्रतिपदि प्राप्नुयात्स्वगृहे स्त्रियः ।
अभिरूपप्रजायिन्यो दर्शनीया बहुप्रजाः ॥ ००९ ॥

स्त्रियो द्वितीयां जायन्ते तृतीयायां तु वन्दिनः ।
चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे ॥ ०१० ॥

पञ्चम्यां बहवः पुत्रा जायन्ते कुर्वतां नृप ।
कुर्वाणास्तु नराः षष्ठ्यां भवन्ति द्युतिभागिनः ॥ ०११ ॥

कृषिभागी भवेच्छ्राद्धं कुर्वाणः सप्तमीं नृप ।
अष्टम्यां तु प्रकुर्वाणो वाणिज्ये लाभमाप्नुयात् ॥ ०१२ ॥

नवम्यां कुर्वतः श्राद्धं भवत्येकशफं बहु ।
विवर्धन्ते तु दशमीं गावः श्राद्धानि कुर्वतः ॥ ०१३ ॥

कुप्यभागी भवेन्मर्त्यः कुर्वन्नेकादशीं नृप ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि ॥ ०१४ ॥

द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते ।
रजतं बहु चित्रं च सुवर्णं च मनोरमम् ॥ ०१५ ॥

ज्ञातीनां तु भवेच्छ्रेष्ठः कुर्वञ्श्राद्धं त्रयोदशीम् ।
अवश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे ॥ ०१६ ॥

युद्धभागी भवेन्मर्त्यः श्राद्धं कुर्वंश्चतुर्दशीम् ।
अमावास्यां तु निवपन्सर्वान्कामानवाप्नुयात् ॥ ०१७ ॥

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धकर्मणि तिथ्यः स्युः प्रशस्ता न तथेतराः ॥ ०१८ ॥

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥ ०१९ ॥

---

# अध्याय ०८८

युधिष्ठिर उवाच ॥

किं स्विद्दत्तं पितृभ्यो वै भवत्यक्षयमीश्वर ।
किं हविश्चिररात्राय किमानन्त्याय कल्पते ॥ ००१ ॥

भीष्म उवाच ॥

हवींषि श्राद्धकल्पे तु यानि श्राद्धविदो विदुः ।
तानि मे शृणु काम्यानि फलं चैषां युधिष्ठिर ॥ ००२ ॥

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैस्तथा ।
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ॥ ००३ ॥

वर्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् ।
सर्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः ॥ ००४ ॥

द्वौ मासौ तु भवेत्तृप्तिर्मत्स्यैः पितृगणस्य ह ।
त्रीन्मासानाविकेनाहुश्चातुर्मास्यं शशेन तु ॥ ००५ ॥

आजेन मासान्प्रीयन्ते पञ्चैव पितरो नृप ।
वाराहेण तु षण्मासान्सप्त वै शाकुनेन तु ॥ ००६ ॥

मासानष्टौ पार्षतेन रौरवेण नवैव तु ।
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ॥ ००७ ॥

मासानेकादश प्रीतिः पितृणां माहिषेण तु ।
गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ॥ ००८ ॥

यथा गव्यं तथा युक्तं पायसं सर्पिषा सह ।
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ००९ ॥

आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
कालशाकं च लौहं चाप्यानन्त्यं छाग उच्यते ॥ ०१० ॥

गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर ।
सनत्कुमारो भगवान्पुरा मय्यभ्यभाषत ॥ ०११ ॥

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणायने ॥ ०१२ ॥

आजेन वापि लौहेन मघास्वेव यतव्रतः ।

हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम्  ॥ ०१३  ॥

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यत्रासौ प्रथितो लोकेष्वक्षय्यकरणो वटः  ॥ ०१४  ॥

आपो मूलं फलं मांसमन्नं वापि पितृक्षये ।
यत्किञ्चिन्मधुसंमिश्रं तदानन्त्याय कल्पते  ॥ ०१५  ॥

---

# अध्याय ०८९

भीष्म उवाच  ॥

यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे ।
तानि मे शृणु काम्यानि नक्षत्रेषु पृथक्पृथक्  ॥ ००१  ॥

श्राद्धं यः कृत्तिकायोगे कुर्वीत सततं नरः ।
अग्नीनाधाय सापत्यो यजेत विगतज्वरः  ॥ ००२  ॥

अपत्यकामो रोहिण्यामोजस्कामो मृगोत्तमे ।
क्रूरकर्मा ददच्छ्राद्धमार्द्रायां मानवो भवेत्  ॥ ००३  ॥

कृषिभागी भवेन्मर्त्यः कुर्वञ्श्राद्धं पुनर्वसौ ।
पुष्टिकामोऽथ पुष्येण श्राद्धमीहेत मानवः  ॥ ००४  ॥

आश्लेषायां ददच्छ्राद्धं वीरान्पुत्रान्प्रजायते ।
ज्ञातीनां तु भवेच्छ्रेष्ठो मघासु श्राद्धमावपन्  ॥ ००५  ॥

फल्गुनीषु ददच्छ्राद्धं सुभगः श्राद्धदो भवेत् ।

अपत्यभागुत्तरासु हस्तेन फलभाग्भवेत् ॥ ००६ ॥

चित्रायां तु ददच्छ्राद्धं लभेद्रूपवतः सुतान् ।
स्वातियोगे पितॄनर्च्य वाणिज्यमुपजीवति ॥ ००७ ॥

बहुपुत्रो विशाखासु पित्र्यमीहन्भवेन्नरः ।
अनुराधासु कुर्वाणो राजचक्रं प्रवर्तयेत् ॥ ००८ ॥

आदिपत्यं व्रजेन्मर्त्यो ज्येष्ठायामपवर्जयन् ।
नरः कुरुकुलश्रेष्ठ श्रद्धादमपुरःसरः ॥ ००९ ॥

मूले त्वारोग्यमर्च्छेत यशोऽषाढास्वनुत्तमम् ।
उत्तरासु त्वषाढासु वीतशोकश्चरेन्महीम् ॥ ०१० ॥

श्राद्धं त्वभिजिता कुर्वन्विद्यां श्रेष्ठामवाप्नुयात् ।
श्रवणे तु ददच्छ्राद्धं प्रेत्य गच्छेत्परां गतिम् ॥ ०११ ॥

राज्यभागी धनिष्ठायां प्राप्नुयान्नापदं नरः ।
नक्षत्रे वारुणे कुर्वन्भिषक्सिद्धिमवाप्नुयात् ॥ ०१२ ॥

पूर्वप्रोष्ठपदाः कुर्वन्बहु विन्देदजाविकम् ।
उत्तरास्वथ कुर्वाणो विन्दते गाः सहस्रशः ॥ ०१३ ॥

बहुरूप्यकृतं वित्तं विन्दते रेवतीं श्रितः ।
अश्वांश्चाश्वयुजे वेत्ति भरणीष्वायुरुत्तमम् ॥ ०१४ ॥

इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाकरोत् ।
अक्लेशेनाजयच्चापि महीं सोऽनुशशास ह ॥ ०१५ ॥

# अध्याय ०९०

युधिष्ठिर उवाच ॥

कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह ।
द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि ॥ ००१ ॥

भीष्म उवाच ॥

ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित् ।
दैवे कर्मणि पित्र्ये तु न्याय्यमाहुः परीक्षणम् ॥ ००२ ॥

देवताः पूजयन्तीह दैवेनैवेह तेजसा ।
उपेत्य तस्माद्देवेभ्यः सर्वेभ्यो दापयेन्नरः ॥ ००३ ॥

श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान्बुधः ।
कुलशीलवयोरूपैर्विद्ययाभिजनेन च ॥ ००४ ॥

एषामन्ये पङ्क्तिदूषास्तथान्ये पङ्क्तिपावनाः ।
अपाङ्क्तेयास्तु ये राजन्कीर्तयिष्यामि ताञ्शृणु ॥ ००५ ॥

कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः ।
ग्रामप्रेष्यो वार्धुषिको गायनः सर्वविक्रयी ॥ ००६ ॥

अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ॥ ००७ ॥

पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ॥ ००८ ॥

पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ।

अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ॥ ००९ ॥

श्वभिर्यश्च परिक्रामेद्यः शुना दष्ट एव च ।
परिवित्तिश्च यश्च स्याद्दुश्चर्मा गुरुतल्पगः ॥ ०१० ॥

कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ॥ ०१० ॥

एतानिह विजानीयादपाङ्क्तेयान्द्विजाधमान् ।
शूद्राणामुपदेशं च ये कुर्वन्त्यल्पचेतसः ॥ ०११ ॥

षष्टिं काणः शतं षण्ढः श्वित्री यावत्प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप ॥ ०१२ ॥

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥ ०१३ ॥

असूयता च यद्दत्तं यच्च श्रद्धाविवर्जितम् ।
सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥ ०१४ ॥

श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन्कथञ्चन ।
तस्मात्परिवृते दद्यात्तिलांश्चान्ववकीरयेत् ॥ ०१५ ॥

तिलादाने च क्रव्यादा ये च क्रोधवशा गणाः ।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ॥ ०१६ ॥

यावद्ध्यपङ्क्त्यः पङ्क्त्यां वै भुञ्जानाननुपश्यति ।
तावत्फलाद्भ्रंशयति दातारं तस्य बालिशम् ॥ ०१७ ॥

इमे तु भरतश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः ।
ये त्वतस्तान्प्रवक्ष्यामि परीक्षस्वेह तान्द्विजान् ॥ ०१८ ॥

वेदविद्याव्रतस्नाता ब्राह्मणाः सर्व एव हि ।
पाङ्क्तेयान्यांस्तु वक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः ॥ ०१९ ॥

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ।
ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगः ॥ ०२० ॥

मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः ।
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा ॥ ०२१ ॥

वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥ ०२१ ॥

अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः ।
सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः ॥ ०२२ ॥

ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
मखेषु च समन्त्रेषु भवन्त्यवभृथाप्लुताः ॥ ०२३ ॥

अक्रोधना अचपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् ॥ ०२४ ॥

एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः ॥ ०२४ ॥

इमे परे महाराज विज्ञेयाः पङ्क्तिपावनाः ।
यतयो मोक्षधर्मज्ञा योगाः सुचरितव्रताः ॥ ०२५ ॥

ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान् ।
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ॥ ०२६ ॥

अधीयते पुराणं ये धर्मशास्त्राण्यथापि च ।
अधीत्य च यथान्यायं विधिवत्तस्य कारिणः ॥ ०२७ ॥

उपपन्नो गुरुकुले सत्यवादी सहस्रदः ।
अग्र्यः सर्वेषु वेदेषु सर्वप्रवचनेषु च ॥ ०२८ ॥

यावदेते प्रपश्यन्ति पङ्क्त्यास्तावत्पुनन्त्युत ।
ततो हि पावनात्पङ्क्त्याः पङ्क्तिपावन उच्यते ॥ ०२९ ॥

क्रोशादर्धतृतीयात्तु पावयेदेक एव हि ।
ब्रह्मदेयानुसंतान इति ब्रह्मविदो विदुः ॥ ०३० ॥

अनृत्विगनुपाध्यायः स चेदग्रासनं व्रजेत् ।
ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥ ०३१ ॥

अथ चेद्वेदवित्सर्वैः पङ्क्तिदोषैर्विवर्जितः ।
न च स्यात्पतितो राजन्पङ्क्तिपावन एव सः ॥ ०३२ ॥

तस्मात्सर्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान् ।
स्वकर्मनिरतान्दान्तान्कुले जातान्बहुश्रुतान् ॥ ०३३ ॥

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
न प्रीणाति पितॄन्देवान्स्वर्गं च न स गच्छति ॥ ०३४ ॥

यश्च श्राद्धे कुरुते सङ्गतानि ; न देवयानेन पथा स याति ।
स वै मुक्तः पिप्पलं बन्धनाद्वा ; स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ॥ ०३५ ॥

तस्मान्मित्रं श्राद्धकृन्नाद्रियेत ; दद्यान्मित्रेभ्यः सङ्ग्रहार्थं धनानि ।
यं मन्यते नैव शत्रुं न मित्रं ; तं मध्यस्थं भोजयेद्धव्यकव्ये ॥ ०३६ ॥

यथोषरे बीजमुप्तं न रोहे ;न्न चास्योप्ता प्राप्नुयाद्बीजभागम् ।
एवं श्राद्धं भुक्तमनर्हमाणै ;र्न चेह नामुत्र फलं ददाति ॥ ०३७ ॥

ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।

तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते ॥ ०३८ ॥

संभोजनी नाम पिशाचदक्षिणा ; सा नैव देवान्न पितॄनुपैति ।
इहैव सा भ्राम्यति क्षीणपुण्या ; शालान्तरे गौरिव नष्टवत्सा ॥ ०३९ ॥

यथाग्नौ शान्ते घृतमाजुहोति ; तन्नैव देवान्न पितॄनुपैति ।
तथा दत्तं नर्तने गायने च ; यां चानृचे दक्षिणामावृणोति ॥ ०४० ॥

उभौ हिनस्ति न भुनक्ति चैषा ; या चानृचे दक्षिणा दीयते वै ।
आघातनी गर्हितैषा पतन्ती ; तेषां प्रेतान्पातयेद्देवयानात् ॥ ०४१ ॥

ऋषीणां समयं नित्यं ये चरन्ति युधिष्ठिर ।
निश्चिताः सर्वधर्मज्ञास्तान्देवा ब्राह्मणान्विदुः ॥ ०४२ ॥

स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥ ०४३ ॥

कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत ।
तत्र ये ब्राह्मणाः केचिन्न निन्दति हि ते वराः ॥ ०४४ ॥

ये तु निन्दन्ति जल्पेषु न ताञ्श्राद्धेषु भोजयेत् ।
ब्राह्मणा निन्दिता राजन्हन्युस्त्रिपुरुषं कुलम् ॥ ०४५ ॥

वैखानसानां वचनमृषीणां श्रूयते नृप ।
दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान् ॥ ०४६ ॥

प्रियान्वा यदि वा द्वेष्यांस्तेषु तच्छ्राद्धमावपेत् ॥ ०४६ ॥

यः सहस्रं सहस्राणां भोजयेदनृचां नरः ।
एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति भारत ॥ ०४७ ॥

# अध्याय ०९१

युधिष्ठिर उवाच ॥

केन सङ्कल्पितं श्राद्धं कस्मिन्काले किमात्मकम् ।
भृग्वङ्गिरसके काले मुनिना कतरेण वा ॥ ००१ ॥

कानि श्राद्धेषु वर्ज्यानि तथा मूलफलानि च ।
धान्यजातिश्च का वर्ज्या तन्मे ब्रूहि पितामह ॥ ००२ ॥

भीष्म उवाच ॥

यथा श्राद्धं संप्रवृत्तं यस्मिन्काले यदात्मकम् ।
येन सङ्कल्पितं चैव तन्मे शृणु जनाधिप ॥ ००३ ॥

स्वायंभुवोऽत्रिः कौरव्य परमर्षिः प्रतापवान् ।
तस्य वंशे महाराज दत्तात्रेय इति स्मृतः ॥ ००४ ॥

दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः ।
निमेश्चाप्यभवत्पुत्रः श्रीमान्नाम श्रिया वृतः ॥ ००५ ॥

पूर्णे वर्षसहस्रान्ते स कृत्वा दुष्करं तपः ।
कालधर्मपरीतात्मा निधनं समुपागतः ॥ ००६ ॥

निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्मणा ।
संतापमगमत्तीव्रं पुत्रशोकपरायणः ॥ ००७ ॥

अथ कृत्वोपहार्याणि चतुर्दश्यां महामतिः ।

तमेव गणयञ्शोकं विरात्रे प्रत्यबुध्यत ॥ ००८ ॥

तस्यासीत्प्रतिबुद्धस्य शोकेन पिहितात्मनः ।
मनः संहृत्य विषये बुद्धिर्विस्तरगामिनी ॥ ००९ ॥

ततः सञ्चिन्तयामास श्राद्धकल्पं समाहितः ।
यानि तस्यैव भोज्यानि मूलानि च फलानि च ॥ ०१० ॥

उक्तानि यानि चान्यानि यानि चेष्टानि तस्य ह ।
तानि सर्वाणि मनसा विनिश्चित्य तपोधनः ॥ ०११ ॥

अमावास्यां महाप्राज्ञ विप्रानानाय्य पूजितान् ।
दक्षिणावर्तिकाः सर्वा बृसीः स्वयमथाकरोत् ॥ ०१२ ॥

सप्त विप्रांस्ततो भोज्ये युगपत्समुपानयत् ।
ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः ॥ ०१३ ॥

दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः ।
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ॥ ०१४ ॥

कृत्वा च दक्षिणाग्रान्वै दर्भान्सुप्रयतः शुचिः ।
प्रददौ श्रीमते पिण्डं नामगोत्रमुदाहरन् ॥ ०१५ ॥

तत्कृत्वा स मुनिश्रेष्ठो धर्मसङ्करमात्मनः ।
पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् ॥ ०१६ ॥

अकृतं मुनिभिः पूर्वं किं मयैतदनुष्ठितम् ।
कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति ॥ ०१७ ॥

ततः सञ्चिन्तयामास वंशकर्तारमात्मनः ।
ध्यातमात्रस्तथा चात्रिराजगाम तपोधनः ॥ ०१८ ॥

अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्शितम् ।
भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः ॥ ०१९ ॥

निमे सङ्कल्पितस्तेऽयं पितृयज्ञस्तपोधनः ।
मा ते भूद्भीः पूर्वदृष्टो धर्मोऽयं ब्रह्मणा स्वयम् ॥ ०२० ॥

सोऽयं स्वयंभुविहितो धर्मः सङ्कल्पितस्त्वया ।
ऋते स्वयंभुवः कोऽन्यः श्राद्धेयं विधिमाहरेत् ॥ ०२१ ॥

आख्यास्यामि च ते भूयः श्राद्धेयं विधिमुत्तमम् ।
स्वयंभुविहितं पुत्र तत्कुरुष्व निबोध मे ॥ ०२२ ॥

कृत्वाग्निकरणं पूर्वं मन्त्रपूर्वं तपोधन ।
ततोऽर्यम्णे च सोमाय वरुणाय च नित्यशः ॥ ०२३ ॥

विश्वेदेवाश्च ये नित्यं पितृभिः सह गोचराः ।
तेभ्यः सङ्कल्पिता भागाः स्वयमेव स्वयंभुवा ॥ ०२४ ॥

स्तोतव्या चेह पृथिवी निवापस्येह धारिणी ।
वैष्णवी काश्यपी चेति तथैवेहाक्षयेति च ॥ ०२५ ॥

उदकानयने चैव स्तोतव्यो वरुणो विभुः ।
ततोऽग्निश्चैव सोमश्च आप्याय्याविह तेऽनघ ॥ ०२६ ॥

देवास्तु पितरो नाम निर्मिता वै स्वयंभुवा ।
ऊष्मपाः सुमहाभागास्तेषां भागाः प्रकल्पिताः ॥ ०२७ ॥

ते श्राद्धेनार्च्यमाना वै विमुच्यन्ते ह किल्बिषात् ।
सप्तकः पितृवंशस्तु पूर्वदृष्टः स्वयंभुवा ॥ ०२८ ॥

विश्वे चाग्निमुखा देवाः संख्याताः पूर्वमेव ते ।
तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम् ॥ ०२९ ॥

सहः कृतिर्विपाप्मा च पुण्यकृत्पावनस्तथा ।
ग्राम्निः क्षेमः समूहश्च दिव्यसानुस्तथैव च ॥ ०३० ॥

विवस्वान्वीर्यवान्ह्रीमान्कीर्तिमान्कृत एव च ।
विपूर्वः सोमपूर्वश्च सूर्यश्रीश्चेति नामतः ॥ ०३१ ॥

सोमपः सूर्यसावित्रो दत्तात्मा पुष्करीयकः ।
उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ॥ ०३२ ॥

चमूहरः सुवेषश्च व्योमारिः शङ्करो भवः ।
ईशः कर्ता कृतिर्दक्षो भुवनो दिव्यकर्मकृत् ॥ ०३३ ॥

गणितः पञ्चवीर्यश्च आदित्यो रश्मिमांस्तथा ।
सप्तकृत्सोमवर्चाश्च विश्वकृत्कविरेव च ॥ ०३४ ॥

अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च ।
जितात्मा मुनिवीर्यश्च दीप्तलोमा भयङ्करः ॥ ०३५ ॥

अतिकर्मा प्रतीतश्च प्रदाता चांशुमांस्तथा ।
शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ॥ ०३६ ॥

स्रजी वज्री वरी चैव विश्वेदेवाः सनातनाः ।
कीर्तितास्ते महाभागाः कालस्य गतिगोचराः ॥ ०३७ ॥

अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।
हिङ्गु द्रव्येषु शाकेषु पलाण्डुं लशुनं तथा ॥ ०३८ ॥

पलाण्डुः सौभञ्जनकस्तथा गृञ्जनकादयः ।

कूष्माण्डजात्यलाबुं च कृष्णं लवणमेव च ॥ ०३९ ॥

ग्राम्यं वाराहमांसं च यच्चैवाप्रोक्षितं भवेत् ।
कृष्णाजाजी विडश्चैव शीतपाकी तथैव च ॥ ०४० ॥

अङ्कुराद्यास्तथा वर्ज्या इह श्रृङ्गाटकानि च ॥ ०४० ॥

वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च ।
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत् ॥ ०४१ ॥

निवापे हव्यकव्ये वा गर्हितं च श्वदर्शनम् ।
पितरश्चैव देवाश्च नाभिनन्दन्ति तद्धविः ॥ ०४२ ॥

चण्डालश्वपचौ वर्ज्यौ निवापे समुपस्थिते ।
काषायवासी कुष्ठी वा पतितो ब्रह्महापि वा ॥ ०४३ ॥

सङ्कीर्णयोनिर्विप्रश्च संबन्धी पतितश्च यः ।
वर्जनीया बुधैरेते निवापे समुपस्थिते ॥ ०४४ ॥

इत्येवमुक्त्वा भगवान्स्ववंशजमृषिं पुरा ।
पितामहसभां दिव्यां जगामात्रिस्तपोधनः ॥ ०४५ ॥

---

# अध्याय ०९२

भीष्म उवाच ॥

तथा विधौ प्रवृत्ते तु सर्व एव महर्षयः ।
पितृयज्ञानकुर्वन्त विधिदृष्टेन कर्मणा ॥ ००१ ॥

ऋषयो धर्मनित्यास्तु कृत्वा निवपनान्युत ।
तर्पणं चाप्यकुर्वन्त तीर्थाम्भोभिर्यतव्रताः ॥ ००२ ॥

निवापैर्दीयमानैश्च चातुर्वर्ण्येन भारत ।
तर्पिताः पितरो देवास्ते नान्नं जरयन्ति वै ॥ ००३ ॥

अजीर्णेनाभिहन्यन्ते ते देवाः पितृभिः सह ।
सोममेवाभ्यपद्यन्त निवापान्नाभिपीडिताः ॥ ००४ ॥

तेऽब्रुवन्सोममासाद्य पितरोऽजीर्णपीडिताः ।
निवापान्नेन पीड्यामः श्रेयो नोऽत्र विधीयताम् ॥ ००५ ॥

तान्सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः ।
स्वयंभूसदनं यात स वः श्रेयो विधास्यति ॥ ००६ ॥

ते सोमवचनाद्देवाः पितृभिः सह भारत ।
मेरुश्रृङ्गे समासीनं पितामहमुपागमन् ॥ ००७ ॥

पितर ऊचुः ॥

निवापान्नेन भगवन्भृशं पीड्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ॥ ००८ ॥

इति तेषां वचः श्रुत्वा स्वयंभूरिदमब्रवीत् ।
एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति ॥ ००९ ॥

अग्निरुवाच ॥

सहितास्तात भोक्ष्यामो निवापे समुपस्थिते ।
जरयिष्यथ चाप्यन्नं मया सार्धं न संशयः ॥ ०१० ॥

एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वराभवन् ।
एतस्मात्कारणाच्चाग्नेः प्राक्तनं दीयते नृप ॥ ०११ ॥

निवप्ते चाग्निपूर्वे वै निवापे पुरुषर्षभ ।
न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत ॥ ०१२ ॥

रक्षांसि चापवर्तन्ते स्थिते देवे विभावसौ ॥ ०१२ ॥

पूर्वं पिण्डं पितुर्दद्यात्ततो दद्यात्पितामहे ।
प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः ॥ ०१३ ॥

ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः ।
सोमायेति च वक्तव्यं तथा पितृमतेति च ॥ ०१४ ॥

रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या ।
निवापे नोपतिष्ठेत सङ्ग्राह्या नान्यवंशजाः ॥ ०१५ ॥

जलं प्रतरमाणश्च कीर्तयेत पितामहान् ।
नदीमासाद्य कुर्वीत पितृणां पिण्डतर्पणम् ॥ ०१६ ॥

पूर्वं स्ववंशजानां तु कृत्वाद्भिस्तर्पणं पुनः ।
सुहृत्संबन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् ॥ ०१७ ॥

कल्माषगोयुगेनाथ युक्तेन तरतो जलम् ।
पितरोऽभिलषन्ते वै नावं चाप्यधिरोहतः ॥ ०१८ ॥

सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः ॥ ०१८ ॥

मासार्धे कृष्णपक्षस्य कुर्यान्निवपनानि वै ।
पुष्टिरायुस्तथा वीर्यं श्रीश्चैव पितृवर्तिनः ॥ ०१९ ॥

पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा ।
अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः ॥ ०२० ॥

एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः ॥ ०२० ॥

एते च पितरो राजन्नेष श्राद्धविधिः परः ।
प्रेतास्तु पिण्डसंबन्धान्मुच्यन्ते तेन कर्मणा ॥ ०२१ ॥

इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम् ।
ख्यापिता पूर्वनिर्दिष्टा दानं वक्ष्याम्यतः परम् ॥ ०२२ ॥

---

# व्रतविशेषाः

## अध्याय ०९३

युधिष्ठिर उवाच ॥

द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते ।
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अवेदोक्तव्रताश्चैव भुञ्जानाः कार्यकारिणः ।
वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ ००२ ॥

युधिष्ठिर उवाच ॥

यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
तपः स्यादेतदिह वै तपोऽन्यद्वापि किं भवेत् ॥ ००३ ॥

भीष्म उवाच ॥

मासार्धमासौ नोपवसेद्यत्तपो मन्यते जनः ।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ॥ ००४ ॥

त्यागस्यापि च संपत्तिः शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद्ब्रह्मचारी तथैव च ॥ ००५ ॥

मुनिश्च स्यात्सदा विप्रो देवांश्चैव सदा यजेत् ।
कुटुम्बिको धर्मकामः सदास्वप्नश्च भारत ॥ ००६ ॥

अमृताशी सदा च स्यात्पवित्री च सदा भवेत् ।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ॥ ००७ ॥

विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः ।
अमांसाशी सदा च स्यात्पवित्री च सदा भवेत् ॥ ००८ ॥

युधिष्ठिर उवाच ॥

कथं सदोपवासी स्याद्ब्रह्मचारी च पार्थिव ।
विघसाशी कथं च स्यात्कथं चैवातिथिप्रियः ॥ ००९ ॥

भीष्म उवाच ॥

अन्तरा सायमाशं च प्रातराशं तथैव च ।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ ०१० ॥

भार्यां गच्छन्ब्रह्मचारी सदा भवति चैव ह ।
ऋतवादी सदा च स्याद्दानशीलश्च मानवः ॥ ०११ ॥

अभक्षयन्वृथा मांसममांसाशी भवत्युत ।
दानं ददत्पवित्री स्यादस्वप्नश्च दिवास्वपन् ॥ ०१२ ॥

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ ०१३ ॥

अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः ।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ ०१४ ॥

देवेभ्यश्च पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह ।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ ०१५ ॥

तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः ।
उपस्थिता ह्यप्सरोभिर्गन्धर्वैश्च जनाधिप ॥ ०१६ ॥

देवतातिथिभिः सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ ०१७ ॥

---

# प्रतिग्रहदोषाः

# अध्याय ०९४

युधिष्ठिर उवाच ॥

ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च ।
दातृप्रतिग्रहीत्रोर्वा को विशेषः पितामह ॥ ००१ ॥

भीष्म उवाच ॥

साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः ।
गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वृषादर्भेश्च संवादं सप्तर्षीणां च भारत ॥ ००३ ॥

कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः ।
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ॥ ००४ ॥

सर्वेषामथ तेषां तु गण्डाभूत्कर्मकारिका ।
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ॥ ००५ ॥

ते वै सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम् ।
समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम् ॥ ००६ ॥

अथाभवदनावृष्टिर्महती कुरुनन्दन ।
कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः ॥ ००७ ॥

कस्मिंश्चिच्च पुरा यज्ञे याज्येन शिबिसूनुना ।
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रो निजः किल ॥ ००८ ॥

तस्मिन्कालेऽथ सोऽल्पायुर्दिष्टान्तमगमत्प्रभो ।
ते तं क्षुधाभिसंतप्ताः परिवार्योपतस्थिरे ॥ ००९ ॥

याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः ।
अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत ॥ ०१० ॥

निराद्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः ।
कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ॥ ०११ ॥

अटमानोऽथ तान्मार्गे पचमानान्महीपतिः ।
राजा शैब्यो वृषादर्भिः क्लिश्यमानान्ददर्श ह ॥ ०१२ ॥

वृषादर्भिरुवाच ॥

प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम् ।
मयि यद्विद्यते वित्तं तच्छृणुध्वं तपोधनाः ॥ ०१३ ॥

प्रियो हि मे ब्राह्मणो याचमानो ; दद्यामहं वोऽश्वतरीसहस्रम् ।
एकैकशः सवृषाः संप्रसूताः ; सर्वेषां वै शीघ्रगाः श्वेतलोमाः ॥ ०१४ ॥

कुलंभराननडुहः शतंशता ;न्धुर्याञ्शुभान्सर्वशोऽहं ददानि ।
पृथ्वीवाहान्पीवरांश्चैव ताव ;दग्र्या गृष्ट्यो धेनवः सुव्रताश्च ॥ ०१५ ॥

वरान्ग्रामान्व्रीहियवं रसांश्च ; रत्नं चान्यद्दुर्लभं किं ददानि ।
मा स्माभक्ष्ये भावमेवं कुरुध्वं ; पुष्ट्यर्थं वै किं प्रयच्छाम्यहं वः ॥ ०१६ ॥

ऋषय ऊचुः ॥

राजन्प्रतिग्रहो राज्ञो मध्वास्वादो विषोपमः ।
तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥ ०१७ ॥

क्षत्रं हि दैवतमिव ब्राह्मणं समुपाश्रितम् ।
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ ०१८ ॥

अह्नापीह तपो जातु ब्राह्मणस्योपजायते ।
तद्दाव इव निर्दह्यात्प्राप्तो राजप्रतिग्रहः ॥ ०१९ ॥

कुशलं सह दानेन राजन्नस्तु सदा तव ।
अर्थिभ्यो दीयतां सर्वमित्युक्त्वा ते ततो ययुः ॥ ०२० ॥

अपक्कमेव तन्मांसमभूत्तेषां च धीमताम् ।
अथ हित्वा ययुः सर्वे वनमाहारकाङ्क्षिणः ॥ ०२१ ॥

ततः प्रचोदिता राज्ञा वनं गत्वास्य मन्त्रिणः ।
प्रचीयोदुम्बराणि स्म दानं दातुं प्रचक्रमुः ॥ ०२२ ॥

उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन् ।
भृत्यास्तेषां ततस्तानि प्रग्राहितुमुपाद्रवन् ॥ ०२३ ॥

गुरूणीति विदित्वाथ न ग्राह्याण्यत्रिरब्रवीत् ।
न स्म हे मूढविज्ञाना न स्म हे मन्दबुद्धयः ॥ ०२४ ॥

हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृमः ॥ ०२४ ॥

इह ह्येतदुपादत्तं प्रेत्य स्यात्कटुकोदयम् ।
अप्रतिग्राह्यमेवैतत्प्रेत्य चेह सुखेप्सुना ॥ ०२५ ॥

वसिष्ठ उवाच ॥

शतेन निष्कं गणितं सहस्रेण च संमितम् ।
यथा बहु प्रतीच्छन्हि पापिष्ठां लभते गतिम् ॥ ०२६ ॥

कश्यप उवाच ॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्शमं व्रजेत् ॥ ०२७ ॥

भरद्वाज उवाच ॥

उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते ।
प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते ॥ ०२८ ॥

गौतम उवाच ॥

न तल्लोके द्रव्यमस्ति यल्लोकं प्रतिपूरयेत् ।
समुद्रकल्पः पुरुषो न कदाचन पूर्यते ॥ ०२९ ॥

विश्वामित्र उवाच ॥

कामं कामयमानस्य यदा कामः समृध्यते ।
अथैनमपरः कामस्तृष्णा विध्यति बाणवत् ॥ ०३० ॥

जमदग्निरुवाच ॥

प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ ०३१ ॥

अरुन्धत्युवाच ॥

धर्मार्थं सञ्चयो यो वै द्रव्याणां पक्षसंमतः ।
तपःसञ्चय एवेह विशिष्टो द्रव्यसञ्चयात् ॥ ०३२ ॥

गण्डोवाच ॥

उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः ।
बलीयांसो दुर्बलवद्बिभेम्यहमतः परम् ॥ ०३३ ॥

पशुसख उवाच ॥

यद्वै धर्मे परं नास्ति ब्राह्मणास्तद्धनं विदुः ।
विनयार्थं सुविद्वांसमुपासेयं यथातथम् ॥ ०३४ ॥

ऋषय ऊचुः ॥

कुशलं सह दानाय तस्मै यस्य प्रजा इमाः ।
फलान्युपधियुक्तानि य एवं नः प्रयच्छसि ॥ ०३५ ॥

भीष्म उवाच ॥

इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि ते ।
ऋषयो जग्मुरन्यत्र सर्व एव धृतव्रताः ॥ ०३६ ॥

मन्त्रिणः ऊचुः ॥

उपधिं शङ्कमानास्ते हित्वेमानि फलानि वै ।
ततोऽन्येनैव गच्छन्ति विदितं तेऽस्तु पार्थिव ॥ ०३७ ॥

इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह ।
तेषां संप्रतिकर्तुं च सर्वेषामगमद्गृहम् ॥ ०३८ ॥

स गत्वाहवनीयेऽग्नौ तीव्रं नियममास्थितः ।
जुहाव संस्कृतां मन्त्रैरेकैकामाहुतिं नृपः ॥ ०३९ ॥

तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयङ्करी ।
तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ॥ ०४० ॥

सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता ।
वृषादर्भिं नरपतिं किं करोमीति चाब्रवीत् ॥ ०४१ ॥

वृषादर्भिरुवाच ॥

ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च ।
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥ ०४२ ॥

ज्ञात्वा नामानि चैतेषां सर्वानेतान्विनाशय ।
विनष्टेषु यथा स्वैरं गच्छ यत्रेप्सितं तव ॥ ०४३ ॥

सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी ।
जगाम तद्वनं यत्र विचेरुस्ते महर्षयः ॥ ०४४ ॥

---

# शपथाध्यायः

## अध्याय ०९५

भीष्म उवाच ॥

अथात्रिप्रमुखा राजन्वने तस्मिन्महर्षयः ।
व्यचरन्भक्षयन्तो वै मूलानि च फलानि च ॥ ००१ ॥

अथापश्यन्सुपीनांसपाणिपादमुखोदरम् ।
परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुनःसखम् ॥ ००२ ॥

अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभा ।
भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ ००३ ॥

वसिष्ठ उवाच ॥

नैतस्येह यथास्माकमग्निहोत्रमनिर्हुतम् ।
सायं प्रातश्च होतव्यं तेन पीवाञ्शुनःसखः  ॥ ००४  ॥

अत्रिरुवाच  ॥

नैतस्येह यथास्माकं क्षुधा वीर्यं समाहतम् ।
कृच्छ्राधीतं प्रनष्टं च तेन पीवाञ्शुनःसखः  ॥ ००५  ॥

विश्वामित्र उवाच  ॥

नैतस्येह यथास्माकं शश्वच्छास्त्रं जरद्गवः ।
अलसः क्षुत्परो मूर्खस्तेन पीवाञ्शुनःसखः  ॥ ००६  ॥

जमदग्निरुवाच  ॥

नैतस्येह यथास्माकं भक्तमिन्धनमेव च ।
सञ्चिन्त्य वार्षिकं किञ्चित्तेन पीवाञ्शुनःसखः  ॥ ००७  ॥

कश्यप उवाच  ॥

नैतस्येह यथास्माकं चत्वारश्च सहोदराः ।
देहि देहीति भिक्षन्ति तेन पीवाञ्शुनःसखः  ॥ ००८  ॥

भरद्वाज उवाच  ॥

नैतस्येह यथास्माकं ब्रह्मबन्धोरचेतसः ।
शोको भार्यापवादेन तेन पीवाञ्शुनःसखः  ॥ ००९  ॥

गौतम उवाच  ॥

नैतस्येह यथास्माकं त्रिकौशेयं हि राङ्कवम् ।

एकैकं वै त्रिवार्षीयं तेन पीवाञ्शुनःसखः ॥ ०१० ॥

भीष्म उवाच ॥

अथ दृष्ट्वा परिव्राड्व तान्महर्षीञ्शुनःसखः ।
अभिगम्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ ०११ ॥

परिचर्यां वने तां तु क्षुत्प्रतीघातकारिकाम् ।
अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ ०१२ ॥

एकनिश्चयकार्याश्च व्यचरन्त वनानि ते ।
आददानाः समुद्धृत्य मूलानि च फलानि च ॥ ०१३ ॥

कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम् ।
शुचिवारिप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥ ०१४ ॥

बालादित्यवपुःप्रख्यैः पुष्करैरुपशोभिताम् ।
वैदूर्यवर्णसदृशैः पद्मपत्रैरथावृताम् ॥ ०१५ ॥

नानाविधैश्च विहगैर्जलप्रकरसेविभिः ।
एकद्वारामनादेयां सूपतीर्थामकर्दमाम् ॥ ०१६ ॥

वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना ।
यातुधानीति विख्याता पद्मिनीं तामरक्षत ॥ ०१७ ॥

शुनःसखसहायास्तु बिसार्थं ते महर्षयः ।
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् ॥ ०१८ ॥

ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम् ।
स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः ॥ ०१९ ॥

एका तिष्ठसि का नु त्वं कस्यार्थे किं प्रयोजनम् ।
पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किं चिकीर्षसि ॥ ०२० ॥

यातुधान्युवाच ॥

यास्मि सास्म्यनुयोगो मे न कर्तव्यः कथञ्चन ।
आरक्षिणीं मां पद्मिन्या वित्त सर्वे तपोधनाः ॥ ०२१ ॥

ऋषय ऊचुः ॥

सर्व एव क्षुधार्ताः स्म न चान्यत्किञ्चिदस्ति नः ।
भवत्याः संमते सर्वे गृह्णीमहि बिसान्युत ॥ ०२२ ॥

यातुधान्युवाच ॥

समयेन बिसानीतो गृह्णीध्वं कामकारतः ।
एकैको नाम मे प्रोक्त्वा ततो गृह्णीत माचिरम् ॥ ०२३ ॥

भीष्म उवाच ॥

विज्ञाय यातुधानीं तां कृत्यामृषिवधैषिणीम् ।
अत्रिः क्षुधापरीतात्मा ततो वचनमब्रवीत् ॥ ०२४ ॥

अरात्रिरत्रेः सा रात्रिर्यां नाधीते त्रिरद्य वै ।
अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने ॥ ०२५ ॥

यातुधान्युवाच ॥

यथोदाहृतमेतत्ते मयि नाम महामुने ।
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ०२६ ॥

वसिष्ठ उवाच ॥

वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासं गृहेष्वपि ।
वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् ॥ ०२७ ॥

यातुधान्युवाच ॥

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ०२८ ॥

कश्यप उवाच ॥

कुलं कुलं च कुपपः कुपयः कश्यपो द्विजः ।
काश्यः काशनिकाशत्वादेतन्मे नाम धारय ॥ ०२९ ॥

यातुधान्युवाच ॥

यथोदाहृतमेतत्ते मयि नाम महामुने ।
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ०३० ॥

भरद्वाज उवाच ॥

भरे सुतान्भरे शिष्यान्भरे देवान्भरे द्विजान् ।
भरे भार्यामनव्याजो भरद्वाजोऽस्मि शोभने ॥ ०३१ ॥

यातुधान्युवाच ॥

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ०३२ ॥

गौतम उवाच ॥

गोदमो दमगोऽधूमो दमो दुर्दर्शनश्च ते ।
विद्धि मां गौतमं कृत्ये यातुधानि निबोध मे ॥ ०३३ ॥

यातुधान्युवाच ॥

यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ०३४ ॥

विश्वामित्र उवाच ॥

विश्वेदेवाश्च मे मित्रं मित्रमस्मि गवां तथा ।
विश्वामित्रमिति ख्यातं यातुधानि निबोध मे ॥ ०३५ ॥

यातुधान्युवाच ॥

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ०३६ ॥

जमदग्निरुवाच ॥

जाजमद्यजजा नाम मृजा माह जिजायिषे ।
जमदग्निरिति ख्यातमतो मां विद्धि शोभने ॥ ०३७ ॥

यातुधान्युवाच ॥

यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ०३८ ॥

अरुन्धत्युवाच ॥

धरां धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम् ।
मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम्  ॥ ०३९  ॥

यातुधान्युवाच  ॥

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम्  ॥ ०४०  ॥

गण्डोवाच  ॥

गण्डं गण्डं गतवती गण्डगण्डेति सञ्ज्ञिता ।
गण्डगण्डेव गण्डेति विद्धि मानलसंभवे  ॥ ०४१  ॥

यातुधान्युवाच  ॥

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम्  ॥ ०४२  ॥

पशुसख उवाच  ॥

सखा सखे यः सख्येयः पशूनां च सखा सदा ।
गौणं पशुसखेत्येवं विद्धि मामग्निसंभवे  ॥ ०४३  ॥

यातुधान्युवाच  ॥

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम्  ॥ ०४४  ॥

शुनःसख उवाच  ॥

एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे ।

शुनःसखसखायं मां यातुधान्युपधारय ॥ ०४५ ॥

यातुधान्युवाच ॥

नाम तेऽव्यक्तमुक्तं वै वाक्यं संदिग्धया गिरा ।
तस्मात्सकृदिदानीं त्वं ब्रूहि यन्नाम ते द्विज ॥ ०४६ ॥

शुनःसख उवाच ॥

सकृदुक्तं मया नाम न गृहीतं यदा त्वया ।
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति माचिरम् ॥ ०४७ ॥

भीष्म उवाच ॥

सा ब्रह्मदण्डकल्पेन तेन मूर्ध्नि हता तदा ।
कृत्या पपात मेदिन्यां भस्मसाच्च जगाम ह ॥ ०४८ ॥

शुनःसखश्च हत्वा तां यातुधानीं महाबलाम् ।
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ॥ ०४९ ॥

ततस्ते मुनयः सर्वे पुष्कराणि बिसानि च ।
यथाकाममुपादाय समुत्तस्थुर्मुदान्विताः ॥ ०५० ॥

श्रमेण महता युक्तास्ते बिसानि कलापशः ।
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ॥ ०५१ ॥

अथोत्थाय जलात्तस्मात्सर्वे ते वै समागमन् ।
नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभ ॥ ०५२ ॥

ऋषय ऊचुः ॥

केन क्षुधाभिभूतानामस्माकं पापकर्मणा ।
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥ ०५३ ॥

ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ।
त ऊचुः शपथं सर्वे कुर्म इत्यरिकर्शन ॥ ०५४ ॥

त उक्त्वा बाढमित्येव सर्व एव शुनःसखम् ।
क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ॥ ०५५ ॥

अत्रिरुवाच ॥

स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु ।
अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥ ०५६ ॥

वसिष्ठ उवाच ॥

अनध्यायपरो लोके शुनः स परिकर्षतु ।
परिव्राट्कामवृत्तोऽस्तु बिसस्तैन्यं करोति यः ॥ ०५७ ॥

शरणागतं हन्तु मित्रं स्वसुतां चोपजीवतु ।
अर्थान्काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ॥ ०५८ ॥

कश्यप उवाच ॥

सर्वत्र सर्वं पणतु न्यासलोपं करोतु च ।
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ ०५९ ॥

वृथामांसं समश्नातु वृथादानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥ ०६० ॥

भरद्वाज उवाच ॥

नृशंसस्त्यक्तधर्मास्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ॥ ०६१ ॥

उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च ।
जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ॥ ०६२ ॥

जमदग्निरुवाच ॥

पुरीषमुत्सृजत्वप्सु हन्तु गां चापि दोहिनीम् ।
अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥ ०६३ ॥

द्वेष्यो भार्योपजीवी स्याद्दूरबन्धुश्च वैरवान् ।
अन्योन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ॥ ०६४ ॥

गौतम उवाच ॥

अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु ।
विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ॥ ०६५ ॥

उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ॥ ०६६ ॥

विश्वामित्र उवाच ॥

जीवतो वै गुरून्भृत्यान्भरन्त्वस्य परे जनाः ।
अगतिर्बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः ॥ ०६७ ॥

अशुचिर्ब्रह्मकूटोऽस्तु ऋद्ध्या चैवाप्यहङ्कृतः ।
कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥ ०६८ ॥

वर्षान्करोतु भृतको राज्ञश्चास्तु पुरोहितः ।
अयाज्यस्य भवेदृत्विग्बिसस्तैन्यं करोति यः ॥ ०६९ ॥

अरुन्धत्युवाच ॥

नित्यं परिवदेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु बिसस्तैन्यं करोति या ॥ ०७० ॥

ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये ।
अभाग्यावीरसूरस्तु बिसस्तैन्यं करोति या ॥ ०७१ ॥

गण्डोवाच ॥

अनृतं भाषतु सदा साधुभिश्च विरुध्यतु ।
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥ ०७२ ॥

साधयित्वा स्वयं प्राशेद्दास्ये जीवतु चैव ह ।
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥ ०७३ ॥

पशुसख उवाच ॥

दास्य एव प्रजायेत सोऽप्रसूतिरकिञ्चनः ।
दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ॥ ०७४ ॥

शुनःसख उवाच ॥

अध्वर्यवे दुहितरं ददातु; च्छन्दोगे वा चरितब्रह्मचर्ये ।
आथर्वणं वेदमधीत्य विप्रः; स्नायीत यो वै हरते बिसानि ॥ ०७५ ॥

ऋषय ऊचुः ॥

इष्टमेतद्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनःसख ॥ ०७६ ॥

शुनःसख उवाच ॥

न्यस्तमाद्यमपश्यद्भिर्यदुक्तं कृतकर्मभिः ।
सत्यमेतन्न मिथ्यैतद्बिसस्तैन्यं कृतं मया ॥ ०७७ ॥

मया ह्यन्तर्हितानीह बिसानीमानि पश्यत ।
परीक्षार्थं भगवतां कृतमेतन्मयानघाः ॥ ०७८ ॥

रक्षणार्थं च सर्वेषां भवतामहमागतः ॥ ०७८ ॥

यातुधानी ह्यतिक्रुद्धा कृत्यैषा वो वधैषिणी ।
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ॥ ०७९ ॥

दुष्टा हिंस्यादियं पापा युष्मान्प्रत्यग्निसंभवा ।
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ॥ ०८० ॥

अलोभादक्षया लोकाः प्राप्ता वः सार्वकामिकाः ।
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥ ०८१ ॥

भीष्म उवाच ॥

ततो महर्षयः प्रीतास्तथेत्युक्त्वा पुरंदरम् ।
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ॥ ०८२ ॥

एवमेते महात्मानो भोगैर्बहुविधैरपि ।
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः ॥ ०८३ ॥

नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन् ॥ ०८३ ॥

तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत् ।
एष धर्मः परो राजन्नलोभ इति विश्रुतः ॥ ०८४ ॥

इदं नरः सच्चरितं समवायेषु कीर्तयेत् ।
सुखभागी च भवति न च दुर्गाण्यवाप्नुते ॥ ०८५ ॥

प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा ।
यशोधर्मार्थभागी च भवति प्रेत्य मानवः ॥ ०८६ ॥

---

# अध्याय ०९६

भीष्म उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥ ००१ ॥

पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम ।
राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥ ००२ ॥

ऋषयः समेताः पश्चिमे वै प्रभासे ; समागता मन्त्रममन्त्रयन्त ।
चराम सर्वे पृथिवीं पुण्यतीर्थां ; तन्नः कार्यं हन्त गच्छाम सर्वे ॥ ००३ ॥

शुक्रोऽङ्गिराश्चैव कविश्च विद्वां ;स्तथागस्त्यो नारदपर्वतौ च ।
भृगुर्वसिष्ठः कश्यपो गौतमश्च ; विश्वामित्रो जमदग्निश्च राजन् ॥ ००४ ॥

ऋषिस्तथा गालवोऽथाष्टकश्च ; भरद्वाजोऽरुन्धती वालखिल्याः ।

शिबिर्दिलीपो नहुषोऽम्बरीषो ; राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥ ००५ ॥

जग्मुः पुरस्कृत्य महानुभावं ; शतक्रतुं वृत्रहणं नरेन्द्र ।
तीर्थानि सर्वाणि परिक्रमन्तो ; माघ्यां ययुः कौशिकीं पुण्यतीर्थाम् ॥ ००६ ॥

सर्वेषु तीर्थेष्वथ धूतपापा ; जग्मुस्ततो ब्रह्मसरः सुपुण्यम् ।
देवस्य तीर्थे जलमग्निकल्पा ; विगाह्य ते भुक्तबिसप्रसूनाः ॥ ००७ ॥

केचिद्बिसान्यखनंस्तत्र राज ;न्नन्ये मृणालान्यखनंस्तत्र विप्राः ।
अथापश्यन्पुष्करं ते ह्रियन्तं ; ह्रदादगस्त्येन समुद्धृतं वै ॥ ००८ ॥

तानाह सर्वानृषिमुख्यानगस्त्यः ; केनादत्तं पुष्करं मे सुजातम् ।
युष्माञ्शङ्के दीयतां पुष्करं मे ; न वै भवन्तो हर्तुमर्हन्ति पद्मम् ॥ ००९ ॥

श्रृणोमि कालो हिंसते धर्मवीर्यं ; सेयं प्राप्ता वर्धते धर्मपीडा ।
पुराधर्मो वर्धते नेह याव ;त्तावद्गच्छामि परलोकं चिराय ॥ ०१० ॥

पुरा वेदान्ब्राह्मणा ग्राममध्ये ; घुष्टस्वरा वृषलाञ्श्रावयन्ति ।
पुरा राजा व्यवहारानधर्म्या ;न्पश्यत्यहं परलोकं व्रजामि ॥ ०११ ॥

पुरावरान्प्रत्यवरान्गरीयसो ; यावन्नरा नावमंस्यन्ति सर्वे ।
तमोत्तरं यावदिदं न वर्तते ; तावद्व्रजामि परलोकं चिराय ॥ ०१२ ॥

पुरा प्रपश्यामि परेण मर्त्या ;न्बलीयसा दुर्बलान्भुज्यमानान् ।
तस्माद्यास्यामि परलोकं चिराय ; न ह्युत्सहे द्रष्टुमीदृङ्नृलोके ॥ ०१३ ॥

तमाहुरार्ता ऋषयो महर्षिं ; न ते वयं पुष्करं चोरयामः ।
मिथ्याभिषङ्गो भवता न कार्यः ; शपाम तीक्ष्णाञ्शपथान्महर्षे ॥ ०१४ ॥

ते निश्चितास्तत्र महर्षयस्तु ; संमन्यन्तो धर्ममेवं नरेन्द्र ।
ततोऽशपञ्शपथान्पर्ययेण ; सहैव ते पार्थिव पुत्रपौत्रैः ॥ ०१५ ॥

भृगुरुवाच ॥

प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत् ।
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥ ०१६ ॥

वसिष्ठ उवाच ॥

अस्वाध्यायपरो लोके श्वानं च परिकर्षतु ।
पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥ ०१७ ॥

कश्यप उवाच ॥

सर्वत्र सर्वं पणतु न्यासे लोभं करोतु च ।
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम् ॥ ०१८ ॥

गौतम उवाच ॥

जीवत्वहङ्कृतो बुद्ध्या विपणत्वधमेन सः ।
कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम् ॥ ०१९ ॥

अङ्गिरा उवाच ॥

अशुचिर्ब्रह्मकूटोऽस्तु श्वानं च परिकर्षतु ।
ब्रह्महानिकृतिश्चास्तु यस्ते हरति पुष्करम् ॥ ०२० ॥

धुन्धुमार उवाच ॥

अकृतज्ञोऽस्तु मित्राणां शूद्रायां तु प्रजायतु ।
एकः संपन्नमश्नातु यस्ते हरति पुष्करम् ॥ ०२१ ॥

पूरुरुवाच ॥

चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु ।
श्वशुरात्तस्य वृत्तिः स्याद्यस्ते हरति पुष्करम् ॥ ०२२ ॥

दिलीप उवाच ॥

उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य लोकान्स व्रजतु यस्ते हरति पुष्करम् ॥ ०२३ ॥

शुक्र उवाच ॥

पृष्ठमांसं समश्नातु दिवा गच्छतु मैथुनम् ।
प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् ॥ ०२४ ॥

जमदग्निरुवाच ॥

अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् ।
श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करम् ॥ ०२५ ॥

शिबिरुवाच ॥

अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च ।
तपस्विभिर्विरुध्येत यस्ते हरति पुष्करम् ॥ ०२६ ॥

ययातिरुवाच ॥

अनृतौ जटी व्रतिन्यां वै भार्यायां संप्रजायतु ।
निराकरोतु वेदांश्च यस्ते हरति पुष्करम् ॥ ०२७ ॥

नहुष उवाच ॥

अतिथिं गृहस्थो नुदतु कामवृत्तोऽस्तु दीक्षितः ।
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम्  ॥ ०२८  ॥

अम्बरीष उवाच  ॥

नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जहतु यस्ते हरति पुष्करम्  ॥ ०२९  ॥

नारद उवाच  ॥

गूढोऽज्ञानी बहिः शास्त्रं पठतां विस्वरं पदम् ।
गरीयसोऽवजानातु यस्ते हरति पुष्करम्  ॥ ०३०  ॥

नाभाग उवाच  ॥

अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु ।
शुल्केन कन्यां ददतु यस्ते हरति पुष्करम्  ॥ ०३१  ॥

कविरुवाच  ॥

पदा स गां ताडयतु सूर्यं च प्रति मेहतु ।
शरणागतं च त्यजतु यस्ते हरति पुष्करम्  ॥ ०३२  ॥

विश्वामित्र उवाच  ॥

करोतु भृतकोऽवर्षां राज्ञश्चास्तु पुरोहितः ।
ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम्  ॥ ०३३  ॥

पर्वत उवाच  ॥

ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु ।

शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम् ॥ ०३४ ॥

भरद्वाज उवाच ॥

सर्वपापसमादानं नृशंसे चानृते च यत् ।
तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥ ०३५ ॥

अष्टक उवाच ॥

स राजास्त्वकृतप्रज्ञः कामवृत्तिश्च पापकृत् ।
अधर्मेणानुशास्तूर्वीं यस्ते हरति पुष्करम् ॥ ०३६ ॥

गालव उवाच ॥

पापिष्ठेभ्यस्त्वनर्घार्हः स नरोऽस्तु स्वपापकृत् ।
दत्त्वा दानं कीर्तयतु यस्ते हरति पुष्करम् ॥ ०३७ ॥

अरुन्धत्युवाच ॥

श्वश्र्वापवादं वदतु भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु या ते हरति पुष्करम् ॥ ०३८ ॥

वालखिल्या ऊचुः ॥

एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु ।
धर्मज्ञस्त्यक्तधर्मोऽस्तु यस्ते हरति पुष्करम् ॥ ०३९ ॥

पशुसख उवाच ॥

अग्निहोत्रमनादृत्य सुखं स्वपतु स द्विजः ।
परिव्राड्कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ॥ ०४० ॥

सुरभ्युवाच ॥

बाल्वजेन निदानेन कांस्यं भवतु दोहनम् ।
दुह्येत परवत्सेन या ते हरति पुष्करम् ॥ ०४१ ॥

भीष्म उवाच ॥

ततस्तु तैः शपथैः शप्यमानै ;र्नानाविधैर्बहुभिः कौरवेन्द्र ।
सहस्राक्षो देवराट्संप्रहृष्टः ; समीक्ष्य तं कोपनं विप्रमुख्यम् ॥ ०४२ ॥

अथाब्रवीन्मघवा प्रत्ययं स्वं ; समाभाष्य तमृषिं जातरोषम् ।
ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये ; यत्तन्निबोधेह ममाद्य राजन् ॥ ०४३ ॥

शक्र उवाच ॥

अध्वर्यवे दुहितरं ददातु ; च्छन्दोगे वा चरितब्रह्मचर्ये ।
आथर्वणं वेदमधीत्य विप्रः ; स्नायीत यः पुष्करमाददाति ॥ ०४४ ॥

सर्वान्वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः ।
ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ॥ ०४५ ॥

अगस्त्य उवाच ॥

आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन ।
दीयतां पुष्करं मह्यमेष धर्मः सनातनः ॥ ०४६ ॥

इन्द्र उवाच ॥

न मया भगव.ल्लोभाद्धृतं पुष्करमद्य वै ।
धर्मं तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥ ०४७ ॥

धर्मः श्रुतिसमुत्कर्षो धर्मसेतुरनामयः ।
आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ॥ ०४८ ॥

तदिदं गृह्यतां विद्वन्पुष्करं मुनिसत्तम ।
अतिक्रमं मे भगवन्क्षन्तुमर्हस्यनिन्दित ॥ ०४९ ॥

इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम् ।
जग्राह पुष्करं धीमान्प्रसन्नश्चाभवन्मुनिः ॥ ०५० ॥

प्रययुस्ते ततो भूयस्तीर्थानि वनगोचराः ।
पुण्यतीर्थेषु च तथा गात्राण्याप्लावयन्ति ते ॥ ०५१ ॥

आख्यानं य इदं युक्तः पठेत्पर्वणि पर्वणि ।
न मूर्खं जनयेत्पुत्रं न भवेच्च निराकृतिः ॥ ०५२ ॥

न तमापत्स्पृशेत्काचिन्न ज्वरो न रुजश्च ह ।
विरजाः श्रेयसा युक्तः प्रेत्य स्वर्गमवाप्नुयात् ॥ ०५३ ॥

यश्च शास्त्रमनुध्यायेदृषिभिः परिपालितम् ।
स गच्छेद्ब्रह्मणो लोकमव्ययं च नरोत्तम ॥ ०५४ ॥

---

# छत्रोपानहोत्पत्तिः

## अध्याय ०९७

युधिष्ठिर उवाच ॥

यदिदं श्राद्धधर्मेषु दीयते भरतर्षभ ।
छत्रं चोपानहौ चैव केनैतत्संप्रवर्तितम् ॥ ००१ ॥

कथं चैतत्समुत्पन्नं किमर्थं च प्रदीयते ॥ ००१ ॥

न केवलं श्राद्धधर्मे पुण्यकेष्वपि दीयते ।
एतद्विस्तरतो राजञ्श्रोतुमिच्छामि तत्त्वतः ॥ ००२ ॥

भीष्म उवाच ॥

शृणु राजन्नवहितश्छत्रोपानहविस्तरम् ।
यथैतत्प्रथितं लोके येन चैतत्प्रवर्तितम् ॥ ००३ ॥

यथा चाक्षय्यतां प्राप्तं पुण्यतां च यथा गतम् ।
सर्वमेतदशेषेण प्रवक्ष्यामि जनाधिप ॥ ००४ ॥

इतिहासं पुरावृत्तमिमं शृणु नराधिप ।
जमदग्नेश्च संवादं सूर्यस्य च महात्मनः ॥ ००५ ॥

पुरा स भगवान्साक्षाद्धनुषाक्रीडत प्रभो ।
संधाय संधाय शरांश्चिक्षेप किल भार्गवः ॥ ००६ ॥

तान्क्षिप्तान्रेणुका सर्वांस्तस्येषून्दीप्ततेजसः ।
आनाय्य सा तदा तस्मै प्रादादसकृदच्युत ॥ ००७ ॥

अथ तेन स शब्देन ज्यातलस्य शरस्य च ।
प्रहृष्टः संप्रचिक्षेप सा च प्रत्याजहार तान् ॥ ००८ ॥

ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे ।
स सायकान्द्विजो विद्ध्वा रेणुकामिदमब्रवीत् ॥ ००९ ॥

गच्छानय विशालाक्षि शरानेतान्धनुश्च्युतान् ।
यावदेतान्पुनः सुभ्रु क्षिपामीति जनाधिप ॥ ०१० ॥

सा गच्छत्यन्तरा छायां वृक्षमाश्रित्य भामिनी ।
तस्थौ तस्या हि संतप्तं शिरः पादौ तथैव च ॥ ०११ ॥

स्थिता सा तु मुहूर्तं वै भर्तुः शापभयाच्छुभा ।
ययावानयितुं भूयः सायकानसितेक्षणा ॥ ०१२ ॥

प्रत्याजगाम च शरांस्तानादाय यशस्विनी ॥ ०१२ ॥

सा प्रस्विन्ना सुचार्वङ्गी पद्भ्यां दुःखं नियच्छती ।
उपाजगाम भर्तारं भयाद्भर्तुः प्रवेपती ॥ ०१३ ॥

स तामृषिस्ततः क्रुद्धो वाक्यमाह शुभाननाम् ।
रेणुके किं चिरेण त्वमागतेति पुनः पुनः ॥ ०१४ ॥

रेणुकोवाच ॥

शिरस्तावत्प्रदीप्तं मे पादौ चैव तपोधन ।
सूर्यतेजोनिरुद्धाहं वृक्षच्छायामुपाश्रिता ॥ ०१५ ॥

एतस्मात्कारणाद्ब्रह्मंश्चिरमेतत्कृतं मया ।
एतज्ज्ञात्वा मम विभो मा क्रुधस्त्वं तपोधन ॥ ०१६ ॥

जमदग्निरुवाच ॥

अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ॥ ०१७ ॥

भीष्म उवाच ॥

स विस्फार्य धनुर्दिव्यं गृहीत्वा च बहूञ्शरान् ।
अतिष्ठत्सूर्यमभितो यतो याति ततोमुखः ॥ ०१८ ॥

अथ तं प्रहरिष्यन्तं सूर्योऽभ्येत्य वचोऽब्रवीत् ।
द्विजरूपेण कौन्तेय किं ते सूर्योऽपराध्यते ॥ ०१९ ॥

आदत्ते रश्मिभिः सूर्यो दिवि विद्वंस्ततस्ततः ।
रसं स तं वै वर्षासु प्रवर्षति दिवाकरः ॥ ०२० ॥

ततोऽन्नं जायते विप्र मनुष्याणां सुखावहम् ।
अन्नं प्राणा इति यथा वेदेषु परिपठ्यते ॥ ०२१ ॥

अथाभ्रेषु निगूढश्च रश्मिभिः परिवारितः ।
सप्त द्वीपानिमान्ब्रह्मन्वर्षेणाभिप्रवर्षति ॥ ०२२ ॥

ततस्तदौषधीनां च वीरुधां पत्रपुष्पजम् ।
सर्वं वर्षाभिनिर्वृत्तमन्नं संभवति प्रभो ॥ ०२३ ॥

जातकर्माणि सर्वाणि व्रतोपनयनानि च ।
गोदानानि विवाहाश्च तथा यज्ञसमृद्धयः ॥ ०२४ ॥

सत्राणि दानानि तथा संयोगा वित्तसञ्चयाः ।
अन्नतः संप्रवर्तन्ते यथा त्वं वेत्थ भार्गव ॥ ०२५ ॥

रमणीयानि यावन्ति यावदारम्भकाणि च ।
सर्वमन्नात्प्रभवति विदितं कीर्तयामि ते ॥ ०२६ ॥

सर्वं हि वेत्थ विप्र त्वं यदेतत्कीर्तितं मया ।
प्रसादये त्वा विप्रर्षे किं ते सूर्यो निपात्यते ॥ ०२७ ॥

# छत्रोपानहदानम्

## अध्याय ०९८

युधिष्ठिर उवाच ॥

एवं तदा प्रयाचन्तं भास्करं मुनिसत्तमः ।
जमदग्निर्महातेजाः किं कार्यं प्रत्यपद्यत ॥ ००१ ॥

भीष्म उवाच ॥

तथा प्रयाचमानस्य मुनिरग्निसमप्रभः ।
जमदग्निः शमं नैव जगाम कुरुनन्दन ॥ ००२ ॥

ततः सूर्यो मधुरया वाचा तमिदमब्रवीत् ।
कृताञ्जलिर्विप्ररूपी प्रणम्येदं विशां पते ॥ ००३ ॥

चलं निमित्तं विप्रर्षे सदा सूर्यस्य गच्छतः ।
कथं चलं वेत्स्यसि त्वं सदा यान्तं दिवाकरम् ॥ ००४ ॥

जमदग्निरुवाच ॥

स्थिरं वापि चलं वापि जाने त्वां ज्ञानचक्षुषा ।
अवश्यं विनयाधानं कार्यमद्य मया तव ॥ ००५ ॥

अपराह्णे निमेषार्धं तिष्ठसि त्वं दिवाकर ।

तत्र वेत्स्यामि सूर्य त्वां न मेऽत्रास्ति विचारणा ॥ ००६ ॥

सूर्य उवाच ॥

असंशयं मां विप्रर्षे वेत्स्यसे धन्विनां वर ।
अपकारिणं तु मां विद्धि भगवञ्शरणागतम् ॥ ००७ ॥

भीष्म उवाच ॥

ततः प्रहस्य भगवाञ्जमदग्निरुवाच तम् ।
न भीः सूर्य त्वया कार्या प्रणिपातगतो ह्यसि ॥ ००८ ॥

ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले ।
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च ॥ ००९ ॥

दीप्तिमग्नेः प्रभां मेरोः प्रतापं तपनस्य च ।
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम् ॥ ०१० ॥

भवेत्स गुरुतल्पी च ब्रह्महा च तथा भवेत् ।
सुरापानं च कुर्यात्स यो हन्याच्छरणागतम् ॥ ०११ ॥

एतस्य त्वपनीतस्य समाधिं तात चिन्तय ।
यथा सुखगमः पन्था भवेत्त्वद्रश्मितापितः ॥ ०१२ ॥

भीष्म उवाच ॥

एतावदुक्त्वा स तदा तूष्णीमासीद्भृगूद्वहः ।
अथ सूर्यो ददौ तस्मै छत्रोपानहमाशु वै ॥ ०१३ ॥

सूर्य उवाच ॥

महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके ॥ ०१४ ॥

अद्यप्रभृति चैवैतल्लोके संप्रचरिष्यति ।
पुण्यदानेषु सर्वेषु परमक्षय्यमेव च ॥ ०१५ ॥

भीष्म उवाच ॥

उपानच्छत्रमेतद्वै सूर्येणेह प्रवर्तितम् ।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥ ०१६ ॥

तस्मात्प्रयच्छ विप्रेभ्यश्छत्रोपानहमुत्तमम् ।
धर्मस्ते सुमहान्भावी न मेऽत्रास्ति विचारणा ॥ ०१७ ॥

छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥ ०१८ ॥

स शक्रलोके वसति पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥ ०१९ ॥

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥ ०२० ॥

सोऽपि लोकानवाप्नोति दैवतैरभिपूजितान् ।
गोलोके स मुदा युक्तो वसति प्रेत्य भारत ॥ ०२१ ॥

एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम् ।
छत्रोपानहदानस्य फलं भरतसत्तम ॥ ०२२ ॥

# आरामादिनिर्माणम्

## अध्याय ०९९

युधिष्ठिर उवाच ॥

आरामाणां तडागानां यत्फलं कुरुनन्दन ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ ००१ ॥

भीष्म उवाच ॥

सुप्रदर्शा वनवती चित्रधातुविभूषिता ।
उपेता सर्वबीजैश्च श्रेष्ठा भूमिरिहोच्यते ॥ ००२ ॥

तस्याः क्षेत्रविशेषं च तडागानां निवेशनम् ।
औदकानि च सर्वाणि प्रवक्ष्याम्यनुपूर्वशः ॥ ००३ ॥

तडागानां च वक्ष्यामि कृतानां चापि ये गुणाः ।
त्रिषु लोकेषु सर्वत्र पूजितो यस्तडागवान् ॥ ००४ ॥

अथ वा मित्रसदनं मैत्रं मित्रविवर्धनम् ।
कीर्तिसञ्जननं श्रेष्ठं तडागानां निवेशनम् ॥ ००५ ॥

धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।
तडागं सुकृतं देशे क्षेत्रमेव महाश्रयम् ॥ ००६ ॥

चतुर्विधानां भूतानां तडागमुपलक्षयेत् ।
तडागानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥ ००७ ॥

देवा मनुष्या गन्धर्वाः पितरोरगराक्षसाः ।

स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥ ००८ ॥

तस्मात्तांस्ते प्रवक्ष्यामि तडागे ये गुणाः स्मृताः ।
या च तत्र फलावाप्तिर्ऋषिभिः समुदाहृता ॥ ००९ ॥

वर्षमात्रे तडागे तु सलिलं यस्य तिष्ठति ।
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ॥ ०१० ॥

शरत्काले तु सलिलं तडागे यस्य तिष्ठति ।
गोसहस्रस्य स प्रेत्य लभते फलमुत्तमम् ॥ ०११ ॥

हेमन्तकाले सलिलं तडागे यस्य तिष्ठति ।
स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् ॥ ०१२ ॥

यस्य वै शैशिरे काले तडागे सलिलं भवेत् ।
अग्निष्टोमस्य यज्ञस्य फलमाहुर्मनीषिणः ॥ ०१३ ॥

तडागं सुकृतं यस्य वसन्ते तु महाश्रयम् ।
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥ ०१४ ॥

निदाघकाले पानीयं तडागे यस्य तिष्ठति ।
वाजपेयसमं तस्य फलं वै मुनयो विदुः ॥ ०१५ ॥

स कुलं तारयेत्सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति पानीयं साधवश्च नराः सदा ॥ ०१६ ॥

तडागे यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ ०१७ ॥

यत्पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तडागदस्य तत्सर्वं प्रेत्यानन्त्याय कल्पते ॥ ०१८ ॥

दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ ०१९ ॥

तिलान्ददत पानीयं दीपान्ददत जाग्रत ।
ज्ञातिभिः सह मोदध्वमेतत्प्रेतेषु दुर्लभम् ॥ ०२० ॥

सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ ०२१ ॥

एवमेतत्तडागेषु कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामपि रोपणे ॥ ०२२ ॥

स्थावराणां च भूतानां जातयः षड्प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥ ०२३ ॥

एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् ॥ ०२४ ॥

लभते नाम लोके च पितृभिश्च महीयते ।
देवलोकगतस्यापि नाम तस्य न नश्यति ॥ ०२५ ॥

अतीतानागते चोभे पितृवंशं च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षान्प्ररोपयेत् ॥ ०२६ ॥

तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः ।
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ॥ ०२७ ॥

पुष्पैः सुरगणान्वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथींस्तात पूजयन्ति महीरुहाः ॥ ०२८ ॥

किंनरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान्  ॥ ०२९  ॥

पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ।
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र च  ॥ ०३०  ॥

तस्मात्तडागे वृक्षा वै रोप्याः श्रेयोर्थिना सदा ।
पुत्रवत्परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः  ॥ ०३१  ॥

तडागकृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः  ॥ ०३२  ॥

तस्मात्तडागं कुर्वीत आरामांश्चैव रोपयेत् ।
यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत्  ॥ ०३३  ॥

---

# बलिप्रदानम्

## अध्याय १००

युधिष्ठिर उवाच  ॥

गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ ।
ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव  ॥ ००१  ॥

भीष्म उवाच  ॥

अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप ।

वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥ ००२ ॥

संस्तूय पृथिवीं देवीं वासुदेवः प्रतापवान् ।
पप्रच्छ भरतश्रेष्ठ यदेतत्पृच्छसेऽद्य माम् ॥ ००३ ॥

वासुदेव उवाच ॥

गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा ।
किमवश्यं धरे कार्यं किं वा कृत्वा सुखी भवेत् ॥ ००४ ॥

पृथिव्युवाच ॥

ऋषयः पितरो देवा मनुष्याश्चैव माधव ।
इज्याश्चैवार्चनीयाश्च यथा चैवं निबोध मे ॥ ००५ ॥

सदा यज्ञेन देवांश्च आतिथ्येन च मानवान् ।
छन्दतश्च यथानित्यमर्हान्युञ्जीत नित्यशः ॥ ००६ ॥

तेन ह्यृषिगणाः प्रीता भवन्ति मधुसूदन ॥ ००६ ॥

नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म च ।
कुर्यात्तथैव देवा वै प्रीयन्ते मधुसूदन ॥ ००७ ॥

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितॄणां प्रीतिमाहरन् ॥ ००८ ॥

सिद्धान्नाद्वैश्वदेवं वै कुर्यादग्नौ यथाविधि ।
अग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम् ॥ ००९ ॥

प्रजानां पतये चैव पृथग्घोमो विधीयते ।
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् ॥ ०१० ॥

दक्षिणायां यमायेह प्रतीच्यां वरुणाय च ।
सोमाय चाप्युदीच्यां वै वास्तुमध्ये द्विजातये  ॥ ०११  ॥

धन्वन्तरेः प्रागुदीच्यां प्राच्यां शक्राय माधव ।
मनोर्वै इति च प्राहुर्बलिं द्वारे गृहस्य वै  ॥ ०१२  ॥

मरुद्भ्यो देवताभ्यश्च बलिमन्तर्गृहे हरेत्  ॥ ०१२  ॥

तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत् ।
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं तथा हरेत्  ॥ ०१३  ॥

एवं कृत्वा बलिं सम्यग्दद्याद्भिक्षां द्विजातये ।
अलाभे ब्राह्मणस्याग्नावग्रमुत्क्षिप्य निक्षिपेत्  ॥ ०१४  ॥

यदा श्राद्धं पितृभ्यश्च दातुमिच्छेत मानवः ।
तदा पश्चात्प्रकुर्वीत निवृत्ते श्राद्धकर्मणि  ॥ ०१५  ॥

पितॄन्संतर्पयित्वा तु बलिं कुर्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम्  ॥ ०१६  ॥

ततोऽन्नेनावशेषेण भोजयेदतिथीनपि ।
अर्चापूर्वं महाराज ततः प्रीणाति मानुषान्  ॥ ०१७  ॥

अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ।
आचार्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः ।
इदमस्ति गृहे मह्यमिति नित्यं निवेदयेत्  ॥ ०१९  ॥

ते यद्वदेयुस्तत्कुर्यादिति धर्मो विधीयते ।
गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत्  ॥ ०२०  ॥

राजर्त्विजं स्नातकं च गुरुं श्वशुरमेव च ।
अर्चयेन्मधुपर्केण परिसंवत्सरोषितान्  ॥ ०२१  ॥

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते  ॥ ०२२  ॥

एतांस्तु धर्मान्गार्हस्थान्यः कुर्यादनसूयकः ।
स इहर्द्धिं परां प्राप्य प्रेत्य नाके महीयते  ॥ ०२३  ॥

भीष्म उवाच  ॥

इति भूमेर्वचः श्रुत्वा वासुदेवः प्रतापवान् ।
तथा चकार सततं त्वमप्येवं समाचर  ॥ ०२४  ॥

एवं गृहस्थधर्मं त्वं चेतयानो नराधिप ।
इहलोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि  ॥ ०२५  ॥

---

# दीपादिदानम्

## अध्याय १०१

युधिष्ठिर उवाच  ॥

आलोकदानं नामैतत्कीदृशं भरतर्षभ ।
कथमेतत्समुत्पन्नं फलं चात्र ब्रवीहि मे  ॥ ००१  ॥

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं सुवर्णस्य च भारत ॥ ००२ ॥

तपस्वी कश्चिदभवत्सुवर्णो नाम नामतः ।
वर्णतो हेमवर्णः स सुवर्ण इति पप्रथे ॥ ००३ ॥

कुलशीलगुणोपेतः स्वाध्याये च परं गतः ।
बहून्स्ववंशप्रभवान्समतीतः स्वकैर्गुणैः ॥ ००४ ॥

स कदाचिन्मनुं विप्रो ददर्शोपससर्प च ।
कुशलप्रश्नमन्योन्यं तौ च तत्र प्रचक्रतुः ॥ ००५ ॥

ततस्तौ सिद्धसङ्कल्पौ मेरौ काञ्चनपर्वते ।
रमणीये शिलापृष्ठे सहितौ संन्यषीदताम् ॥ ००६ ॥

तत्र तौ कथयामास्तां कथा नानाविधाश्रयाः ।
ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनाम् ॥ ००७ ॥

सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायंभुवं प्रभुम् ।
हितार्थं सर्वभूतानां प्रश्नं मे वक्तुमर्हसि ॥ ००८ ॥

सुमनोभिर्यदिज्यन्ते दैवतानि प्रजेश्वर ।
किमेतत्कथमुत्पन्नं फलयोगं च शंस मे ॥ ००९ ॥

मनुरुवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शुक्रस्य च बलेश्चैव संवादं वै समागमे ॥ ०१० ॥

बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः ।

समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ॥ ०११ ॥

तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः ।
निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः ॥ ०१२ ॥

कथेयमभवत्तत्र या त्वया परिकीर्तिता ।
सुमनोधूपदीपानां संप्रदाने फलं प्रति ॥ ०१३ ॥

ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम् ।
सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम ॥ ०१४ ॥

प्रदानस्य द्विजश्रेष्ठ तद्भवान्वक्तुमर्हति ॥ ०१४ ॥

शुक्र उवाच ॥

तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम् ।
एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च ॥ ०१५ ॥

सोमस्यात्मा च बहुधा संभूतः पृथिवीतले ।
अमृतं च विषं चैव याश्चान्यास्तुल्यजातयः ॥ ०१६ ॥

अमृतं मनसः प्रीतिं सद्यः पुष्टिं ददाति च ।
मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः ॥ ०१७ ॥

अमृतं मङ्गलं विद्धि महद्विषममङ्गलम् ।
ओषध्यो ह्यमृतं सर्वं विषं तेजोऽग्निसंभवम् ॥ ०१८ ॥

मनो ह्लादयते यस्माच्छ्रियं चापि दधाति ह ।
तस्मात्सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः ॥ ०१९ ॥

देवताभ्यः सुमनसो यो ददाति नरः शुचिः ।

तस्मात्सुमनसः प्रोक्ता यस्मात्तुष्यन्ति देवताः  ॥ ०२०  ॥

यं यमुद्दिश्य दीयेरन्देवं सुमनसः प्रभो ।
मङ्गलार्थं स तेनास्य प्रीतो भवति दैत्यप  ॥ ०२१  ॥

ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च ताः पृथक् ।
ओषध्यो बहुवीर्याश्च बहुरूपास्तथैव च  ॥ ०२२  ॥

यज्ञियानां च वृक्षाणामयज्ञियान्निबोध मे ।
आसुराणि च माल्यानि दैवतेभ्यो हितानि च  ॥ ०२३  ॥

राक्षसानां सुराणां च यक्षाणां च तथा प्रियाः ।
पितॄणां मानुषाणां च कान्ता यास्त्वनुपूर्वशः  ॥ ०२४  ॥

वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्वताश्रयाः ।
अकण्टकाः कण्टकिन्यो गन्धरूपरसान्विताः  ॥ ०२५  ॥

द्विविधो हि स्मृतो गन्ध इष्टोऽनिष्टश्च पुष्पजः ।
इष्टगन्धानि देवानां पुष्पाणीति विभावयेत्  ॥ ०२६  ॥

अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः ।
तेषां पुष्पाणि देवानामिष्टानि सततं प्रभो  ॥ ०२७  ॥

जलजानि च माल्यानि पद्मादीनि च यानि च ।
गन्धर्वनागयक्षेभ्यस्तानि दद्याद्विचक्षणः  ॥ ०२८  ॥

ओषध्यो रक्तपुष्पाश्च कटुकाः कण्टकान्विताः ।
शत्रूणामभिचारार्थमथर्वसु निदर्शिताः  ॥ ०२९  ॥

तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः ।
रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवोपहारयेत्  ॥ ०३०  ॥

मनोहृदयनन्दिन्यो विमर्दे मधुराश्च याः ।
चारुरूपाः सुमनसो मानुषाणां स्मृता विभो ॥ ०३१ ॥

न तु श्मशानसंभूता न देवायतनोद्भवाः ।
संनयेत्पुष्टियुक्तेषु विवाहेषु रहःसु च ॥ ०३२ ॥

गिरिसानुरुहाः सौम्या देवानामुपपादयेत् ।
प्रोक्षिताभ्युक्षिताः सौम्या यथायोगं यथास्मृति ॥ ०३३ ॥

गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः ।
नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ॥ ०३४ ॥

सद्यः प्रीणाति देवान्वै ते प्रीता भावयन्त्युत ।
सङ्कल्पसिद्धा मर्त्यानामीप्सितैश्च मनोरथैः ॥ ०३५ ॥

देवाः प्रीणन्ति सततं मानिता मानयन्ति च ।
अवज्ञातावधूताश्च निर्दहन्त्यधमान्नरान् ॥ ०३६ ॥

अतऊर्ध्वं प्रवक्ष्यामि धूपदानविधौ फलम् ।
धूपांश्च विविधान्साधूनसाधूंश्च निबोध मे ॥ ०३७ ॥

निर्यासः सरलश्चैव कृत्रिमश्चैव ते त्रयः ।
इष्टानिष्टो भवेद्गन्धस्तन्मे विस्तरतः शृणु ॥ ०३८ ॥

निर्यासाः सल्लकीवर्ज्या देवानां दयितास्तु ते ।
गुग्गुलुः प्रवरस्तेषां सर्वेषामिति निश्चयः ॥ ०३९ ॥

अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां सल्लकीजश्च काङ्क्षितो यश्च तद्विधः ॥ ०४० ॥

अथ सर्जरसादीनां गन्धैः पार्थिवदारवैः ।
फाणितासवसंयुक्तैर्मनुष्याणां विधीयते ॥ ०४१ ॥

देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः ।
येऽन्ये वैहारिकास्ते तु मानुषाणामिति स्मृताः ॥ ०४२ ॥

य एवोक्ताः सुमनसां प्रदाने गुणहेतवः ।
धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्धनाः ॥ ०४३ ॥

दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेया यादृशाश्च ते ॥ ०४४ ॥

ज्योतिस्तेजः प्रकाशश्चाप्यूर्ध्वगं चापि वर्ण्यते ।
प्रदानं तेजसां तस्मात्तेजो वर्धयते नृणाम् ॥ ०४५ ॥

अन्धं तमस्तमिस्रं च दक्षिणायनमेव च ।
उत्तरायणमेतस्माज्ज्योतिर्दानं प्रशस्यते ॥ ०४६ ॥

यस्मादूर्ध्वगमेतत्तु तमसश्चैव भेषजम् ।
तस्मादूर्ध्वगतेर्दाता भवेदिति विनिश्चयः ॥ ०४७ ॥

देवास्तेजस्विनो यस्मात्प्रभावन्तः प्रकाशकाः ।
तामसा राक्षसाश्चेति तस्माद्दीपः प्रदीयते ॥ ०४८ ॥

आलोकदानाच्चक्षुष्मान्प्रभायुक्तो भवेन्नरः ।
तान्दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत् ॥ ०४९ ॥

दीपहर्ता भवेदन्धस्तमोगतिरसुप्रभः ।
दीपप्रदः स्वर्गलोके दीपमाली विराजते ॥ ०५० ॥

हविषा प्रथमः कल्पो द्वितीयस्त्वौषधीरसैः ।

वसामेदोस्थिनिर्यासैर्न कार्यः पुष्टिमिच्छता ॥ ०५१ ॥

गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे ।
दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ॥ ०५२ ॥

कुलोद्योतो विशुद्धात्मा प्रकाशत्वं च गच्छति ।
ज्योतिषां चैव सालोक्यं दीपदाता नरः सदा ॥ ०५३ ॥

बलिकर्मसु वक्ष्यामि गुणान्कर्मफलोदयान् ।
देवयक्षोरगनृणां भूतानामथ रक्षसाम् ॥ ०५४ ॥

येषां नाग्रभुजो विप्रा देवतातिथिबालकाः ।
राक्षसानेव तान्विद्धि निर्वषट्कारमङ्गलान् ॥ ०५५ ॥

तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम् ।
शिरसा प्रणतश्चापि हरेद्बलिमतन्द्रितः ॥ ०५६ ॥

गृह्या हि देवता नित्यमाशंसन्ति गृहात्सदा ।
बाह्याश्चागन्तवो येऽन्ये यक्षराक्षसपन्नगाः ॥ ०५७ ॥

इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
ते प्रीताः प्रीणयन्त्येतानायुषा यशसा धनैः ॥ ०५८ ॥

बलयः सह पुष्पैस्तु देवानामुपहारयेत् ।
दधिद्रप्सयुताः पुण्याः सुगन्धाः प्रियदर्शनाः ॥ ०५९ ॥

कार्या रुधिरमांसाढ्या बलयो यक्षरक्षसाम् ।
सुरासवपुरस्कारा लाजोल्लेपनभूषिताः ॥ ०६० ॥

नागानां दयिता नित्यं पद्मोत्पलविमिश्रिताः ।
तिलान्गुडसुसंपन्नान्भूतानामुपहारयेत् ॥ ०६१ ॥

अग्रदाताग्रभोगी स्याद्बलवर्णसमन्वितः ।
तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम्  ॥ ०६२  ॥

ज्वलत्यहरहो वेश्म याश्चास्य गृहदेवताः ।
ताः पूज्या भूतिकामेन प्रसृताग्रप्रदायिना  ॥ ०६३  ॥

इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः ।
सुवर्णाय मनुः प्राह सुवर्णो नारदाय च  ॥ ०६४  ॥

नारदोऽपि मयि प्राह गुणानेतान्महाद्युते ।
त्वमप्येतद्विदित्वेह सर्वमाचर पुत्रक  ॥ ०६५  ॥

---

# पुष्पादिदानफलम्

## अध्याय १०२

युधिष्ठिर उवाच  ॥

श्रुतं मे भरतश्रेष्ठ पुष्पधूपप्रदायिनाम् ।
फलं बलिविधाने च तद्भूयो वक्तुमर्हसि  ॥ ००१  ॥

धूपप्रदानस्य फलं प्रदीपस्य तथैव च ।
बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः  ॥ ००२  ॥

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नहुषं प्रति संवादमगस्त्यस्य भृगोस्तथा ॥ ००३ ॥

नहुषो हि महाराज राजर्षिः सुमहातपाः ।
देवराज्यमनुप्राप्तः सुकृतेनेह कर्मणा ॥ ००४ ॥

तत्रापि प्रयतो राजन्नहुषस्त्रिदिवे वसन् ।
मानुषीश्चैव दिव्याश्च कुर्वाणो विविधाः क्रियाः ॥ ००५ ॥

मानुष्यस्तत्र सर्वाः स्म क्रियास्तस्य महात्मनः ।
प्रवृत्तास्त्रिदिवे राजन्दिव्याश्चैव सनातनाः ॥ ००६ ॥

अग्निकार्याणि समिधः कुशाः सुमनसस्तथा ।
बलयश्चान्नलाजाभिर्धूपनं दीपकर्म च ॥ ००७ ॥

सर्वं तस्य गृहे राज्ञः प्रावर्तत महात्मनः ।
जपयज्ञान्मनोयज्ञांस्त्रिदिवेऽपि चकार सः ॥ ००८ ॥

दैवतान्यर्चयंश्चापि विधिवत्स सुरेश्वरः ।
सर्वाण्येव यथान्यायं यथापूर्वमरिंदम ॥ ००९ ॥

अथेन्द्रस्य भविष्यत्वादहङ्कारस्तमाविशत् ।
सर्वाश्चैव क्रियास्तस्य पर्यहीयन्त भूपते ॥ ०१० ॥

स ऋषीन्वाहयामास वरदानमदान्वितः ।
परिहीनक्रियश्चापि दुर्बलत्वमुपेयिवान् ॥ ०११ ॥

तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान् ।
अहङ्काराभिभूतस्य सुमहानत्यवर्तत ॥ ०१२ ॥

अथ पर्यायश ऋषीन्वाहनायोपचक्रमे ।

पर्यायश्चाप्यगस्त्यस्य समपद्यत भारत ॥ ०१३ ॥

अथागम्य महातेजा भृगुर्ब्रह्मविदां वरः ।
अगस्त्यमाश्रमस्थं वै समुपेत्येदमब्रवीत् ॥ ०१४ ॥

एवं वयमसत्कारं देवेन्द्रस्यास्य दुर्मतेः ।
नहुषस्य किमर्थं वै मर्षयाम महामुने ॥ ०१५ ॥

अगस्त्य उवाच ॥

कथमेष मया शक्यः शप्तुं यस्य महामुने ।
वरदेन वरो दत्तो भवतो विदितश्च सः ॥ ०१६ ॥

यो मे दृष्टिपथं गच्छेत्स मे वश्यो भवेदिति ।
इत्यनेन वरो देवाद्याचितो गच्छता दिवम् ॥ ०१७ ॥

एवं न दग्धः स मया भवता च न संशयः ।
अन्येनाप्यृषिमुख्येन न शप्तो न च पातितः ॥ ०१८ ॥

अमृतं चैव पानाय दत्तमस्मै पुरा विभो ।
महात्मने तदर्थं च नास्माभिर्विनिपात्यते ॥ ०१९ ॥

प्रायच्छत वरं देवः प्रजानां दुःखकारकम् ।
द्विजेष्वधर्मयुक्तानि स करोति नराधमः ॥ ०२० ॥

अत्र यत्प्राप्तकालं नस्तद्ब्रूहि वदतां वर ।
भवांश्चापि यथा ब्रूयात्कुर्वीमहि तथा वयम् ॥ ०२१ ॥

भृगुरुवाच ॥

पितामहनियोगेन भवन्तमहमागतः ।

प्रतिकर्तुं बलवति नहुषे दर्पमास्थिते ॥ ०२२ ॥

अद्य हि त्वा सुदुर्बुद्धी रथे योक्ष्यति देवराट् ।
अद्यैनमहमुद्वृत्तं करिष्येऽनिन्द्रमोजसा ॥ ०२३ ॥

अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुम् ।
सञ्चाल्य पापकर्माणमिन्द्रस्थानात्सुदुर्मतिम् ॥ ०२४ ॥

अद्य चासौ कुदेवेन्द्रस्त्वां पदा धर्षयिष्यति ।
दैवोपहतचित्तत्वादात्मनाशाय मन्दधीः ॥ ०२५ ॥

व्युत्क्रान्तधर्मं तमहं धर्षणामर्षितो भृशम् ।
अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्रुहम् ॥ ०२६ ॥

तत एनं सुदुर्बुद्धिं धिक्शब्दाभिहतत्विषम् ।
धरण्यां पातयिष्यामि प्रेक्षतस्ते महामुने ॥ ०२७ ॥

नहुषं पापकर्माणमैश्वर्यबलमोहितम् ।
यथा च रोचते तुभ्यं तथा कर्तास्म्यहं मुने ॥ ०२८ ॥

एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः ।
अगस्त्यः परमप्रीतो बभूव विगतज्वरः ॥ ०२९ ॥

# दीपादिदानफलम्

## अध्याय १०३

युधिष्ठिर उवाच ॥

कथं स वै विपन्नश्च कथं वै पातितो भुवि ।
कथं चानिन्द्रतां प्राप्तस्तद्भवान्वक्तुमर्हति ॥ ००१ ॥

भीष्म उवाच ॥

एवं तयोः संवदतोः क्रियास्तस्य महात्मनः ।
सर्वा एवाभ्यवर्तन्त या दिव्या याश्च मानुषाः ॥ ००२ ॥

तथैव दीपदानानि सर्वोपकरणानि च ।
बलिकर्म च यच्चान्यदुत्सेकाश्च पृथग्विधाः ॥ ००३ ॥

सर्वास्तस्य समुत्पन्ना देवराज्ञो महात्मनः ॥ ००३ ॥

देवलोके नृलोके च सदाचारा बुधैः स्मृताः ।
ते चेद्भवन्ति राजेन्द्र ऋध्यन्ते गृहमेधिनः ॥ ००४ ॥

धूपप्रदानैर्दीपैश्च नमस्कारैस्तथैव च ॥ ००४ ॥

यथा सिद्धस्य चान्नस्य द्विजायाग्रं प्रदीयते ।
बलयश्च गृहोद्देशे अतः प्रीयन्ति देवताः ॥ ००५ ॥

यथा च गृहिणस्तोषो भवेद्वै बलिकर्मणा ।
तथा शतगुणा प्रीतिर्देवतानां स्म जायते ॥ ००६ ॥

एवं धूपप्रदानं च दीपदानं च साधवः ।

प्रशंसन्ति नमस्कारैर्युक्तमात्मगुणावहम् ॥ ००७ ॥

स्नानेनाद्भिश्च यत्कर्म क्रियते वै विपश्चिता ।
नमस्कारप्रयुक्तेन तेन प्रीयन्ति देवताः ॥ ००८ ॥

गृह्याश्च देवताः सर्वाः प्रीयन्ते विधिनार्चिताः ॥ ००८ ॥

इत्येतां बुद्धिमास्थाय नहुषः स नरेश्वरः ।
सुरेन्द्रत्वं महत्प्राप्य कृतवानेतदद्भुतम् ॥ ००९ ॥

कस्यचित्त्वथ कालस्य भाग्यक्षय उपस्थिते ।
सर्वमेतदवज्ञाय न चकारैतदीदृशम् ॥ ०१० ॥

ततः स परिहीणोऽभूत्सुरेन्द्रो बलिकर्मतः ।
धूपदीपोदकविधिं न यथावच्चकार ह ॥ ०११ ॥

ततोऽस्य यज्ञविषयो रक्षोभिः पर्यबाध्यत ॥ ०११ ॥

अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव ह ।
द्रुतं सरस्वतीकूलात्स्मयन्निव महाबलः ॥ ०१२ ॥

ततो भृगुर्महातेजा मैत्रावरुणिमब्रवीत् ।
निमीलयस्व नयने जटा यावद्विशामि ते ॥ ०१३ ॥

स्थाणुभूतस्य तस्याथ जटाः प्राविशदच्युतः ।
भृगुः स सुमहातेजाः पातनाय नृपस्य ह ॥ ०१४ ॥

ततः स देवराड्प्राप्तस्तमृषिं वाहनाय वै ।
ततोऽगस्त्यः सुरपतिं वाक्यमाह विशां पते ॥ ०१५ ॥

योजयस्वेन्द्र मां क्षिप्रं कं च देशं वहामि ते ।

यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप ॥ ०१६ ॥

इत्युक्तो नहुषस्तेन योजयामास तं मुनिम् ।
भृगुस्तस्य जटासंस्थो बभूव हृषितो भृशम् ॥ ०१७ ॥

न चापि दर्शनं तस्य चकार स भृगुस्तदा ।
वरदानप्रभावज्ञो नहुषस्य महात्मनः ॥ ०१८ ॥

न चुकोप स चागस्त्यो युक्तोऽपि नहुषेण वै ।
तं तु राजा प्रतोदेन चोदयामास भारत ॥ ०१९ ॥

न चुकोप स धर्मात्मा ततः पादेन देवराट् ।
अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः ॥ ०२० ॥

तस्मिञ्शिरस्यभिहते स जटान्तर्गतो भृगुः ।
शशाप बलवत्क्रुद्धो नहुषं पापचेतसम् ॥ ०२१ ॥

भृगुरुवाच ॥

यस्मात्पदाहनः क्रोधाच्छिरसीमं महामुनिम् ।
तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्मते ॥ ०२२ ॥

इत्युक्तः स तदा तेन सर्पो भूत्वा पपात ह ।
अदृष्टेनाथ भृगुणा भूतले भरतर्षभ ॥ ०२३ ॥

भृगुं हि यदि सोऽद्राक्षीन्नहुषः पृथिवीपते ।
न स शक्तोऽभविष्यद्वै पातने तस्य तेजसा ॥ ०२४ ॥

स तु तैस्तैः प्रदानैश्च तपोभिर्नियमैस्तथा ।
पतितोऽपि महाराज भूतले स्मृतिमानभूत् ॥ ०२५ ॥

प्रसादयामास भृगुं शापान्तो मे भवेदिति ॥ ०२५ ॥

ततोऽगस्त्यः कृपाविष्टः प्रासादयत तं भृगुम् ।
शापान्तार्थं महाराज स च प्रादात्कृपान्वितः ॥ ०२६ ॥

भृगुरुवाच ॥

राजा युधिष्ठिरो नाम भविष्यति कुरूद्वहः ।
स त्वां मोक्षयिता शापादित्युक्त्वान्तरधीयत ॥ ०२७ ॥

अगस्त्योऽपि महातेजाः कृत्वा कार्यं शतक्रतोः ।
स्वमाश्रमपदं प्रायात्पूज्यमानो द्विजातिभिः ॥ ०२८ ॥

नहुषोऽपि त्वया राजंस्तस्माच्छापात्समुद्धृतः ।
जगाम ब्रह्मसदनं पश्यतस्ते जनाधिप ॥ ०२९ ॥

तदा तु पातयित्वा तं नहुषं भूतले भृगुः ।
जगाम ब्रह्मसदनं ब्रह्मणे च न्यवेदयत् ॥ ०३० ॥

ततः शक्रं समानाय्य देवानाह पितामहः ।
वरदानान्मम सुरा नहुषो राज्यमाप्तवान् ॥ ०३१ ॥

स चागस्त्येन क्रुद्धेन भ्रंशितो भूतलं गतः ॥ ०३१ ॥

न च शक्यं विना राज्ञा सुरा वर्तयितुं क्वचित् ।
तस्मादयं पुनः शक्रो देवराज्येऽभिषिच्यताम् ॥ ०३२ ॥

एवं संभाषमाणं तु देवाः पार्थ पितामहम् ।
एवमस्त्विति संहृष्टाः प्रत्यूचुस्ते पितामहम् ॥ ०३३ ॥

सोऽभिषिक्तो भगवता देवराज्येन वासवः ।

ब्रह्मणा राजशार्दूल यथापूर्वं व्यरोचत ॥ ०३४ ॥

एवमेतत्पुरावृत्तं नहुषस्य व्यतिक्रमात् ।
स च तैरेव संसिद्धो नहुषः कर्मभिः पुनः ॥ ०३५ ॥

तस्माद्दीपाः प्रदातव्याः सायं वै गृहमेधिभिः ।
दिव्यं चक्षुरवाप्नोति प्रेत्य दीपप्रदायकः ॥ ०३६ ॥

पूर्णचन्द्रप्रतीकाशा दीपदाश्च भवन्त्युत ॥ ०३६ ॥

यावदक्षिनिमेषाणि ज्वलते तावतीः समाः ।
रूपवान्धनवांश्चापि नरो भवति दीपदः ॥ ०३७ ॥

---

# ब्रह्मस्वहरणम्

# अध्याय १०४

युधिष्ठिर उवाच ॥

ब्राह्मणस्वानि ये मन्दा हरन्ति भरतर्षभ ।
नृशंसकारिणो मूढाः क्व ते गच्छन्ति मानवाः ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चण्डालस्य च संवादं क्षत्रबन्धोश्च भारत ॥ ००२ ॥

राजन्य उवाच ॥

वृद्धरूपोऽसि चण्डाल बालवच्च विचेष्टसे ।
श्वखराणां रजःसेवी कस्मादुद्विजसे गवाम् ॥ ००३ ॥

साधुभिर्गर्हितं कर्म चण्डालस्य विधीयते ।
कस्माद्गोरजसा ध्वस्तमपां कुण्डे निषिञ्चसि ॥ ००४ ॥

चण्डाल उवाच ॥

ब्राह्मणस्य गवां राजन्ह्रियतीनां रजः पुरा ।
सोममुद्ध्वंसयामास तं सोमं येऽपिबन्द्विजाः ॥ ००५ ॥

दीक्षितश्च स राजापि क्षिप्रं नरकमाविशत् ।
सह तैर्याजकैः सर्वैर्ब्रह्मस्वमुपजीव्य तत् ॥ ००६ ॥

येऽपि तत्रापिबन्क्षीरं घृतं दधि च मानवाः ।
ब्राह्मणाः सहराजन्याः सर्वे नरकमाविशन् ॥ ००७ ॥

जघ्नुस्ताः पयसा पुत्रांस्तथा पौत्रान्विधुन्वतीः ।
पशूनवेक्षमाणाश्च साधुवृत्तेन दंपती ॥ ००८ ॥

अहं तत्रावसं राजन्ब्रह्मचारी जितेन्द्रियः ।
तासां मे रजसा ध्वस्तं भैक्षमासीन्नराधिप ॥ ००९ ॥

चण्डालोऽहं ततो राजन्भुक्त्वा तदभवं मृतः ।
ब्रह्मस्वहारी च नृपः सोऽप्रतिष्ठां गतिं ययौ ॥ ०१० ॥

तस्माद्धरेन्न विप्रस्वं कदाचिदपि किञ्चन ।
ब्रह्मस्वरजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम् ॥ ०११ ॥

तस्मात्सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता ।

विक्रयं हीह सोमस्य गर्हयन्ति मनीषिणः ॥ ०१२ ॥

ये चैनं क्रीणते राजन्ये च विक्रीणते जनाः ।
ते तु वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः ॥ ०१३ ॥

सोमं तु रजसा ध्वस्तं विक्रीयाद्बुद्धिपूर्वकम् ।
श्रोत्रियो वार्धुषी भूत्वा चिररात्राय नश्यति ॥ ०१४ ॥

नरकं त्रिंशतं प्राप्य श्वविष्ठामुपजीवति ॥ ०१४ ॥

श्वचर्यामतिमानं च सखिदारेषु विप्लवम् ।
तुलयाधारयद्धर्मो ह्यतिमानोऽतिरिच्यते ॥ ०१५ ॥

श्वानं वै पापिनं पश्य विवर्णं हरिणं कृशम् ।
अतिमानेन भूतानामिमां गतिमुपागतम् ॥ ०१६ ॥

अहं वै विपुले जातः कुले धनसमन्विते ।
अन्यस्मिञ्जन्मनि विभो ज्ञानविज्ञानपारगः ॥ ०१७ ॥

अभवं तत्र जानानो ह्येतान्दोषान्मदात्तदा ।
संरब्ध एव भूतानां पृष्ठमांसान्यभक्षयम् ॥ ०१८ ॥

सोऽहं तेन च वृत्तेन भोजनेन च तेन वै ।
इमामवस्थां संप्राप्तः पश्य कालस्य पर्ययम् ॥ ०१९ ॥

आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितम् ।
धावमानं सुसंरब्धं पश्य मां रजसान्वितम् ॥ ०२० ॥

स्वाध्यायैस्तु महत्पापं तरन्ति गृहमेधिनः ।
दानैः पृथग्विधैश्चापि यथा प्राहुर्मनीषिणः ॥ ०२१ ॥

तथा पापकृतं विप्रमाश्रमस्थं महीपते ।
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्त्युत ॥ ०२२ ॥

अहं तु पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ।
निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत ॥ ०२३ ॥

जातिस्मरत्वं तु मम केनचित्पूर्वकर्मणा ।
शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप ॥ ०२४ ॥

त्वमिमं मे प्रपन्नाय संशयं ब्रूहि पृच्छते ।
चण्डालत्वात्कथमहं मुच्येयमिति सत्तम ॥ ०२५ ॥

राजन्य उवाच ॥

चण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि ।
ब्राह्मणार्थे त्यजन्प्राणान्गतिमिष्टामवाप्स्यसि ॥ ०२६ ॥

दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम् ।
हुत्वा प्राणान्प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥ ०२७ ॥

भीष्म उवाच ॥

इत्युक्तः स तदा राजन्ब्रह्मस्वार्थे परंतप ।
हुत्वा रणमुखे प्राणान्गतिमिष्टामवाप ह ॥ ०२८ ॥

तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ ।
यदीच्छसि महाबाहो शाश्वतीं गतिमुत्तमाम् ॥ ०२९ ॥

# हस्तिकूटम्

## अध्याय १०५

युधिष्ठिर उवाच ॥

एको लोकः सुकृतिनां सर्वे त्वाहो पितामह ।
उत तत्रापि नानात्वं तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः ।
पुण्यान्पुण्यकृतो यान्ति पापान्पापकृतो जनाः ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य मुनेस्तात संवादं वासवस्य च ॥ ००३ ॥

ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः ।
महावने हस्तिशिशुं परिद्यूनममातृकम् ॥ ००४ ॥

तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः ।
स तु दीर्घेण कालेन बभूवातिबलो महान् ॥ ००५ ॥

तं प्रभिन्नं महानागं प्रस्रुतं सर्वतो मदम् ।
धृतराष्ट्रस्य रूपेण शक्रो जग्राह हस्तिनम् ॥ ००६ ॥

ह्रियमाणं तु तं दृष्ट्वा गौतमः संशितव्रतः ।
अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ॥ ००७ ॥

मा मे हार्षीर्हस्तिनं पुत्रमेनं; दुःखात्पुष्टं धृतराष्ट्राकृतज्ञ ।
मित्रं सतां सप्तपदं वदन्ति; मित्रद्रोहो नैव राजन्स्पृशेत्त्वाम् ॥ ००८ ॥

इध्मोदकप्रदातारं शून्यपालकमाश्रमे ।
विनीतमाचार्यकुले सुयुक्तं गुरुकर्मणि ॥ ००९ ॥

शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम ।
न मे विक्रोशतो राजन्हर्तुमर्हसि कुञ्जरम् ॥ ०१० ॥

धृतराष्ट्र उवाच ॥

गवां सहस्रं भवते ददामि ; दासीशतं निष्कशतानि पञ्च ।
अन्यच्च वित्तं विविधं महर्षे ; किं ब्राह्मणस्येह गजेन कृत्यम् ॥ ०११ ॥

गौतम उवाच ॥

त्वामेव गावोऽभि भवन्तु राज ;न्दास्यः सनिष्का विविधं च रत्नम् ।
अन्यच्च वित्तं विविधं नरेन्द्र ; किं ब्राह्मणस्येह धनेन कृत्यम् ॥ ०१२ ॥

धृतराष्ट्र उवाच ॥

ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं ; राजन्यानां नागकुलानि विप्र ।
स्वं वाहनं नयतो नास्त्यधर्मो ; नागश्रेष्ठाद्गौतमास्मान्निवर्त ॥ ०१३ ॥

गौतम उवाच ॥

यत्र प्रेतो नन्दति पुण्यकर्मा ; यत्र प्रेतः शोचति पापकर्मा ।
वैवस्वतस्य सदने महात्मन ;स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०१४ ॥

धृतराष्ट्र उवाच ॥

ये निष्क्रिया नास्तिकाः श्रद्दधानाः ; पापात्मान इन्द्रियार्थे निविष्टाः ।
यमस्य ते यातनां प्राप्नुवन्ति ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०१५ ॥

गौतम उवाच ॥

वैवस्वती संयमनी जनानां ; यत्रानृतं नोच्यते यत्र सत्यम् ।
यत्राबला बलिनं यातयन्ति ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०१६ ॥

धृतराष्ट्र उवाच ॥

ज्येष्ठां स्वसारं पितरं मातरं च ; गुरुं यथा मानयन्तश्चरन्ति ।
तथाविधानामेष लोको महर्षे ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०१७ ॥

गौतम उवाच ॥

मन्दाकिनी वैश्रवणस्य राज्ञो ; महाभोगा भोगिजनप्रवेश्या ।
गन्धर्वयक्षैरप्सरोभिश्च जुष्टा ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०१८ ॥

धृतराष्ट्र उवाच ॥

अतिथिव्रताः सुव्रता ये जना वै ; प्रतिश्रयं ददति ब्राह्मणेभ्यः ।
शिष्टाशिनः संविभज्याश्रितांश्च ; मन्दाकिनीं तेऽपि विभूषयन्ति ॥ ०१९ ॥

गौतम उवाच ॥

मेरोरग्रे यद्वनं भाति रम्यं ; सुपुष्पितं किंनरगीतजुष्टम् ।
सुदर्शना यत्र जम्बूर्विशाला ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०२० ॥

धृतराष्ट्र उवाच ॥

ये ब्राह्मणा मृदवः सत्यशीला ; बहुश्रुताः सर्वभूताभिरामाः ।
येऽधीयन्ते सेतिहासं पुराणं ; मध्वाहुत्या जुह्वति च द्विजेभ्यः ॥ ०२१ ॥

तथाविधानामेष लोको महर्षे ; परं गन्ता धृतराष्ट्रो न तत्र ।
यद्विद्यते विदितं स्थानमस्ति ; तद्ब्रूहि त्वं त्वरितो ह्येष यामि ॥ ०२२ ॥

गौतम उवाच ॥

सुपुष्पितं किंनरराजजुष्टं ; प्रियं वनं नन्दनं नारदस्य ।
गन्धर्वाणामप्सरसां च सद्म ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०२३ ॥

धृतराष्ट्र उवाच ॥

ये नृत्तगीतकुशला जनाः सदा ; ह्ययाचमानाः सहिताश्चरन्ति ।
तथाविधानामेष लोको महर्षे ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०२४ ॥

गौतम उवाच ॥

यत्रोत्तराः कुरवो भान्ति रम्या ; देवैः सार्धं मोदमाना नरेन्द्र ।
यत्राग्नियौनाश्च वसन्ति विप्रा ; ह्ययोनयः पर्वतयोनयश्च ॥ ०२५ ॥

यत्र शक्रो वर्षति सर्वकामा ;न्यत्र स्त्रियः कामचाराश्चरन्ति ।
यत्र चेर्ष्या नास्ति नारीनराणां ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०२६ ॥

धृतराष्ट्र उवाच ॥

ये सर्वभूतेषु निवृत्तकामा ; अमांसादा न्यस्तदण्डाश्चरन्ति ।
न हिंसन्ति स्थावरं जङ्गमं च ; भूतानां ये सर्वभूतात्मभूताः ॥ ०२७ ॥

निराशिषो निर्ममा वीतरागा ; लाभालाभे तुल्यनिन्दाप्रशंसाः ।
तथाविधानामेष लोको महर्षे ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०२८ ॥

गौतम उवाच ॥

ततः परं भान्ति लोकाः सनातनाः ; सुपुण्यगन्धा निर्मला वीतशोकाः ।
सोमस्य राज्ञः सदने महात्मन ;स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०२९ ॥

धृतराष्ट्र उवाच ॥

ये दानशीला न प्रतिगृह्णते सदा ; न चाप्यर्थानाददते परेभ्यः ।
येषामदेयमर्हते नास्ति किं चि ;त्सर्वातिथ्याः सुप्रसादा जनाश्च ॥ ०३० ॥

ये क्षन्तारो नाभिजल्पन्ति चान्या ;ञ्शक्ता भूत्वा सततं पुण्यशीलाः ।
तथाविधानामेष लोको महर्षे ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०३१ ॥

गौतम उवाच ॥

ततः परं भान्ति लोकाः सनातना ; विरजसो वितमस्का विशोकाः ।
आदित्यस्य सुमहान्तः सुवृत्ता ;स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०३२ ॥

धृतराष्ट्र उवाच ॥

स्वाध्यायशीला गुरुशुश्रूषणे रता ;स्तपस्विनः सुव्रताः सत्यसंधाः ।
आचार्याणामप्रतिकूलभाषिणो ; नित्योत्थिता गुरुकर्मस्वचोद्याः ॥ ०३३ ॥

तथाविधानामेष लोको महर्षे ; विशुद्धानां भावितवाङ्मतीनाम् ।
सत्ये स्थितानां वेदविदां महात्मनां ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०३४ ॥

गौतम उवाच ॥

ततः परे भान्ति लोकाः सनातनाः ; सुपुण्यगन्धा विरजा विशोकाः ।
वरुणस्य राज्ञः सदने महात्मन ;स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०३५ ॥

धृतराष्ट्र उवाच ॥

चातुर्मास्यैर्ये यजन्ते जनाः सदा ; तथेष्टीनां दशशतं प्राप्नुवन्ति ।
ये चाग्निहोत्रं जुह्वति श्रद्दधाना ; यथान्यायं त्रीणि वर्षाणि विप्राः ॥ ०३६ ॥

स्वदारिणां धर्मधुरे महात्मनां ; यथोचिते वर्त्मनि सुस्थितानाम् ।
धर्मात्मनामुद्वहतां गतिं तां ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०३७ ॥

गौतम उवाच ॥

इन्द्रस्य लोका विरजा विशोका ; दुरन्वयाः काङ्क्षिता मानवानाम् ।
तस्याहं ते भवने भूरितेजसो ; राजन्निमं हस्तिनं यातयिष्ये ॥ ०३८ ॥

धृतराष्ट्र उवाच ॥

शतवर्षजीवी यश्च शूरो मनुष्यो ; वेदाध्यायी यश्च यज्वाप्रमत्तः ।
एते सर्वे शक्रलोकं व्रजन्ति ; परं गन्ता धृतराष्ट्रो न तत्र ॥ ०३९ ॥

गौतम उवाच ॥

प्राजापत्याः सन्ति लोका महान्तो ; नाकस्य पृष्ठे पुष्कला वीतशोकाः ।
मनीषिताः सर्वलोकोद्भवानां ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०४० ॥

धृतराष्ट्र उवाच ॥

ये राजानो राजसूयाभिषिक्ता ; धर्मात्मानो रक्षितारः प्रजानाम् ।
ये चाश्वमेधावभृथाप्लुताङ्गा ;स्तेषां लोका धृतराष्ट्रो न तत्र ॥ ०४१ ॥

गौतम उवाच ॥

ततः परं भान्ति लोकाः सनातनाः ; सुपुण्यगन्धा विरजा वीतशोकाः ।
तस्मिन्नहं दुर्लभे त्वाप्रधृष्ये ; गवां लोके हस्तिनं यातयिष्ये ॥ ०४२ ॥

धृतराष्ट्र उवाच ॥

यो गोसहस्री शतदः समां समां ; यो गोशती दश दद्याच्च शक्त्या ।
तथा दशभ्यो यश्च दद्यादिहैकां ; पञ्चभ्यो वा दानशीलस्तथैकाम् ॥ ०४३ ॥

ये जीर्यन्ते ब्रह्मचर्येण विप्रा ; ब्राह्मीं वाचं परिरक्षन्ति चैव ।
मनस्विनस्तीर्थयात्रापरायणा ;स्ते तत्र मोदन्ति गवां विमाने ॥ ०४४ ॥

प्रभासं मानसं पुण्यं पुष्कराणि महत्सरः ।
पुण्यं च नैमिषं तीर्थं बाहुदां करतोयिनीम् ॥ ०४५ ॥

गयां गयशिरश्चैव विपाशां स्थूलवालुकाम् ।
तूष्णीगङ्गां दशगङ्गां महाह्रदमथापि च ॥ ०४६ ॥

गौतमीं कौशिकीं पाकां महात्मानो धृतव्रताः ।
सरस्वतीदृषद्वत्यौ यमुनां ये प्रयान्ति च ॥ ०४७ ॥

तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः ।
प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ॥ ०४८ ॥

गौतम उवाच ॥

यत्र शीतभयं नास्ति न चोष्णभयमण्वपि ।
न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा ॥ ०४९ ॥

न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा ।
न जरामरणे वापि न पुण्यं न च पातकम् ॥ ०५० ॥

तस्मिन्विरजसि स्फीते प्रज्ञासत्त्वव्यवस्थिते ।
स्वयंभुभवने पुण्ये हस्तिनं मे यतिष्यति ॥ ०५१ ॥

धृतराष्ट्र उवाच ॥

निर्मुक्ताः सर्वसङ्गेभ्यो कृतात्मानो यतव्रताः ।
अध्यात्मयोगसंस्थाने युक्ताः स्वर्गगतिं गताः ॥ ०५२ ॥

ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्त्विकाः ।
न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ॥ ०५३ ॥

गौतम उवाच ॥

रथन्तरं यत्र बृहच्च गीयते ; यत्र वेदी पुण्डरीकैः स्तृणोति ।
यत्रोपयाति हरिभिः सोमपीथी ; तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ०५४ ॥

बुध्यामि त्वां वृत्रहणं शतक्रतुं ; व्यतिक्रमन्तं भुवनानि विश्वा ।
कच्चिन्न वाचा वृजिनं कदा चि ;दकार्षं ते मनसोऽभिषङ्गात् ॥ ०५५ ॥

शक्र उवाच ॥

यस्मादिमं लोकपथं प्रजाना ;मन्वागमं पदवादे गजस्य ।
तस्माद्भवान्प्रणतं मानुशास्तु ; ब्रवीषि यत्तत्करवाणि सर्वम् ॥ ०५६ ॥

गौतम उवाच ॥

श्वेतं करेणुं मम पुत्रनागं ; यं मेऽहार्षीर्दशवर्षाणि बालम् ।
यो मे वने वसतोऽभूद्द्वितीय ;स्तमेव मे देहि सुरेन्द्र नागम् ॥ ०५७ ॥

शक्र उवाच ॥

अयं सुतस्ते द्विजमुख्य नाग ;श्चाघ्रायते त्वामभिवीक्षमाणः ।
पादौ च ते नासिकयोपजिघ्रते ; श्रेयो मम ध्याहि नमश्च तेऽस्तु ॥ ०५८ ॥

गौतम उवाच ॥

शिवं सदैवेह सुरेन्द्र तुभ्यं ; ध्यायामि पूजां च सदा प्रयुञ्जे ।
ममापि त्वं शक्र शिवं ददस्व ; त्वया दत्तं प्रतिगृह्णामि नागम् ॥ ०५९ ॥

शक्र उवाच ॥

येषां वेदा निहिता वै गुहायां ; मनीषिणां सत्त्ववतां महात्मनाम् ।
तेषां त्वयैकेन महात्मनास्मि ; बुद्धस्तस्मात्प्रीतिमांस्तेऽहमद्य ॥ ०६० ॥

हन्तैहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना ।
प्राप्नुहि त्वं शुभा.ण्ल्लोकानह्नाय च चिराय च ॥ ०६१ ॥

भीष्म उवाच ॥

स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना ।
दिवमाचक्रमे वज्री सद्भिः सह दुरासदम् ॥ ०६२ ॥

---

# अनशनमाहात्म्यम्

## अध्याय १०६

युधिष्ठिर उवाच ॥

दानं बहुविधाकारं शान्तिः सत्यमहिंसता ।
स्वदारतुष्टिश्चोक्ता ते फलं दानस्य चैव यत् ॥ ००१ ॥

पितामहस्य विदितं किमन्यत्र तपोबलात् ।

तपसो यत्परं तेऽद्य तन्मे व्याख्यातुमर्हसि ॥ ००२ ॥

भीष्म उवाच ॥

तपः प्रचक्षते यावत्तावल्लोका युधिष्ठिर ।
मतं मम तु कौन्तेय तपो नानशनात्परम् ॥ ००३ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भगीरथस्य संवादं ब्रह्मणश्च महात्मनः ॥ ००४ ॥

अतीत्य सुरलोकं च गवां लोकं च भारत ।
ऋषिलोकं च सोऽगच्छद्भगीरथ इति श्रुतिः ॥ ००५ ॥

तं दृष्ट्वा स वचः प्राह ब्रह्मा राजन्भगीरथम् ।
कथं भगीरथागास्त्वमिमं देशं दुरासदम् ॥ ००६ ॥

न हि देवा न गन्धर्वा न मनुष्या भगीरथ ।
आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ॥ ००७ ॥

भगीरथ उवाच ॥

निःशङ्कमन्नमददं ब्राह्मणेभ्यः ; शतं सहस्राणि सदैव दानम् ।
ब्राह्मं व्रतं नित्यमास्थाय विद्धि ; न त्वेवाहं तस्य फलादिहागाम् ॥ ००८ ॥

दशैकरात्रान्दश पञ्चरात्रा ;नेकादशैकादशकान्क्रतूंश्च ।
ज्योतिष्टोमानां च शतं यदिष्टं ; फलेन तेनापि च नागतोऽहम् ॥ ००९ ॥

यच्चावसं जाह्नवीतीरनित्यः ; शतं समास्तप्यमानस्तपोऽहम् ।
अदां च तत्राश्वतरीसहस्रं ; नारीपुरं न च तेनाहमागाम् ॥ ०१० ॥

दशायुतानि चाश्वानामयुतानि च विंशतिम् ।

पुष्करेषु द्विजातिभ्यः प्रादां गाश्च सहस्रशः ॥ ०११ ॥

सुवर्णचन्द्रोडुपधारिणीनां ; कन्योत्तमानामददं स्रग्विणीनाम् ।
षष्टिं सहस्राणि विभूषितानां ; जाम्बूनदैराभरणैर्न तेन ॥ ०१२ ॥

दशार्बुदान्यददं गोसवेज्या ;स्वेकैकशो दश गा लोकनाथ ।
समानवत्साः पयसा समन्विताः ; सुवर्णकांस्योपदुहा न तेन ॥ ०१३ ॥

अप्तोर्यामेषु नियतमेकैकस्मिन्दशाददम् ।
गृष्टीनां क्षीरदात्रीणां रोहिणीनां न तेन च ॥ ०१४ ॥

दोग्ध्रीणां वै गवां चैव प्रयुतानि दशैव ह ।
प्रादां दशगुणं ब्रह्मन्न च तेनाहमागतः ॥ ०१५ ॥

वाजिनां बाह्लिजातानामयुतान्यददं दश ।
कर्काणां हेममालानां न च तेनाहमागतः ॥ ०१६ ॥

कोटीश्च काञ्चनस्याष्टौ प्रादां ब्रह्मन्दश त्वहम् ।
एकैकस्मिन्क्रतौ तेन फलेनाहं न चागतः ॥ ०१७ ॥

वाजिनां श्यामकर्णानां हरितानां पितामह ।
प्रादां हेमस्रजां ब्रह्मन्कोटीर्दश च सप्त च ॥ ०१८ ॥

ईषादन्तान्महाकायान्काञ्चनस्रग्विभूषितान् ।
पद्मीमतः सहस्राणि प्रायच्छं दश सप्त च ॥ ०१९ ॥

अलङ्कृतानां देवेश दिव्यैः कनकभूषणैः ।
रथानां काञ्चनाङ्गानां सहस्राण्यददं दश ॥ ०२० ॥

सप्त चान्यानि युक्तानि वाजिभिः समलङ्कृतैः ॥ ०२० ॥

दक्षिणावयवाः केचिद्वेदैर्ये संप्रकीर्तिताः ।
वाजपेयेषु दशसु प्रादां तेनापि नाप्यहम्  ॥ ०२१  ॥

शक्रतुल्यप्रभावानामिज्यया विक्रमेण च ।
सहस्रं निष्ककण्ठानामददं दक्षिणामहम्  ॥ ०२२  ॥

विजित्य नृपतीन्सर्वान्मखैरिष्ट्वा पितामह ।
अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः  ॥ ०२३  ॥

स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते ।
दक्षिणाभिः प्रवृत्ताभिर्मम नागां च तत्कृते  ॥ ०२४  ॥

वाजिनां च सहस्रे द्वे सुवर्णशतभूषिते ।
वरं ग्रामशतं चाहमेकैकस्य त्रिधाददम्  ॥ ०२५  ॥

तपस्वी नियताहारः शममास्थाय वाग्यतः  ॥ ०२५  ॥

दीर्घकालं हिमवति गङ्गायाश्च दुरुत्सहाम् ।
मूर्ध्ना धारां महादेवः शिरसा यामधारयत्  ॥ ०२६  ॥

न तेनाप्यहमागच्छं फलेनेह पितामह  ॥ ०२६  ॥

शम्याक्षेपैरयजं यच्च देवा ;न्सद्यस्कानामयुतैश्चापि यत्तत् ।
त्रयोदशद्वादशाहांश्च देव ; सपौण्डरीकान्न च तेषां फलेन  ॥ ०२७  ॥

अष्टौ सहस्राणि ककुद्मिनामहं ; शुक्लर्षभाणामददं ब्राह्मणेभ्यः ।
एकैकं वै काञ्चनं शृङ्गमेभ्यः ; पत्नीश्चैषामददं निष्ककण्ठीः  ॥ ०२८  ॥

हिरण्यरत्ननिचितानददं रत्नपर्वतान् ।
धनधान्यसमृद्धांश्च ग्रामाञ्शतसहस्रशः  ॥ ०२९  ॥

शतं शतानां गृष्टीनामददं चाप्यतन्द्रितः ।
इष्ट्वानेकैर्महायज्ञैर्ब्राह्मणेभ्यो न तेन च ॥ ०३० ॥

एकादशाहैरयजं सदक्षिणै ;र्द्विर्द्वादशाहैरश्वमेधैश्च देव ।
आर्कायणैः षोडशभिश्च ब्रह्मं ;स्तेषां फलेनेह न चागतोऽस्मि ॥ ०३१ ॥

निष्कैककण्ठमददं योजनायतं ; तद्विस्तीर्णं काञ्चनपादपानाम् ।
वनं चूतानां रत्नविभूषितानां ; न चैव तेषामागतोऽहं फलेन ॥ ०३२ ॥

तुरायणं हि व्रतमप्रधृष्य ;मक्रोधनोऽकरवं त्रिंशतोऽब्दान् ।
शतं गवामष्ट शतानि चैव ; दिने दिने ह्यददं ब्राह्मणेभ्यः ॥ ०३३ ॥

पयस्विनीनामथ रोहिणीनां ; तथैव चाप्यनडुहां लोकनाथ ।
प्रादां नित्यं ब्राह्मणेभ्यः सुरेश ; नेहागतस्तेन फलेन चाहम् ॥ ०३४ ॥

त्रिंशदग्निमहं ब्रह्मन्नयजं यच्च नित्यदा ।
अष्टाभिः सर्वमेधैश्च नरमेधैश्च सप्तभिः ॥ ०३५ ॥

दशभिर्विश्वजिद्भिश्च शतैरष्टादशोत्तरैः ।
न चैव तेषां देवेश फलेनाहमिहागतः ॥ ०३६ ॥

सरय्वां बाहुदायां च गङ्गायामथ नैमिषे ।
गवां शतानामयुतमददं न च तेन वै ॥ ०३७ ॥

इन्द्रेण गुह्यं निहितं वै गुहायां ; यद्भार्गवस्तपसेहाभ्यविन्दत् ।
जाज्वल्यमानमुशनस्तेजसेह ; तत्साधयामास महं वरेण्यम् ॥ ०३८ ॥

ततो मे ब्राह्मणास्तुष्टास्तस्मिन्कर्मणि साधिते ।
सहस्रमृषयश्चासन्ये वै तत्र समागताः ॥ ०३९ ॥

उक्तस्तैरस्मि गच्छ त्वं ब्रह्मलोकमिति प्रभो ॥ ०३९ ॥

प्रीतेनोक्तः सहस्रेण ब्राह्मणानामहं प्रभो ।
इमं लोकमनुप्राप्तो मा भूत्तेऽत्र विचारणा ॥ ०४० ॥

कामं यथावद्विहितं विधात्रा ; पृष्टेन वाच्यं तु मया यथावत् ।
तपो हि नान्यच्चानशनान्मतं मे ; नमोऽस्तु ते देववर प्रसीद ॥ ०४१ ॥

भीष्म उवाच ॥

इत्युक्तवन्तं तं ब्रह्मा राजानं स्म भगीरथम् ।
पूजयामास पूजार्हं विधिदृष्टेन कर्मणा ॥ ०४२ ॥

---

# आयुष्याख्यानम्

## अध्याय १०७

युधिष्ठिर उवाच ॥

शतायुरुक्तः पुरुषः शतवीर्यश्च वैदिके ।
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ ००१ ॥

आयुष्मान्केन भवति स्वल्पायुर्वापि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ ००२ ॥

तपसा ब्रह्मचर्येण जपैर्होमैस्तथौषधैः ।
जन्मना यदि वाचारात्तन्मे ब्रूहि पितामह ॥ ००३ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि यन्मां त्वमनुपृच्छसि ।
अल्पायुर्येन भवति दीर्घायुर्वापि मानवः ॥ ००४ ॥

येन वा लभते कीर्तिं येन वा लभते श्रियम् ।
यथा च वर्तन्पुरुषः श्रेयसा संप्रयुज्यते ॥ ००५ ॥

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ ००६ ॥

दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
त्रसन्ति यस्माद्भूतानि तथा परिभवन्ति च ॥ ००७ ॥

तस्मात्कुर्यादिहाचारं य इच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥ ००८ ॥

आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः ।
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ॥ ००९ ॥

अप्यदृष्टं श्रुतं वापि पुरुषं धर्मचारिणम् ।
भूतिकर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् ॥ ०१० ॥

ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ०११ ॥

विशीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ ०१२ ॥

सर्वलक्षणहीनोऽपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ०१३ ॥

अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ ०१४ ॥

लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः सङ्कुसुको नेहायुर्विन्दते महत् ॥ ०१५ ॥

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
उत्थायाचम्य तिष्ठेत पूर्वां संध्यां कृताञ्जलिः ॥ ०१६ ॥

एवमेवापरां संध्यां समुपासीत वाग्यतः ।
नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन ॥ ०१७ ॥

ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुवन् ।
तस्मात्तिष्ठेत्सदा पूर्वां पश्चिमां चैव वाग्यतः ॥ ०१८ ॥

ये च पूर्वामुपासन्ते द्विजाः संध्यां न पश्चिमाम् ।
सर्वांस्तान्धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ ०१९ ॥

परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् ।
न हीदृशमनायुष्यं लोके किञ्चन विद्यते ॥ ०२० ॥

यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ०२० ॥

प्रसाधनं च केशानामञ्जनं दन्तधावनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥ ०२१ ॥

पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ।
उदक्यया च संभाषां न कुर्वीत कदाचन ॥ ०२२ ॥

नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चान्तिके ।

उभे मूत्रपुरीषे तु नाप्सु कुर्यात्कदाचन ॥ ०२३ ॥

प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् ॥ ०२४ ॥

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
धन्यं पश्चान्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ ०२५ ॥

नाधितिष्ठेत्तुषाञ्ज्ञातु केशभस्मकपालिकाः ।
अन्यस्य चाप्युपस्थानं दूरतः परिवर्जयेत् ॥ ०२६ ॥

शान्तिहोमांश्च कुर्वीत सावित्राणि च कारयेत् ।
निषण्णश्चापि खादेत न तु गच्छन्कथञ्चन ॥ ०२७ ॥

मूत्रं न तिष्ठता कार्यं न भस्मनि न गोव्रजे ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ॥ ०२९ ॥

त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन ।
अग्निं गां ब्राह्मणं चैव तथास्यायुर्न रिष्यते ॥ ०३० ॥

त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ॥ ०३१ ॥

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ ०३२ ॥

अभिवादयेत वृद्धांश्च आसनं चैव दापयेत् ।
कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ॥ ०३३ ॥

न चासीतासने भिन्ने भिन्नं कांस्यं च वर्जयेत् ।

नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति ॥ ०३४ ॥

स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ॥ ०३४ ॥

उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ।
केशग्रहान्प्रहारांश्च शिरस्येतान्विवर्जयेत् ॥ ०३५ ॥

न पाणिभ्यामुभाभ्यां च कण्डूयेज्जातु वै शिरः ।
न चाभीक्ष्णं शिरः स्नायात्तथास्यायुर्न रिष्यते ॥ ०३६ ॥

शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदुपस्पृशेत् ।
तिलपिष्टं न चाश्नीयात्तथायुर्विन्दते महत् ॥ ०३७ ॥

नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन ।
वाते च पूतिगन्धे च मनसापि न चिन्तयेत् ॥ ०३८ ॥

अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
आयुरस्य निकृन्तामि प्रजामस्याददे तथा ॥ ०३९ ॥

य उच्छिष्टः प्रवदति स्वाध्यायं चाधिगच्छति ।
यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः ॥ ०४० ॥

तस्माद्युक्तोऽप्यनध्याये नाधीयीत कदाचन ॥ ०४० ॥

प्रत्यादित्यं प्रत्यनिलं प्रति गां च प्रति द्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥ ०४१ ॥

उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ तथास्यायुर्न रिष्यते ॥ ०४२ ॥

त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः ।

ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ ०४३ ॥

दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा ।
क्षत्रियोऽपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा ॥ ०४४ ॥

ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च ।
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः ॥ ०४५ ॥

गुरुणा वैरनिर्बन्धो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ ०४६ ॥

सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह ।
गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः ॥ ०४७ ॥

दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ ०४८ ॥

नातिकल्पं नातिसायं न च मध्यंदिने स्थिते ।
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ॥ ०४९ ॥

पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ ०५० ॥

प्रदक्षिणं च कुर्वीत परिज्ञातान्वनस्पतीन् ।
चतुष्पथान्प्रकुर्वीत सर्वानेव प्रदक्षिणान् ॥ ०५१ ॥

मध्यंदिने निशाकाले मध्यरात्रे च सर्वदा ।
चतुष्पथान्न सेवेत उभे संध्ये तथैव च ॥ ०५२ ॥

उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् ॥ ०५३ ॥

अमावास्यां पौर्णमास्यां चतुर्दश्यां च सर्वशः ।
अष्टम्यां सर्वपक्षाणां ब्रह्मचारी सदा भवेत् ॥ ०५४ ॥

वृथा मांसं न खादेत पृष्ठमांसं तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥ ०५५ ॥

नारुंतुदः स्यान्न नृशंसवादी ; न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत ; न तां वदेद्रुशतीं पापलोक्याम् ॥ ०५६ ॥

वाक्सायका वदनान्निष्पतन्ति ; यैराहतः शोचति रात्र्यहानि ।
परस्य नाममर्मसु ते पतन्ति ; तान्पण्डितो नावसृजेत्परेषु ॥ ०५७ ॥

रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ०५८ ॥

हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाक्षिपेत् ॥ ०५९ ॥

नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषस्तम्भाभिमानांश्च तैक्ष्ण्यं च परिवर्जयेत् ॥ ०६० ॥

परस्य दण्डं नोद्यच्छेत्क्रोद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याद्वा शिक्षार्थं ताडनं स्मृतम् ॥ ०६१ ॥

न ब्राह्मणान्परिवदेन्नक्षत्राणि न निर्दिशेत् ।
तिथिं पक्षस्य न ब्रूयात्तथास्यायुर्न रिष्यते ॥ ०६२ ॥

कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥ ०६३ ॥

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ०६४ ॥

संयावं कृसरं मांसं शष्कुली पायसं तथा ।
आत्मार्थं न प्रकर्तव्यं देवार्थं तु प्रकल्पयेत् ॥ ०६५ ॥

नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा ।
वाग्यतो दन्तकाष्ठं च नित्यमेव समाचरेत् ॥ ०६६ ॥

न चाभ्युदितशायी स्यात्प्रायश्चित्ती तथा भवेत् ॥ ०६६ ॥

मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथ वाप्येनं तथायुर्विन्दते महत् ॥ ०६७ ॥

वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि च वर्जयेत् ॥ ०६८ ॥

उदङ्मुखश्च सततं शौचं कुर्यात्समाहितः ।
अकृत्वा देवतापूजां नान्यं गच्छेत्कदाचन ।
अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम् ॥ ०७० ॥

अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ।
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन ॥ ०७१ ॥

उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
प्राक्शिरास्तु स्वपेद्विद्वानथ वा दक्षिणाशिराः ॥ ०७२ ॥

न भग्ने नावदीर्णे वा शयने प्रस्वपेत च ।
नान्तर्धाने न संयुक्ते न च तिर्यक्कदाचन ॥ ०७३ ॥

न नग्नः कर्हिचित्स्नायान्न निशायां कदाचन ।

स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः ॥ ०७४ ॥

न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्धुनेत् ।
आर्द्र एव तु वासांसि नित्यं सेवेत मानवः ॥ ०७५ ॥

स्रजश्च नावकर्षेत न बहिर्धारयेत च ॥ ०७५ ॥

रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यं तु पण्डितैः ।
वर्जयित्वा तु कमलं तथा कुवलयं विभो ॥ ०७६ ॥

रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि ।
काञ्चनी चैव या माला न सा दुष्यति कर्हिचित् ॥ ०७७ ॥

स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशां पते ॥ ०७७ ॥

विपर्ययं न कुर्वीत वाससो बुद्धिमान्नरः ।
तथा नान्यधृतं धार्यं न चापदशमेव च ॥ ०७८ ॥

अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ ०७९ ॥

प्रियङ्गुचन्दनाभ्यां च बिल्वेन तगरेण च ।
पृथगेवानुलिम्पेत केसरेण च बुद्धिमान् ॥ ०८० ॥

उपवासं च कुर्वीत स्नातः शुचिरलङ्कृतः ।
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ॥ ०८१ ॥

नालीढया परिहतं भक्षयीत कदाचन ।
तथा नोद्धृतसाराणि प्रेक्षतां नाप्रदाय च ॥ ०८२ ॥

न संनिकृष्टो मेधावी नाशुचिर्न च सत्सु च ।

प्रतिषिद्धान्न धर्मेषु भक्षान्भुञ्जीत पृष्ठतः ॥ ०८३ ॥

पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुम्बरं न खादेच्च भवार्थी पुरुषोत्तमः ॥ ०८४ ॥

आजं गव्यं च यन्मांसं मायूरं चैव वर्जयेत् ।
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ॥ ०८५ ॥

न पाणौ लवणं विद्वान्प्राश्नीयान्न च रात्रिषु ।
दधिसक्तून्न भुञ्जीत वृथामांसं च वर्जयेत् ॥ ०८६ ॥

वालेन तु न भुञ्जीत परश्राद्धं तथैव च ।
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ॥ ०८७ ॥

वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन ।
भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत् ॥ ०८८ ॥

तोयपूर्वं प्रदायान्नमतिथिभ्यो विशां पते ।
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥ ०८९ ॥

समानमेकपङ्क्त्यां तु भोज्यमन्नं नरेश्वर ।
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ॥ ०९० ॥

पानीयं पायसं सर्पिर्दधिसक्तुमधून्यपि ।
निरस्य शेषमेतेषां न प्रदेयं तु कस्यचित् ॥ ०९१ ॥

भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ।
दधि चाप्यनुपानं वै न कर्तव्यं भवार्थिना ॥ ०९२ ॥

आचम्य चैव हस्तेन परिस्राव्य तथोदकम् ।
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत् ॥ ०९३ ॥

पाणिं मूर्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः ।
ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः ॥ ०९४ ॥

अद्भिः प्राणान्समालभ्य नाभिं पाणितलेन च ।
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ॥ ०९५ ॥

अङ्गुष्ठस्यान्तराले च ब्राह्मं तीर्थमुदाहृतम् ।
कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहोच्यते ॥ ०९६ ॥

अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत ।
तेन पित्र्याणि कुर्वीत स्पृष्ट्वापो न्यायतस्तथा ॥ ०९७ ॥

परापवादं न ब्रूयान्नाप्रियं च कदाचन ।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ॥ ०९८ ॥

पतितैस्तु कथां नेच्छेद्दर्शनं चापि वर्जयेत् ।
संसर्गं च न गच्छेत तथायुर्विन्दते महत् ॥ ०९९ ॥

न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम् ।
न चास्नातां स्त्रियं गच्छेत्तथायुर्विन्दते महत् ॥ १०० ॥

स्वे स्वे तीर्थे समाचम्य कार्ये समुपकल्पिते ।
त्रिः पीत्वापो द्विः प्रमृज्य कृतशौचो भवेन्नरः ॥ १०१ ॥

इन्द्रियाणि सकृत्स्पृश्य त्रिरभ्युक्ष्य च मानवः ।
कुर्वीत पित्र्यं दैवं च वेददृष्टेन कर्मणा ॥ १०२ ॥

ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव ।
प्रवृत्तं च हितं चोक्त्वा भोजनाद्यन्तयोस्तथा ॥ १०३ ॥

सर्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत् ।
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् ॥ १०४ ॥

वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि ।
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च ॥ १०५ ॥

गृहे पारावता धन्याः शुकाश्च सहसारिकाः ।
गृहेष्वेते न पापाय तथा वै तैलपायिकाः ॥ १०६ ॥

उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
निविशेयुर्यदा तत्र शान्तिमेव तदाचरेत् ॥ १०७ ॥

अमङ्गल्यानि चैतानि तथाक्रोशो महात्मनाम् ।
महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित् ॥ १०८ ॥

अगम्याश्च न गच्छेत राजपत्नीः सखीस्तथा ।
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर ॥ १०९ ॥

बन्धूनां ब्राह्मणानां च तथा शारणिकस्य च ।
संबन्धिनां च राजेन्द्र तथायुर्विन्दते महत् ॥ ११० ॥

ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम् ।
तदावसेत्सदा प्राज्ञो भवार्थी मनुजेश्वर ॥ १११ ॥

संध्यायां न स्वपेद्राजन्विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथायुर्विन्दते महत् ॥ ११२ ॥

नक्तं न कुर्यात्पित्र्याणि भुक्त्वा चैव प्रसाधनम् ।
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ॥ ११३ ॥

वर्जनीयाश्च वै नित्यं सक्तवो निशि भारत ।
शेषाणि चावदातानि पानीयं चैव भोजने ॥ ११४ ॥

सौहित्यं च न कर्तव्यं रात्रौ नैव समाचरेत् ।
द्विजच्छेदं न कुर्वीत भुक्त्वा न च समाचरेत् ॥ ११५ ॥

महाकुलप्रसूतां च प्रशस्तां लक्षणैस्तथा ।
वयःस्थां च महाप्राज्ञ कन्यामावोढुमर्हति ॥ ११६ ॥

अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं तथा ।
पुत्राः प्रदेया ज्ञानेषु कुलधर्मेषु भारत ॥ ११७ ॥

कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते ।
पुत्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत ॥ ११८ ॥

शिरःस्नातोऽथ कुर्वीत दैवं पित्र्यमथापि च ।
नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः ॥ ११९ ॥

न प्रोष्ठपदयोः कार्यं तथाग्नेये च भारत ॥ ११९ ॥

दारुणेषु च सर्वेषु प्रत्यहं च विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् ॥ १२० ॥

प्राङ्मुखः श्मश्रुकर्माणि कारयेत समाहितः ।
उदङ्मुखो वा राजेन्द्र तथायुर्विन्दते महत् ॥ १२१ ॥

परिवादं न च ब्रूयात्परेषामात्मनस्तथा ।
परिवादो न धर्माय प्रोच्यते भरतर्षभ ॥ १२२ ॥

वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम ।
समार्षां व्यङ्गितां चैव मातुः स्वकुलजां तथा ॥ १२३ ॥

वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम् ।
तथातिकृष्णवर्णां च वर्णोत्कृष्टां च वर्जयेत् ॥ १२४ ॥

अयोनिं च वियोनिं च न गच्छेत विचक्षणः ।
पिङ्गलां कुष्ठिनीं नारीं न त्वमावोढुमर्हसि ॥ १२५ ॥

अपस्मारिकुले जातां निहीनां चैव वर्जयेत् ।
श्वित्रिणां च कुले जातां त्रयाणां मनुजेश्वर ॥ १२६ ॥

लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ।
मनोज्ञा दर्शनीया च तां भवान्वोढुमर्हति ॥ १२७ ॥

महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ।
अवरा पतिता चैव न ग्राह्या भूतिमिच्छता ॥ १२८ ॥

अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः ।
वेदेषु ब्राह्मणैः प्रोक्तास्ताश्च सर्वाः समाचरेत् ॥ १२९ ॥

न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥ १३० ॥

अनायुष्यो दिवास्वप्नस्तथाभ्युदितशायिता ।
प्रातर्निशायां च तथा ये चोच्छिष्टाः स्वपन्ति वै ॥ १३१ ॥

पारदार्यमनायुष्यं नापितोच्छिष्टता तथा ।
यत्नतो वै न कर्तव्यमभ्यासश्चैव भारत ॥ १३२ ॥

संध्यां न भुञ्जेन्न स्नायान्न पुरीषं समुत्सृजेत् ।
प्रयतश्च भवेत्तस्यां न च किञ्चित्समाचरेत् ॥ १३३ ॥

ब्राह्मणान्पूजयेच्चापि तथा स्नात्वा नराधिप ।
देवांश्च प्रणमेत्स्नातो गुरूंश्चाप्यभिवादयेत् ॥ १३४ ॥

अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत्तु दर्शकः ।
अनिमन्त्रिते ह्यनायुष्यं गमनं तत्र भारत ॥ १३५ ॥

न चैकेन परिव्राज्यं न गन्तव्यं तथा निशि ।
अनागतायां संध्यायां पश्चिमायां गृहे वसेत् ॥ १३६ ॥

मातुः पितुर्गुरूणां च कार्यमेवानुशासनम् ।
हितं वाप्यहितं वापि न विचार्यं नरर्षभ ॥ १३७ ॥

धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह ॥ १३८ ॥

यत्नवान्भव राजेन्द्र यत्नवान्सुखमेधते ॥ १३८ ॥

अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ।
प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् ॥ १३९ ॥

युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ।
गन्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ॥ १४० ॥

पुराणमितिहासाश्च तथाख्यानानि यानि च ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ १४१ ॥

पत्नीं रजस्वलां चैव नाभिगच्छेन्न चाह्वयेत् ।
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥ १४२ ॥

पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान्भवेत् ।
एतेन विधिना पत्नीमुपगच्छेत पण्डितः ॥ १४३ ॥

ज्ञातिसंबन्धिमित्राणि पूजनीयानि नित्यशः ।
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥ १४४ ॥

अतऊर्ध्वमरण्यं च सेवितव्यं नराधिप ॥ १४४ ॥

एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ।
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर ॥ १४५ ॥

आचारो भूतिजनन आचारः कीर्तिवर्धनः ।
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥ १४६ ॥

आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ।
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥ १४७ ॥

एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्पता सर्ववर्णान्ब्रह्मणा समुदाहृतम् ॥ १४८ ॥

---

# ज्येष्ठकनिष्ठवृत्तिः

## अध्याय १०८

युधिष्ठिर उवाच ॥

यथा ज्येष्ठः कनिष्ठेषु वर्तते भरतर्षभ ।
कनिष्ठाश्च यथा ज्येष्ठे वर्तेरंस्तद्ब्रवीहि मे ॥ ००१ ॥

भीष्म उवाच ॥

ज्येष्ठवत्तात वर्तस्व ज्येष्ठो हि सततं भवान् ।
गुरोर्गरीयसी वृत्तिर्या चेच्छिष्यस्य भारत ॥ ००२ ॥

न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्तितुम् ।
गुरोर्हि दीर्घदर्शित्वं यत्तच्छिष्यस्य भारत ॥ ००३ ॥

अन्धः स्यादन्धवेलायां जडः स्यादपि वा बुधः ।
परिहारेण तद्ब्रूयाद्यस्तेषां स्याद्व्यतिक्रमः ॥ ००४ ॥

प्रत्यक्षं भिन्नहृदया भेदयेयुः कृतं नराः ।
श्रियाभितप्ताः कौन्तेय भेदकामास्तथारयः ॥ ००५ ॥

ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
हन्ति सर्वमपि ज्येष्ठः कुलं यत्रावजायते ॥ ००६ ॥

अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसः ।
अज्येष्ठः स्यादभागश्च नियम्यो राजभिश्च सः ॥ ००७ ॥

निकृती हि नरो लोकान्पापान्गच्छत्यसंशयम् ।
विदुलस्येव तत्पुष्पं मोघं जनयितुः स्मृतम् ॥ ००८ ॥

सर्वानर्थः कुले यत्र जायते पापपूरुषः ।
अकीर्तिं जनयत्येव कीर्तिमन्तर्दधाति च ॥ ००९ ॥

सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः ।
नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् ॥ ०१० ॥

अनुजं हि पितुर्दायो जङ्घाश्रमफलोऽध्वगः ।
स्वयमीहितलब्धं तु नाकामो दातुमर्हति ॥ ०११ ॥

भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह ।
न पुत्रभागं विषमं पिता दद्यात्कथञ्चन ॥ ०१२ ॥

न ज्येष्ठानवमन्येत दुष्कृतः सुकृतोऽपि वा ।
यदि स्त्री यद्यवरजः श्रेयः पश्येत्तथाचरेत् ॥ ०१३ ॥

धर्मं हि श्रेय इत्याहुरिति धर्मविदो विदुः ॥ ०१३ ॥

दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ।
दश चैव पितॄन्माता सर्वां वा पृथिवीमपि ॥ ०१४ ॥

गौरवेणाभिभवति नास्ति मातृसमो गुरुः ।
माता गरीयसी यच्च तेनैतां मन्यते जनः ॥ ०१५ ॥

ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ।
स ह्येषां वृत्तिदाता स्यात्स चैतान्परिपालयेत् ॥ ०१६ ॥

कनिष्ठास्तं नमस्येरन्सर्वे छन्दानुवर्तिनः ।
तमेव चोपजीवेरन्यथैव पितरं तथा ॥ ०१७ ॥

शरीरमेतौ सृजतः पिता माता च भारत ।
आचार्यशास्ता या जातिः सा सत्या साजरामरा ॥ ०१८ ॥

ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ ।
भ्रातुर्भार्या च तद्वत्स्याद्यस्या बाल्ये स्तनं पिबेत् ॥ ०१९ ॥

# उपवासविधिः

## अध्याय १०९

युधिष्ठिर उवाच ॥

सर्वेषामेव वर्णानां म्लेच्छानां च पितामह ।
उपवासे मतिरियं कारणं च न विद्महे ॥ ००१ ॥

ब्रह्मक्षत्रेण नियमाश्चर्तव्या इति नः श्रुतम् ।
उपवासे कथं तेषां कृत्यमस्ति पितामह ॥ ००२ ॥

नियमं चोपवासानां सर्वेषां ब्रूहि पार्थिव ।
अवाप्नोति गतिं कां च उपवासपरायणः ॥ ००३ ॥

उपवासः परं पुण्यमुपवासः परायणम् ।
उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ॥ ००४ ॥

अधर्मान्मुच्यते केन धर्ममाप्नोति वै कथम् ।
स्वर्गं पुण्यं च लभते कथं भरतसत्तम ॥ ००५ ॥

उपोष्य चापि किं तेन प्रदेयं स्यान्नराधिप ।
धर्मेण च सुखानर्थाऽल्लभेद्येन ब्रवीहि तम् ॥ ००६ ॥

वैशंपायन उवाच ॥

एवं ब्रुवाणं कौन्तेयं धर्मज्ञं धर्मतत्त्ववित् ।
धर्मपुत्रमिदं वाक्यं भीष्मः शांतनवोऽब्रवीत् ॥ ००७ ॥

इदं खलु महाराज श्रुतमासीत्पुरातनम् ।
उपवासविधौ श्रेष्ठा ये गुणा भरतर्षभ ॥ ००८ ॥

प्राजापत्यं ह्यङ्गिरसं पृष्टवानस्मि भारत ।
यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनम्  ॥ ००९  ॥

प्रश्नमेतं मया पृष्टो भगवानग्निसंभवः ।
उपवासविधिं पुण्यमाचष्ट भरतर्षभ  ॥ ०१०  ॥

अङ्गिरा उवाच  ॥

ब्रह्मक्षत्रे त्रिरात्रं तु विहितं कुरुनन्दन ।
द्विस्त्रिरात्रमथैवात्र निर्दिष्टं पुरुषर्षभ  ॥ ०११  ॥

वैश्यशूद्रौ तु यौ मोहादुपवासं प्रकुर्वते ।
त्रिरात्रं द्विस्त्रिरात्रं वा तयोः पुष्टिर्न विद्यते  ॥ ०१२  ॥

चतुर्थभक्तक्षपणं वैश्यशूद्रे विधीयते ।
त्रिरात्रं न तु धर्मज्ञैर्विहितं ब्रह्मवादिभिः  ॥ ०१३  ॥

पञ्चम्यां चैव षष्ठ्यां च पौर्णमास्यां च भारत ।
क्षमावान्रूपसंपन्नः श्रुतवांश्चैव जायते  ॥ ०१४  ॥

नानपत्यो भवेत्प्राज्ञो दरिद्रो वा कदाचन ।
यजिष्णुः पञ्चमीं षष्ठीं क्षपेद्यो भोजयेद्द्विजान्  ॥ ०१५  ॥

अष्टमीमथ कौन्तेय शुक्लपक्षे चतुर्दशीम् ।
उपोष्य व्याधिरहितो वीर्यवानभिजायते  ॥ ०१६  ॥

मार्गशीर्षं तु यो मासमेकभक्तेन सङ्क्षिपेत् ।
भोजयेच्च द्विजान्भक्त्या स मुच्येद्व्याधिकिल्बिषैः  ॥ ०१७  ॥

सर्वकल्याणसंपूर्णः सर्वौषधिसमन्वितः ।

कृषिभागी बहुधनो बहुपुत्रश्च जायते ॥ ०१८ ॥

पौषमासं तु कौन्तेय भक्तेनैकेन यः क्षपेत् ।
सुभगो दर्शनीयश्च यशोभागी च जायते ॥ ०१९ ॥

पितृभक्तो माघमासमेकभक्तेन यः क्षपेत् ।
श्रीमत्कुले ज्ञातिमध्ये स महत्त्वं प्रपद्यते ॥ ०२० ॥

भगदैवं तु यो मासमेकभक्तेन यः क्षपेत् ।
स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः ॥ ०२१ ॥

चैत्रं तु नियतो मासमेकभक्तेन यः क्षपेत् ।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते ॥ ०२२ ॥

निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः ।
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥ ०२३ ॥

ज्येष्ठामूलं तु यो मासमेकभक्तेन सङ्क्षपेत् ।
ऐश्वर्यमतुलं श्रेष्ठं पुमान्स्त्री वाभिजायते ॥ ०२४ ॥

आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते ॥ ०२५ ॥

श्रावणं नियतो मासमेकभक्तेन यः क्षपेत् ।
यत्र तत्राभिषेकेण युज्यते ज्ञातिवर्धनः ॥ ०२६ ॥

प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः ।
धनाढ्यं स्फीतमचलमैश्वर्यं प्रतिपद्यते ॥ ०२७ ॥

तथैवाश्वयुजं मासमेकभक्तेन यः क्षपेत् ।
प्रजावान्वाहनाढ्यश्च बहुपुत्रश्च जायते ॥ ०२८ ॥

कार्त्तिकं तु नरो मासं यः कुर्यादेकभोजनम् ।
शूरश्च बहुभार्यश्च कीर्तिमांश्चैव जायते ॥ ०२९ ॥

इति मासा नरव्याघ्र क्षपतां परिकीर्तिताः ।
तिथीनां नियमा ये तु शृणु तानपि पार्थिव ॥ ०३० ॥

पक्षे पक्षे गते यस्तु भक्तमश्नाति भारत ।
गवाढ्यो बहुपुत्रश्च दीर्घायुश्च स जायते ॥ ०३१ ॥

मासि मासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश ।
गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलम् ॥ ०३२ ॥

एते तु नियमाः सर्वे कर्तव्याः शरदो दश ।
द्वे चान्ये भरतश्रेष्ठ प्रवृत्तिमनुवर्तता ॥ ०३३ ॥

यस्तु प्रातस्तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ॥ ०३४ ॥

षड्भिः स वर्षैर्नृपते सिध्यते नात्र संशयः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ०३५ ॥

अधिवासे सोऽप्सरसां नृत्यगीतविनादिते ।
तप्तकाञ्चनवर्णाभं विमानमधिरोहति ॥ ०३६ ॥

पूर्णं वर्षसहस्रं तु ब्रह्मलोके महीयते ।
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ ०३७ ॥

यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः ।
अतिरात्रस्य यज्ञस्य स फलं समुपाश्नुते ॥ ०३८ ॥

दशवर्षसहस्राणि स्वर्गे च स महीयते ।
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ ०३९ ॥

यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।
अहिंसानिरतो नित्यं सत्यवाङ्नियतेन्द्रियः ॥ ०४० ॥

वाजपेयस्य यज्ञस्य फलं वै समुपाश्नुते ।
त्रिंशद्वर्षसहस्राणि स्वर्गे च स महीयते ॥ ०४१ ॥

षष्ठे काले तु कौन्तेय नरः संवत्सरं क्षपेत् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ०४२ ॥

चक्रवाकप्रयुक्तेन विमानेन स गच्छति ।
चत्वारिंशत्सहस्राणि वर्षाणां दिवि मोदते ॥ ०४३ ॥

अष्टमेन तु भक्तेन जीवन्संवत्सरं नृप ।
गवामयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ०४४ ॥

हंससारसयुक्तेन विमानेन स गच्छति ।
पञ्चाशतं सहस्राणि वर्षाणां दिवि मोदते ॥ ०४५ ॥

पक्षे पक्षे गते राजन्योऽश्नीयाद्वर्षमेव तु ।
षण्मासानशनं तस्य भगवानङ्गिराब्रवीत् ॥ ०४६ ॥

षष्टिं वर्षसहस्राणि दिवमावसते च सः ॥ ०४६ ॥

वीणानां वल्लकीनां च वेणूनां च विशां पते ।
सुघोषैर्मधुरैः शब्दैः सुप्तः स प्रतिबोध्यते ॥ ०४७ ॥

संवत्सरमिहैकं तु मासि मासि पिबेत्पयः ।
फलं विश्वजितस्तात प्राप्नोति स नरो नृप ॥ ०४८ ॥

सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति ।
सप्ततिं च सहस्राणि वर्षाणां दिवि मोदते ॥ ०४९ ॥

मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ।
विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः ॥ ०५० ॥

अनार्तो व्याधिरहितो गच्छेदनशनं तु यः ।
पदे पदे यज्ञफलं स प्राप्नोति न संशयः ॥ ०५१ ॥

दिवं हंसप्रयुक्तेन विमानेन स गच्छति ।
शतं चाप्सरसः कन्या रमयन्त्यपि तं नरम् ॥ ०५२ ॥

आर्तो वा व्याधितो वापि गच्छेदनशनं तु यः ।
शतं वर्षसहस्राणां मोदते दिवि स प्रभो ॥ ०५३ ॥

काञ्चीनूपुरशब्देन सुप्तश्चैव प्रबोध्यते ॥ ०५३ ॥

सहस्रहंससंयुक्ते विमाने सोमवर्चसि ।
स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ ॥ ०५४ ॥

क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणम् ।
व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनम् ॥ ०५५ ॥

दुःखितस्यार्थमानाभ्यां द्रव्याणां प्रतिपादनम् ।
न चैते स्वर्गकामस्य रोचन्ते सुखमेधसः ॥ ०५६ ॥

अतः स कामसंयुक्तो विमाने हेमसंनिभे ।
रमते स्त्रीशताकीर्णे पुरुषोऽलङ्कृतः शुभे ॥ ०५७ ॥

स्वस्थः सफलसङ्कल्पः सुखी विगतकल्मषः ।

अनश्नन्देहमुत्सृज्य फलं प्राप्नोति मानवः ॥ ०५८ ॥

बालसूर्यप्रतीकाशे विमाने हेमवर्चसि ।
वैडूर्यमुक्ताखचिते वीणामुरजनादिते ॥ ०५९ ॥

पताकादीपिकाकीर्णे दिव्यघण्टानिनादिते ।
स्त्रीसहस्रानुचरिते स नरः सुखमेधते ॥ ०६० ॥

यावन्ति रोमकूपाणि तस्य गात्रेषु पाण्डव ।
तावन्त्येव सहस्राणि वर्षाणां दिवि मोदते ॥ ०६१ ॥

नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः ।
न धर्मात्परमो लाभस्तपो नानशनात्परम् ॥ ०६२ ॥

ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च ।
उपवासैस्तथा तुल्यं तपःकर्म न विद्यते ॥ ०६३ ॥

उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे ।
ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् ॥ ०६४ ॥

दिव्यं वर्षसहस्रं हि विश्वामित्रेण धीमता ।
क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतः ॥ ०६५ ॥

च्यवनो जमदग्निश्च वसिष्ठो गौतमो भृगुः ।
सर्व एव दिवं प्राप्ताः क्षमावन्तो महर्षयः ॥ ०६६ ॥

इदमङ्गिरसा पूर्वं महर्षिभ्यः प्रदर्शितम् ।
यः प्रदर्शयते नित्यं न स दुःखमवाप्नुते ॥ ०६७ ॥

इमं तु कौन्तेय यथाक्रमं विधिं ; प्रवर्तितं ह्यङ्गिरसा महर्षिणा ।
पठेत यो वै श्रृणुयाच्च नित्यदा ; न विद्यते तस्य नरस्य किल्बिषम् ॥ ०६८ ॥

विमुच्यते चापि स सर्वसङ्करै ;र्न चास्य दोषैरभिभूयते मनः ।
वियोनिजानां च विजानते रुतं ; ध्रुवां च कीर्तिं लभते नरोत्तमः  ॥ ०६९  ॥

---

# उपवासफलम्

## अध्याय ११०

युधिष्ठिर उवाच  ॥

पितामहेन विधिवद्यज्ञाः प्रोक्ता महात्मना ।
गुणाश्चैषां यथातत्त्वं प्रेत्य चेह च सर्वशः  ॥ ००१  ॥

न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह ।
बहूपकरणा यज्ञा नानासंभारविस्तराः  ॥ ००२  ॥

पार्थिवै राजपुत्रैर्वा शक्याः प्राप्तुं पितामह ।
नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः  ॥ ००३  ॥

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत् ।
तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह  ॥ ००४  ॥

भीष्म उवाच  ॥

इदमङ्गिरसा प्रोक्तमुपवासफलात्मकम् ।
विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर  ॥ ००५  ॥

यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम्  ॥ ००६  ॥

षड्भिरेव तु वर्षैः स सिध्यते नात्र संशयः ।
तप्तकाञ्चनवर्णं च विमानं लभते नरः  ॥ ००७  ॥

देवस्त्रीणामधीवासे नृत्यगीतनिनादिते ।
प्राजापत्ये वसेत्पद्मं वर्षाणामग्निसंनिभे  ॥ ००८  ॥

त्रीणि वर्षाणि यः प्राशेत्सततं त्वेकभोजनम् ।
धर्मपत्नीरतो नित्यमग्निष्टोमफलं लभेत्  ॥ ००९  ॥

द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम्  ॥ ०१०  ॥

यज्ञं बहुसुवर्णं वा वासवप्रियमाहरेत्  ॥ ०१०  ॥

सत्यवाग्दानशीलश्च ब्रह्मण्यश्चानसूयकः ।
क्षान्तो दान्तो जितक्रोधः स गच्छति परां गतिम्  ॥ ०११  ॥

पाण्डुराभ्रप्रतीकाशे विमाने हंसलक्षणे ।
द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत्सह  ॥ ०१२  ॥

तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम्  ॥ ०१३  ॥

अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
मयूरहंससंयुक्तं विमानं लभते नरः  ॥ ०१४  ॥

सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत्सह ।
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः  ॥ ०१५  ॥

दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥ ०१६ ॥

वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
इन्द्रकन्याभिरूढं च विमानं लभते नरः ॥ ०१७ ॥

सागरस्य च पर्यन्ते वासवं लोकमावसेत् ।
देवराजस्य च क्रीडां नित्यकालमवेक्षते ॥ ०१८ ॥

दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ ०१९ ॥

अलुब्धः सत्यवादी च ब्रह्मण्यश्चाविहिंसकः ।
अनसूयुरपापस्थो द्वादशाहफलं लभेत् ॥ ०२० ॥

जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम् ।
सूर्यमालासमाभासमारोहेत्पाण्डुरं गृहम् ॥ ०२१ ॥

आवर्तनानि चत्वारि तथा पद्मानि द्वादश ।
शराग्निपरिमाणं च तत्रासौ वसते सुखम् ॥ ०२२ ॥

दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥ ०२३ ॥

सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः ।
गवामयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ ०२४ ॥

अग्निज्वालासमाभासं हंसबर्हिणसेवितम् ।
शातकुम्भमयं युक्तं साधयेद्यानमुत्तमम् ॥ ०२५ ॥

तथैवाप्सरसामङ्के प्रसुप्तः प्रतिबुध्यते ।
नूपुराणां निनादेन मेखलानां च निस्वनैः ॥ ०२६ ॥

कोटीसहस्रं वर्षाणां त्रीणि कोटिशतानि च ।
पद्मान्यष्टादश तथा पताके द्वे तथैव च ॥ ०२७ ॥

अयुतानि च पञ्चाशदृक्षचर्मशतस्य च ।
लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते ॥ ०२८ ॥

दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥ ०२९ ॥

सरस्वतीं गोपयानो ब्रह्मचर्यं समाचरन् ।
सुमनोवर्णकं चैव मधुमांसं च वर्जयेत् ॥ ०३० ॥

पुरुषो मरुतां लोकमिन्द्रलोकं च गच्छति ।
तत्र तत्र च सिद्धार्थो देवकन्याभिरुह्यते ॥ ०३१ ॥

फलं बहुसुवर्णस्य यज्ञस्य लभते नरः ।
संख्यामतिगुणां चापि तेषु लोकेषु मोदते ॥ ०३२ ॥

यस्तु संवत्सरं क्षान्तो भुङ्क्तेऽहन्यष्टमे नरः ।
देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ॥ ०३३ ॥

पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
पद्मवर्णनिभं चैव विमानमधिरोहति ॥ ०३४ ॥

कृष्णाः कनकगौर्यश्च नार्यः श्यामास्तथापराः ।
वयोरूपविलासिन्यो लभते नात्र संशयः ॥ ०३५ ॥

यस्तु संवत्सरं भुङ्क्ते नवमे नवमेऽहनि ।

सदा द्वादशमासान्वै जुह्वानो जातवेदसम्  ॥ ०३६  ॥

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।
पुण्डरीकप्रकाशं च विमानं लभते नरः  ॥ ०३७  ॥

दीप्तसूर्याग्नितेजोभिर्दिव्यमालाभिरेव च ।
नीयते रुद्रकन्याभिः सोऽन्तरिक्षं सनातनम्  ॥ ०३८  ॥

अष्टादशसहस्राणि वर्षाणां कल्पमेव च ।
कोटीशतसहस्रं च तेषु लोकेषु मोदते  ॥ ०३९  ॥

यस्तु संवत्सरं भुङ्क्ते दशाहे वै गते गते ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम्  ॥ ०४०  ॥

ब्रह्मकन्यानिवेशे च सर्वभूतमनोहरे ।
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम्  ॥ ०४१  ॥

रूपवत्यश्च तं कन्या रमयन्ति सदा नरम् ।
नीलोत्पलनिभैर्वर्णै रक्तोत्पलनिभैस्तथा  ॥ ०४२  ॥

विमानं मण्डलावर्तमावर्तगहनावृतम् ।
सागरोर्मिप्रतीकाशं साधयेद्यानमुत्तमम्  ॥ ०४३  ॥

विचित्रमणिमालाभिर्नादितं शङ्खपुष्करैः ।
स्फाटिकैर्वज्रसारैश्च स्तम्भैः सुकृतवेदिकम्  ॥ ०४४  ॥

आरोहति महद्यानं हंससारसवाहनम्  ॥ ०४४  ॥

एकादशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम्  ॥ ०४५  ॥

परस्त्रियो नाभिलषेद्वाचाथ मनसापि वा ।
अनृतं च न भाषेत मातापित्रोः कृतेऽपि वा ॥ ०४६ ॥

अभिगच्छेन्महादेवं विमानस्थं महाबलम् ।
स्वयंभुवं च पश्येत विमानं समुपस्थितम् ॥ ०४७ ॥

कुमार्यः काञ्चनाभासा रूपवत्यो नयन्ति तम् ।
रुद्राणां तमधीवासं दिवि दिव्यं मनोहरम् ॥ ०४८ ॥

वर्षाण्यपरिमेयानि युगान्तमपि चावसेत् ।
कोटीशतसहस्रं च दश कोटिशतानि च ॥ ०४९ ॥

रुद्रं नित्यं प्रणमते देवदानवसंमतम् ।
स तस्मै दर्शनं प्राप्तो दिवसे दिवसे भवेत् ॥ ०५० ॥

दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः ।
सदा द्वादशमासान्वै सर्वमेधफलं लभेत् ॥ ०५१ ॥

आदित्यैर्द्वादशैस्तस्य विमानं संविधीयते ।
मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितम् ॥ ०५२ ॥

हंसमालापरिक्षिप्तं नागवीथीसमाकुलम् ।
मयूरैश्चक्रवाकैश्च कूजद्भिरुपशोभितम् ॥ ०५३ ॥

अट्टैर्महद्भिः संयुक्तं ब्रह्मलोके प्रतिष्ठितम् ।
नित्यमावसते राजन्नरनारीसमावृतम् ॥ ०५४ ॥

ऋषिरेवं महाभागस्त्वङ्गिराः प्राह धर्मवित् ॥ ०५४ ॥

त्रयोदशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादश मासान्वै देवसत्रफलं लभेत् ॥ ०५५ ॥

रक्तपद्मोदयं नाम विमानं साधयेन्नरः ।
जातरूपप्रयुक्तं च रत्नसञ्चयभूषितम् ॥ ०५६ ॥

देवकन्याभिराकीर्णं दिव्याभरणभूषितम् ।
पुण्यगन्धोदयं दिव्यं वायव्यैरुपशोभितम् ॥ ०५७ ॥

तत्र शङ्कुपताकं च युगान्तं कल्पमेव च ।
अयुतायुतं तथा पद्मं समुद्रं च तथा वसेत् ॥ ०५८ ॥

गीतगन्धर्वघोषैश्च भेरीपणवनिस्वनैः ।
सदा प्रमुदितस्ताभिर्देवकन्याभिरीड्यते ॥ ०५९ ॥

चतुर्दशे तु दिवसे यः पूर्णे प्राशते हविः ।
सदा द्वादश मासान्वै महामेधफलं लभेत् ॥ ०६० ॥

अनिर्देश्यवयोरूपा देवकन्याः स्वलङ्कृताः ।
मृष्टतप्ताङ्गदधरा विमानैरनुयान्ति तम् ॥ ०६१ ॥

कलहंसविनिर्घोषैर्नूपुराणां च निस्वनैः ।
काञ्चीनां च समुत्कर्षैस्तत्र तत्र विबोध्यते ॥ ०६२ ॥

देवकन्यानिवासे च तस्मिन्वसति मानवः ।
जाह्नवीवालुकाकीर्णे पूर्णं संवत्सरं नरः ॥ ०६३ ॥

यस्तु पक्षे गते भुङ्क्ते एकभक्तं जितेन्द्रियः ।
सदा दादश मासांस्तु जुह्वानो जातवेदसम् ॥ ०६४ ॥

राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ॥ ०६४ ॥

यानमारोहते नित्यं हंससबर्हिणसेवितम् ।

मणिमण्डलकैश्चित्रं जातरूपसमावृतम् ॥ ०६५ ॥

दिव्याभरणशोभाभिर्वरस्त्रीभिरलङ्कृतम् ।
एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलम् ॥ ०६६ ॥

वैजयन्तीसहस्रैश्च शोभितं गीतनिस्वनैः ॥ ०६६ ॥

दिव्यं दिव्यगुणोपेतं विमानमधिरोहति ।
मणिमुक्ताप्रवालैश्च भूषितं वैद्युतप्रभम् ॥ ०६७ ॥

वसेद्युगसहस्रं च खड्गकुञ्जरवाहनः ॥ ०६७ ॥

षोडशे दिवसे यस्तु संप्राप्ते प्राशते हविः ।
सदा द्वादश मासान्वै सोमयज्ञफलं लभेत् ॥ ०६८ ॥

सोमकन्यानिवासेषु सोऽध्यावसति नित्यदा ।
सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् ॥ ०६९ ॥

सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च ।
अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते ॥ ०७० ॥

फलं पद्मशतप्रख्यं महाकल्पं दशाधिकम् ।
आवर्तनानि चत्वारि सागरे यात्यसौ नरः ॥ ०७१ ॥

दिवसे सप्तदशमे यः प्राप्ते प्राशते हविः ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ ०७२ ॥

स्थानं वारुणमैन्द्रं च रौद्रं चैवाधिगच्छति ।
मारुतौशनसे चैव ब्रह्मलोकं च गच्छति ॥ ०७३ ॥

तत्र दैवतकन्याभिरासनेनोपचर्यते ।

भूर्भुवं चापि देवर्षिं विश्वरूपमवेक्षते ॥ ०७४ ॥

तत्र देवाधिदेवस्य कुमार्यो रमयन्ति तम् ।
द्वात्रिंशद्रूपधारिण्यो मधुराः समलङ्कृताः ॥ ०७५ ॥

चन्द्रादित्यावुभौ यावद्गगने चरतः प्रभो ।
तावच्चरत्यसौ वीरः सुधामृतरसाशनः ॥ ०७६ ॥

अष्टादशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादश मासान्वै सप्त लोकान्स पश्यति ॥ ०७७ ॥

रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ।
देवकन्याधिरूढैस्तु भ्राजमानैः स्वलङ्कृतैः ॥ ०७८ ॥

व्याघ्रसिंहप्रयुक्तं च मेघस्वननिनादितम् ।
विमानमुत्तमं दिव्यं सुसुखी ह्यधिरोहति ॥ ०७९ ॥

तत्र कल्पसहस्रं स कान्ताभिः सह मोदते ।
सुधारसं च भुञ्जीत अमृतोपममुत्तमम् ॥ ०८० ॥

एकोनविंशे दिवसे यो भुङ्क्ते एकभोजनम् ।
सदा द्वादश मासान्वै सप्त लोकान्स पश्यति ॥ ०८१ ॥

उत्तमं लभते स्थानमप्सरोगणसेवितम् ।
गन्धर्वैरुपगीतं च विमानं सूर्यवर्चसम् ॥ ०८२ ॥

तत्रामरवरस्त्रीभिर्मोदते विगतज्वरः ।
दिव्याम्बरधरः श्रीमानयुतानां शतं समाः ॥ ०८३ ॥

पूर्णेऽथ दिवसे विंशे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादश मासांस्तु सत्यवादी धृतव्रतः ॥ ०८४ ॥

अमांसाशी ब्रह्मचारी सर्वभूतहिते रतः ।
स लोकान्विपुलान्दिव्यानादित्यानामुपाश्नुते ॥ ०८५ ॥

गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः ।
विमानैः काञ्चनैर्दिव्यैः पृष्ठतश्चानुगम्यते ॥ ०८६ ॥

एकविंशे तु दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ ०८७ ॥

लोकमौशनसं दिव्यं शक्रलोकं च गच्छति ।
अश्विनोर्मरुतां चैव सुखेष्वभिरतः सदा ॥ ०८८ ॥

अनभिज्ञश्च दुःखानां विमानवरमास्थितः ।
सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत्प्रभुः ॥ ०८९ ॥

द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ ०९० ॥

धृतिमानहिंसानिरतः सत्यवागनसूयकः ।
लोकान्वसूनामाप्नोति दिवाकरसमप्रभः ॥ ०९१ ॥

कामचारी सुधाहारो विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ ०९२ ॥

त्रयोविंशे तु दिवसे प्राशेद्यस्त्वेकभोजनम् ।
सदा द्वादश मासांस्तु मिताहारो जितेन्द्रियः ॥ ०९३ ॥

वायोरुशनसश्चैव रुद्रलोकं च गच्छति ।
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ॥ ०९४ ॥

अनेकगुणपर्यन्तं विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ ०९५ ॥

चतुर्विंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ ०९६ ॥

आदित्यानामधीवासे मोदमानो वसेच्चिरम् ।
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥ ०९७ ॥

विमाने काञ्चने दिव्ये हंसयुक्ते मनोरमे ।
रमते देवकन्यानां सहस्रैरयुतैस्तथा ॥ ०९८ ॥

पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादश मासांस्तु पुष्कलं यानमारुहेत् ॥ ०९९ ॥

सिंहव्याघ्रप्रयुक्तैश्च मेघस्वननिनादितैः ।
रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ॥ १०० ॥

देवकन्यासमारूढै राजतैर्विमलैः शुभैः ।
विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् ॥ १०१ ॥

तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते ।
सुधारसं चोपजीवन्नमृतोपममुत्तमम् ॥ १०२ ॥

षड्विंशे दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादश मासांस्तु नियतो नियताशनः ॥ १०३ ॥

जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम् ।
स प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः ॥ १०४ ॥

सप्तानां मरुतां लोकान्वसूनां चापि सोऽश्नुते ।

विमाने स्फाटिके दिव्ये सर्वरत्नैरलङ्कृते ॥ १०५ ॥

गन्धर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते ।
द्वे युगानां सहस्रे तु दिव्ये दिव्येन तेजसा ॥ १०६ ॥

सप्तविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादश मासांस्तु जुह्वानो जातवेदसम् ॥ १०७ ॥

फलं प्राप्नोति विपुलं देवलोके च पूज्यते ।
अमृताशी वसंस्तत्र स वितृप्तः प्रमोदते ॥ १०८ ॥

देवर्षिचरितं राजन्राजर्षिभिरधिष्ठितम् ।
अध्यावसति दिव्यात्मा विमानवरमास्थितः ॥ १०९ ॥

स्त्रीभिर्मनोभिरामाभी रममाणो मदोत्कटः ।
युगकल्पसहस्राणि त्रीण्यावसति वै सुखम् ॥ ११० ॥

योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादश मासांस्तु जितात्मा विजितेन्द्रियः ॥ १११ ॥

फलं देवर्षिचरितं विपुलं समुपाश्नुते ।
भोगवांस्तेजसा भाति सहस्रांशुरिवामलः ॥ ११२ ॥

सुकुमार्यश्च नार्यस्तं रममाणाः सुवर्चसः ।
पीनस्तनोरुजघना दिव्याभरणभूषिताः ॥ ११३ ॥

रमयन्ति मनः कान्ता विमाने सूर्यसंनिभे ।
सर्वकामगमे दिव्ये कल्पायुतशतं समाः ॥ ११४ ॥

एकोनत्रिंशे दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादश मासान्वै सत्यव्रतपरायणः ॥ ११५ ॥

तस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः ।
विमानं चन्द्रशुभ्राभं दिव्यं समधिगच्छति ॥ ११६ ॥

जातरूपमयं युक्तं सर्वरत्नविभूषितम् ।
अप्सरोगणसंपूर्णं गन्धर्वैरभिनादितम् ॥ ११७ ॥

तत्र चैनं शुभा नार्यो दिव्याभरणभूषिताः ।
मनोभिरामा मधुरा रमयन्ति मदोत्कटाः ॥ ११८ ॥

भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः ।
दिव्यो दिव्येन वपुषा भ्राजमान इवामरः ॥ ११९ ॥

वसूनां मरुतां चैव साध्यानामश्विनोस्तथा ।
रुद्राणां च तथा लोकान्ब्रह्मलोकं च गच्छति ॥ १२० ॥

यस्तु मासे गते भुङ्क्ते एकभक्तं शमात्मकः ।
सदा द्वादश मासान्वै ब्रह्मलोकमवाप्नुयात् ॥ १२१ ॥

सुधारसकृताहारः श्रीमान्सर्वमनोहरः ।
तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव ॥ १२२ ॥

दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
सुखेष्वभिरतो योगी दुःखानामविजानकः ॥ १२३ ॥

स्वयंप्रभाभिर्नारीभिर्विमानस्थो महीयते ।
रुद्रदेवर्षिकन्याभिः सततं चाभिपूज्यते ॥ १२४ ॥

नानाविधसुरूपाभिर्नानारागाभिरेव च ।
नानामधुरभाषाभिर्नानारतिभिरेव च ॥ १२५ ॥

विमाने नगराकारे सूर्यवत्सूर्यसंनिभे ।
पृष्ठतः सोमसङ्काशे उदक्कैवाभ्रसंनिभे ॥ १२६ ॥

दक्षिणायां तु रक्ताभे अधस्तान्नीलमण्डले ।
ऊर्ध्वं चित्राभिसङ्काशे नैको वसति पूजितः ॥ १२७ ॥

यावद्वर्षसहस्रं तु जम्बूद्वीपे प्रवर्षति ।
तावत्संवत्सराः प्रोक्ता ब्रह्मलोकस्य धीमतः ॥ १२८ ॥

विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात् ।
वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः ॥ १२९ ॥

मासोपवासी वर्षैस्तु दशभिः स्वर्गमुत्तमम् ।
महर्षित्वमथासाद्य सशरीरगतिर्भवेत् ॥ १३० ॥

मुनिर्दान्तो जितक्रोधो जितशिश्नोदरः सदा ।
जुह्वन्नग्नींश्च नियतः संध्योपासनसेविता ॥ १३१ ॥

बहुभिर्नियमैरेवं मासानश्नाति यो नरः ।
अभ्रावकाशशीलश्च तस्य वासो निरुच्यते ॥ १३२ ॥

दिवं गत्वा शरीरेण स्वेन राजन्यथामरः ।
स्वर्गं पुण्यं यथाकाममुपभुङ्क्ते यथाविधि ॥ १३३ ॥

एष ते भरतश्रेष्ठ यज्ञानां विधिरुत्तमः ।
व्याख्यातो ह्यानुपूर्व्येण उपवासफलात्मकः ॥ १३४ ॥

दरिद्रैर्मनुजैः पार्थ प्राप्यं यज्ञफलं यथा ।
उपवासमिमं कृत्वा गच्छेच्च परमां गतिम् ॥ १३५ ॥

देवद्विजातिपूजायां रतो भरतसत्तम ॥ १३५ ॥

उपवासविधिस्त्वेष विस्तरेण प्रकीर्तितः ।
नियतेष्वप्रमत्तेषु शौचवत्सु महात्मसु ॥ १३६ ॥

दम्भद्रोहनिवृत्तेषु कृतबुद्धिषु भारत ।
अचलेष्वप्रकम्पेषु मा ते भूदत्र संशयः ॥ १३७ ॥

---

# शौचानुपृच्छा

## अध्याय १११

युधिष्ठिर उवाच ॥

यद्वरं सर्वतीर्थानां तद्ब्रवीहि पितामह ।
यत्र वै परमं शौचं तन्मे व्याख्यातुमर्हसि ॥ ००१ ॥

भीष्म उवाच ॥

सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणाम् ।
यत्तु तीर्थं च शौचं च तन्मे शृणु समाहितः ॥ ००२ ॥

अगाधे विमले शुद्धे सत्यतोये धृतिह्रदे ।
स्नातव्यं मानसे तीर्थे सत्त्वमालम्ब्य शाश्वतम् ॥ ००३ ॥

तीर्थशौचमनर्थित्वमार्दवं सत्यमार्जवम् ।
अहिंसा सर्वभूतानामानृशंस्यं दमः शमः ॥ ००४ ॥

निर्ममा निरहङ्कारा निर्द्वंद्वा निष्परिग्रहाः ।
शुचयस्तीर्थभूतास्ते ये भैक्षमुपभुञ्जते ॥ ००५ ॥

तत्त्ववित्त्वनहंबुद्धिस्तीर्थं परममुच्यते ।
शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षणम् ॥ ००६ ॥

रजस्तमः सत्त्वमथो येषां निर्धौतमात्मनः ।
शौचाशौचे न ते सक्ताः स्वकार्यपरिमार्गिणः ॥ ००७ ॥

सर्वत्यागेष्वभिरताः सर्वज्ञाः सर्वदर्शिनः ।
शौचेन वृत्तशौचार्थास्ते तीर्थाः शुचयश्च ते ॥ ००८ ॥

नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते ।
स स्नातो यो दमस्नातः सबाह्याभ्यन्तरः शुचिः ॥ ००९ ॥

अतीतेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥ ०१० ॥

प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः ।
तथा निष्किञ्चनत्वं च मनसश्च प्रसन्नता ॥ ०११ ॥

वृत्तशौचं मनःशौचं तीर्थशौचं परं हितम् ।
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं मतम् ॥ ०१२ ॥

मनसाथ प्रदीपेन ब्रह्मज्ञानबलेन च ।
स्नाता ये मानसे तीर्थे तज्ज्ञाः क्षेत्रज्ञदर्शिनः ॥ ०१३ ॥

समारोपितशौचस्तु नित्यं भावसमन्वितः ।
केवलं गुणसंपन्नः शुचिरेव नरः सदा ॥ ०१४ ॥

शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत ।

पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि  ॥ ०१५  ॥

यथा शरीरस्योद्देशाः शुचयः परिनिर्मिताः ।
तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च  ॥ ०१६  ॥

प्रार्थनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात् ।
धुनन्ति पापं तीर्थेषु पूता यान्ति दिवं सुखम्  ॥ ०१७  ॥

परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा ।
अतीव पुण्यास्ते भागाः सलिलस्य च तेजसा  ॥ ०१८  ॥

मनसश्च पृथिव्याश्च पुण्यतीर्थास्तथापरे ।
उभयोरेव यः स्नातः स सिद्धिं शीघ्रमाप्नुयात्  ॥ ०१९  ॥

यथा बलं क्रियाहीनं क्रिया वा बलवर्जिता ।
नेह साधयते कार्यं समायुक्तस्तु सिध्यति  ॥ ०२०  ॥

एवं शरीरशौचेन तीर्थशौचेन चान्वितः ।
ततः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम्  ॥ ०२१  ॥

---

# संसारचक्रम्

## अध्याय ११२

युधिष्ठिर उवाच  ॥

पितामह महाबाहो सर्वशास्त्रविशारद ।
श्रोतुमिच्छामि मर्त्यानां संसारविधिमुत्तमम्  ॥ ००१  ॥

केन वृत्तेन राजेन्द्र वर्तमाना नरा युधि ।
प्राप्नुवन्त्युत्तमं स्वर्गं कथं च नरकं नृप ॥ ००२ ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
प्रयान्त्यमुं लोकमितः को वैताननुगच्छति ॥ ००३ ॥

भीष्म उवाच ॥

असावायाति भगवान्बृहस्पतिरुदारधीः ।
पृच्छैनं सुमहाभागमेतद्गुह्यं सनातनम् ॥ ००४ ॥

नैतदन्येन शक्यं हि वक्तुं केनचिदद्य वै ।
वक्ता बृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ॥ ००५ ॥

वैशंपायन उवाच ॥

तयोः संवदतोरेवं पार्थगाङ्गेययोस्तदा ।
आजगाम विशुद्धात्मा भगवान्स बृहस्पतिः ॥ ००६ ॥

ततो राजा समुत्थाय धृतराष्ट्रपुरोगमः ।
पूजामनुपमां चक्रे सर्वे ते च सभासदः ॥ ००७ ॥

ततो धर्मसुतो राजा भगवन्तं बृहस्पतिम् ।
उपगम्य यथान्यायं प्रश्नं पप्रच्छ सुव्रतः ॥ ००८ ॥

युधिष्ठिर उवाच ॥

भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
मर्त्यस्य कः सहायो वै पिता माता सुतो गुरुः ॥ ००९ ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
गच्छन्त्यमुत्रलोकं वै क एनमनुगच्छति ॥ ०१० ॥

बृहस्पतिरुवाच ॥

एकः प्रसूतो राजेन्द्र जन्तुरेको विनश्यति ।
एकस्तरति दुर्गाणि गच्छत्येकश्च दुर्गतिम् ॥ ०११ ॥

असहायः पिता माता तथा भ्राता सुतो गुरुः ।
ज्ञातिसंबन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ ०१२ ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
मुहूर्तमुपतिष्ठन्ति ततो यान्ति पराङ्मुखाः ॥ ०१३ ॥

तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ॥ ०१३ ॥

तस्माद्धर्मः सहायार्थे सेवितव्यः सदा नृभिः ।
प्राणी धर्मसमायुक्तो गच्छते स्वर्गतिं पराम् ॥ ०१४ ॥

तथैवाधर्मसंयुक्तो नरकायोपपद्यते ॥ ०१४ ॥

तस्मान्न्यायागतैरर्थैर्धर्मं सेवेत पण्डितः ।
धर्म एको मनुष्याणां सहायः पारलौकिकः ॥ ०१५ ॥

लोभान्मोहादनुक्रोशाद्भयाद्वाप्यबहुश्रुतः ।
नरः करोत्यकार्याणि परार्थे लोभमोहितः ॥ ०१६ ॥

धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम् ॥ ०१७ ॥

युधिष्ठिर उवाच ॥

श्रुतं भगवतो वाक्यं धर्मयुक्तं परं हितम् ।
शरीरविचयं ज्ञातुं बुद्धिस्तु मम जायते ॥ ०१८ ॥

मृतं शरीररहितं सूक्ष्ममव्यक्ततां गतम् ।
अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति ॥ ०१९ ॥

बृहस्पतिरुवाच ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
बुद्धिरात्मा च सहिता धर्मं पश्यन्ति नित्यदा ॥ ०२० ॥

प्राणिनामिह सर्वेषां साक्षिभूतानि चानिशम् ।
एतैश्च स ह धर्मोऽपि तं जीवमनुगच्छति ॥ ०२१ ॥

त्वगस्थिमांसं शुक्रं च शोणितं च महामते ।
शरीरं वर्जयन्त्येते जीवितेन विवर्जितम् ॥ ०२२ ॥

ततो धर्मसमायुक्तः स जीवः सुखमेधते ।
इह लोके परे चैव किं भूयः कथयामि ते ॥ ०२३ ॥

युधिष्ठिर उवाच ॥

अनुदर्शितं भगवता यथा धर्मोऽनुगच्छति ।
एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्तते ॥ ०२४ ॥

बृहस्पतिरुवाच ॥

अन्नमश्नन्ति ये देवाः शरीरस्था नरेश्वर ।
पृथिवी वायुराकाशमापो ज्योतिर्मनस्तथा ॥ ०२५ ॥

ततस्तृप्तेषु राजेन्द्र तेषु भूतेषु पञ्चसु ।
मनःषष्ठेषु शुद्धात्मन्रेतः संपद्यते महत् ॥ ०२६ ॥

ततो गर्भः संभवति स्त्रीपुंसोः पार्थ सङ्गमे ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ०२७ ॥

युधिष्ठिर उवाच ॥

आख्यातमेतद्भवता गर्भः सञ्जायते यथा ।
यथा जातस्तु पुरुषः प्रपद्यति तदुच्यताम् ॥ ०२८ ॥

बृहस्पतिरुवाच ॥

आसन्नमात्रः सततं तैर्भूतैरभिभूयते ।
विप्रमुक्तश्च तैर्भूतैः पुनर्यात्यपरां गतिम् ॥ ०२९ ॥

स तु भूतसमायुक्तः प्राप्नुते जीव एव ह ॥ ०२९ ॥

ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाशुभम् ।
देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि ॥ ०३० ॥

युधिष्ठिर उवाच ॥

त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्विवर्जितः ।
जीवः स भगवन्क्वस्थः सुखदुःखे समश्नुते ॥ ०३१ ॥

बृहस्पतिरुवाच ॥

जीवो धर्मसमायुक्तः शीघ्रं रेतस्त्वमागतः ।
स्त्रीणां पुष्पं समासाद्य सूते कालेन भारत ॥ ०३२ ॥

यमस्य पुरुषैः क्लेशं यमस्य पुरुषैर्वधम् ।
दुःखं संसारचक्रं च नरः क्लेशं च विन्दति ॥ ०३३ ॥

इहलोके च स प्राणी जन्मप्रभृति पार्थिव ।
स्वकृतं कर्म वै भुङ्क्ते धर्मस्य फलमाश्रितः ॥ ०३४ ॥

यदि धर्मं यथाशक्ति जन्मप्रभृति सेवते ।
ततः स पुरुषो भूत्वा सेवते नित्यदा सुखम् ॥ ०३५ ॥

अथान्तरा तु धर्मस्य अधर्ममुपसेवते ।
सुखस्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति ॥ ०३६ ॥

अधर्मेण समायुक्तो यमस्य विषयं गतः ।
महद्दुःखं समासाद्य तिर्यग्योनौ प्रजायते ॥ ०३७ ॥

कर्मणा येन येनेह यस्यां योनौ प्रजायते ।
जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु ॥ ०३८ ॥

यदेतदुच्यते शास्त्रे सेतिहासे सच्छन्दसि ।
यमस्य विषयं घोरं मर्त्यो लोकः प्रपद्यते ॥ ०३९ ॥

अधीत्य चतुरो वेदान्द्विजो मोहसमन्वितः ।
पतितात्प्रतिगृह्याथ खरयोनौ प्रजायते ॥ ०४० ॥

खरो जीवति वर्षाणि दश पञ्च च भारत ।
खरो मृतो बलीवर्दः सप्त वर्षाणि जीवति ॥ ०४१ ॥

बलीवर्दो मृतश्चापि जायते ब्रह्मराक्षसः ।
ब्रह्मरक्षस्तु त्रीन्मासांस्ततो जायति ब्राह्मणः ॥ ०४२ ॥

पतितं याजयित्वा तु कृमियोनौ प्रजायते ।

तत्र जीवति वर्षाणि दश पञ्च च भारत ॥ ०४३ ॥

कृमिभावात्प्रमुक्तस्तु ततो जायति गर्दभः ।
गर्दभः पञ्च वर्षाणि पञ्च वर्षाणि सूकरः ॥ ०४४ ॥

श्वा वर्षमेकं भवति ततो जायति मानवः ॥ ०४४ ॥

उपाध्यायस्य यः पापं शिष्यः कुर्यादबुद्धिमान् ।
स जीव इह संसारांस्त्रीनाप्नोति न संशयः ॥ ०४५ ॥

प्राक्श्वा भवति राजेन्द्र ततः क्रव्यात्ततः खरः ।
ततः प्रेतः परिक्लिष्टः पश्चाज्जायति ब्राह्मणः ॥ ०४६ ॥

मनसापि गुरोर्भार्यां यः शिष्यो याति पापकृत् ।
सोऽधमान्याति संसारानधर्मेणेह चेतसा ॥ ०४७ ॥

श्वयोनौ तु स संभूतस्त्रीणि वर्षाणि जीवति ।
तत्रापि निधनं प्राप्तः कृमियोनौ प्रजायते ॥ ०४८ ॥

कृमिभावमनुप्राप्तो वर्षमेकं स जीवति ।
ततस्तु निधनं प्राप्य ब्रह्मयोनौ प्रजायते ॥ ०४९ ॥

यदि पुत्रसमं शिष्यं गुरुर्हन्यादकारणे ।
आत्मनः कामकारेण सोऽपि हंसः प्रजायते ॥ ०५० ॥

पितरं मातरं वापि यस्तु पुत्रोऽवमन्यते ।
सोऽपि राजन्मृतो जन्तुः पूर्वं जायति गर्दभः ॥ ०५१ ॥

खरो जीवति मासांस्तु दश श्वा च चतुर्दश ।
बिडालः सप्त मासांस्तु ततो जायति मानवः ॥ ०५२ ॥

मातापितरमाक्रुश्य सारिकः संप्रजायते ।
ताडयित्वा तु तावेव जायते कच्छपो नृप ॥ ०५३ ॥

कच्छपो दश वर्षाणि त्रीणि वर्षाणि शल्यकः ।
व्यालो भूत्वा तु षण्मासांस्ततो जायति मानुषः ॥ ०५४ ॥

भर्तृपिण्डमुपाश्नन्यो राजद्विष्टानि सेवते ।
सोऽपि मोहसमापन्नो मृतो जायति वानरः ॥ ०५५ ॥

वानरो दश वर्षाणि त्रीणि वर्षाणि मूषकः ।
श्वा भूत्वा चाथ षण्मासांस्ततो जायति मानुषः ॥ ०५६ ॥

न्यासापहर्ता तु नरो यमस्य विषयं गतः ।
संसाराणां शतं गत्वा कृमियोनौ प्रजायते ॥ ०५७ ॥

तत्र जीवति वर्षाणि दश पञ्च च भारत ।
दुष्कृतस्य क्षयं गत्वा ततो जायति मानुषः ॥ ०५८ ॥

असूयको नरश्चापि मृतो जायति शार्ङ्गकः ।
विश्वासहर्ता तु नरो मीनो जायति दुर्मतिः ॥ ०५९ ॥

भूत्वा मीनोऽष्ट वर्षाणि मृगो जायति भारत ।
मृगस्तु चतुरो मासांस्ततश्छागः प्रजायते ॥ ०६० ॥

छागस्तु निधनं प्राप्य पूर्णे संवत्सरे ततः ।
कीटः सञ्जायते जन्तुस्ततो जायति मानुषः ॥ ०६१ ॥

धान्यान्यवांस्तिलान्माषान्कुलत्थान्सर्षपांश्चणान् ।
कलायानथ मुद्गांश्च गोधूमानतसीस्तथा ॥ ०६२ ॥

सस्यस्यान्यस्य हर्ता च मोहाज्जन्तुरचेतनः ।

स जायते महाराज मूषको निरपत्रपः ॥ ०६३ ॥

ततः प्रेत्य महाराज पुनर्जायति सूकरः ।
सूकरो जातमात्रस्तु रोगेण म्रियते नृप ॥ ०६४ ॥

श्वा ततो जायते मूढः कर्मणा तेन पार्थिव ।
श्वा भूत्वा पञ्च वर्षाणि ततो जायति मानुषः ॥ ०६५ ॥

परदाराभिमर्शं तु कृत्वा जायति वै वृकः ।
श्वा सृगालस्ततो गृध्रो व्यालः कङ्को बकस्तथा ॥ ०६६ ॥

भ्रातुर्भार्यां तु दुर्बुद्धिर्यो धर्षयति मोहितः ।
पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप ॥ ०६७ ॥

सखिभार्यां गुरोर्भार्यां राजभार्यां तथैव च ।
प्रधर्षयित्वा कामाद्यो मृतो जायति सूकरः ॥ ०६८ ॥

सूकरः पञ्च वर्षाणि पञ्च वर्षाणि श्वाविधः ।
पिपीलकस्तु षण्मासान्कीटः स्यान्मासमेव च ॥ ०६९ ॥

एतानासाद्य संसारान्कृमियोनौ प्रजायते ॥ ०६९ ॥

तत्र जीवति मासांस्तु कृमियोनौ त्रयोदश ।
ततोऽधर्मक्षयं कृत्वा पुनर्जायति मानुषः ॥ ०७० ॥

उपस्थिते विवाहे तु दाने यज्ञेऽपि वाभिभो ।
मोहात्करोति यो विघ्नं स मृतो जायते कृमिः ॥ ०७१ ॥

कृमिर्जीवति वर्षाणि दश पञ्च च भारत ।
अधर्मस्य क्षयं कृत्वा ततो जायति मानुषः ॥ ०७२ ॥

पूर्वं दत्त्वा तु यः कन्यां द्वितीये संप्रयच्छति ।
सोऽपि राजन्मृतो जन्तुः कृमियोनौ प्रजायते ॥ ०७३ ॥

तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर ।
अधर्मसङ्क्षये युक्तस्ततो जायति मानुषः ॥ ०७४ ॥

देवकार्यमुपाकृत्य पितृकार्यमथापि च ।
अनिर्वाप्य समश्नन्वै ततो जायति वायसः ॥ ०७५ ॥

वायसो दश वर्षाणि ततो जायति कुक्कुटः ।
जायते लवकश्चापि मासं तस्मात्तु मानुषः ॥ ०७६ ॥

ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते ।
सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते ॥ ०७७ ॥

क्रौञ्चो जीवति मासांस्तु दश द्वौ सप्त पञ्च च ।
ततो निधनमापन्नो मानुषत्वमुपाश्नुते ॥ ०७८ ॥

वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
तत्रापत्यं समुत्पाद्य ततो जायति मूषकः ॥ ०७९ ॥

कृतघ्नस्तु मृतो राजन्यमस्य विषयं गतः ।
यमस्य विषये क्रुद्धैर्वधं प्राप्नोति दारुणम् ॥ ०८० ॥

पट्टिसं मुद्गरं शूलमग्निकुम्भं च दारुणम् ।
असिपत्रवनं घोरं वालुकां कूटशाल्मलीम् ॥ ०८१ ॥

एताश्चान्याश्च बह्वीः स यमस्य विषयं गतः ।
यातनाः प्राप्य तत्रोग्रास्ततो वध्यति भारत ॥ ०८२ ॥

संसारचक्रमासाद्य कृमियोनौ प्रजायते ।

कृमिर्भवति वर्षाणि दश पञ्च च भारत ॥ ०८३ ॥

ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः ॥ ०८३ ॥

ततो गर्भशतैर्जन्तुर्बहुभिः संप्रजायते ।
संसारांश्च बहून्गत्वा ततस्तिर्यक्प्रजायते ॥ ०८४ ॥

मृतो दुःखमनुप्राप्य बहुवर्षगणानिह ।
अपुनर्भावसंयुक्तस्ततः कूर्मः प्रजायते ॥ ०८५ ॥

अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः ।
अर्थार्थी यदि वा वैरी स मृतो जायते खरः ॥ ०८६ ॥

खरो जीवति वर्षे द्वे ततः शस्त्रेण वध्यते ।
स मृतो मृगयोनौ तु नित्योद्विग्नोऽभिजायते ॥ ०८७ ॥

मृगो वध्यति शस्त्रेण गते संवत्सरे तु सः ।
हतो मृगस्ततो मीनः सोऽपि जालेन बध्यते ॥ ०८८ ॥

मासे चतुर्थे संप्राप्ते श्वापदः संप्रजायते ।
श्वापदो दश वर्षाणि द्वीपी वर्षाणि पञ्च च ॥ ०८९ ॥

ततस्तु निधनं प्राप्तः कालपर्यायचोदितः ।
अधर्मस्य क्षयं कृत्वा ततो जायति मानुषः ॥ ०९० ॥

स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं गतः ।
बहून्क्लेशान्समासाद्य संसारांश्चैव विंशतिम् ॥ ०९१ ॥

ततः पश्चान्महाराज कृमियोनौ प्रजायते ।
कृमिर्विंशतिवर्षाणि भूत्वा जायति मानुषः ॥ ०९२ ॥

भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
मक्षिकासंघवशगो बहून्मासान्भवत्युत ॥ ०९३ ॥

ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते ॥ ०९३ ॥

वाद्यं हृत्वा तु पुरुषो मशकः संप्रजायते ।
तथा पिण्याकसंमिश्रमशनं चोरयेन्नरः ॥ ०९४ ॥

स जायते बभ्रुसमो दारुणो मूषको नरः ॥ ०९४ ॥

लवणं चोरयित्वा तु चीरीवाकः प्रजायते ।
दधि हृत्वा बकश्चापि प्लवो मत्स्यानसंस्कृतान् ॥ ०९५ ॥

चोरयित्वा पयश्चापि बलाका संप्रजायते ।
यस्तु चोरयते तैलं तैलपायी प्रजायते ॥ ०९६ ॥

चोरयित्वा तु दुर्बुद्धिर्मधु दंशः प्रजायते ॥ ०९६ ॥

अयो हृत्वा तु दुर्बुद्धिर्वायसो जायते नरः ।
पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते ॥ ०९७ ॥

हृत्वा पैष्टमपूपं च कुम्भोलूकः प्रजायते ।
फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकः ॥ ०९८ ॥

कांस्यं हृत्वा तु दुर्बुद्धिर्हारीतो जायते नरः ।
राजतं भाजनं हृत्वा कपोतः संप्रजायते ॥ ०९९ ॥

हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ।
क्रौञ्चः कार्पासिकं हृत्वा मृतो जायति मानवः ॥ १०० ॥

चोरयित्वा नरः पट्टं त्वाविकं वापि भारत ।

क्षौमं च वस्त्रमादाय शशो जन्तुः प्रजायते ॥ १०१ ॥

वर्णान्हृत्वा तु पुरुषो मृतो जायति बर्हिणः ।
हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः ॥ १०२ ॥

वर्णकादींस्तथा गन्धांश्चोरयित्वा तु मानवः ।
छुच्छुन्दरित्वमाप्नोति राज.ण्लोभपरायणः ॥ १०३ ॥

विश्वासेन तु निक्षिप्तं यो निह्नवति मानवः ।
स गतासुर्नरस्तादृङ्मत्स्ययोनौ प्रजायते ॥ १०४ ॥

मत्स्ययोनिमनुप्राप्य मृतो जायति मानुषः ।
मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते ॥ १०५ ॥

पापानि तु नरः कृत्वा तिर्यग्जायति भारत ।
न चात्मनः प्रमाणं ते धर्मं जानन्ति किञ्चन ॥ १०६ ॥

ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा ।
सुखदुःखसमायुक्ता व्याधितास्ते भवन्त्युत ॥ १०७ ॥

असंवासाः प्रजायन्ते म्लेच्छाश्चापि न संशयः ।
नराः पापसमाचारा लोभमोहसमन्विताः ॥ १०८ ॥

वर्जयन्ति च पापानि जन्मप्रभृति ये नराः ।
अरोगा रूपवन्तस्ते धनिनश्च भवन्त्युत ॥ १०९ ॥

स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः ।
एतेषामेव जन्तूनां पत्नीत्वमुपयान्ति ताः ॥ ११० ॥

परस्वहरणे दोषाः सर्व एव प्रकीर्तिताः ।
एतद्वै लेशमात्रेण कथितं ते मयानघ ॥ १११ ॥

अपरस्मिन्कथायोगे भूयः श्रोष्यसि भारत ॥ १११ ॥

एतन्मया महाराज ब्रह्मणो वदतः पुरा ।
सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि यथातथम् ॥ ११२ ॥

मयापि तव कात्स्न्र्येन यथावदनुवर्णितम् ।
एतच्छ्रुत्वा महाराज धर्मे कुरु मनः सदा ॥ ११३ ॥

---

# अध्याय ११३

युधिष्ठिर उवाच ॥

अधर्मस्य गतिर्ब्रह्मन्कथिता मे त्वयानघ ।
धर्मस्य तु गतिं श्रोतुमिच्छामि वदतां वर ॥ ००१ ॥

कृत्वा कर्माणि पापानि कथं यान्ति शुभां गतिम् ॥ ००१ ॥

बृहस्पतिरुवाच ॥

कृत्वा पापानि कर्माणि अधर्मवशमागतः ।
मनसा विपरीतेन निरयं प्रतिपद्यते ॥ ००२ ॥

मोहादधर्मं यः कृत्वा पुनः समनुतप्यते ।
मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतम् ॥ ००३ ॥

यथा यथा नरः सम्यगधर्ममनुभाषते ।
समाहितेन मनसा विमुच्यति तथा तथा ॥ ००४ ॥

भुजङ्ग इव निर्मोकात्पूर्वभुक्ताज्जरान्वितात्  ॥ ००४  ॥

अदत्त्वापि प्रदानानि विविधानि समाहितः ।
मनःसमाधिसंयुक्तः सुगतिं प्रतिपद्यते  ॥ ००५  ॥

प्रदानानि तु वक्ष्यामि यानि दत्त्वा युधिष्ठिर ।
नरः कृत्वाप्यकार्याणि तदा धर्मेण युज्यते  ॥ ००६  ॥

सर्वेषामेव दानानामन्नं श्रेष्ठमुदाहृतम् ।
पूर्वमन्नं प्रदातव्यमृजुना धर्ममिच्छता  ॥ ००७  ॥

प्राणा ह्यन्नं मनुष्याणां तस्माज्जन्तुश्च जायते ।
अन्ने प्रतिष्ठिता लोकास्तस्मादन्नं प्रकाशते  ॥ ००८  ॥

अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ।
अन्नस्य हि प्रदानेन स्वर्गमाप्नोति कौशिकः  ॥ ००९  ॥

न्यायलब्धं प्रदातव्यं द्विजेभ्यो ह्यन्नमुत्तमम् ।
स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना  ॥ ०१०  ॥

यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शता दश ।
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत्  ॥ ०११  ॥

ब्राह्मणानां सहस्राणि दश भोज्य नरर्षभ ।
नरोऽधर्मात्प्रमुच्येत पापेष्वभिरतः सदा  ॥ ०१२  ॥

भैक्षेणान्नं समाहृत्य विप्रो वेदपुरस्कृतः ।
स्वाध्यायनिरते विप्रे दत्त्वेह सुखमेधते  ॥ ०१३  ॥

अहिंसन्ब्राह्मणं नित्यं न्यायेन परिपाल्य च ।

क्षत्रियस्तरसा प्राप्तमन्नं यो वै प्रयच्छति ॥ ०१४ ॥

द्विजेभ्यो वेदवृद्धेभ्यः प्रयतः सुसमाहितः ।
तेनापोहति धर्मात्मा दुष्कृतं कर्म पाण्डव ॥ ०१५ ॥

षड्भागपरिशुद्धं च कृषेर्भागमुपार्जितम् ।
वैश्यो ददद्द्विजातिभ्यः पापेभ्यः परिमुच्यते ॥ ०१६ ॥

अवाप्य प्राणसंदेहं कार्कश्येन समार्जितम् ।
अन्नं दत्त्वा द्विजातिभ्यः शूद्रः पापात्प्रमुच्यते ॥ ०१७ ॥

औरसेन बलेनान्नमर्जयित्वाविहिंसकः ।
यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि सेवते ॥ ०१८ ॥

न्यायेनावाप्तमन्नं तु नरो लोभविवर्जितः ।
द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात्प्रमुच्यते ॥ ०१९ ॥

अन्नमूर्जस्करं लोके दत्त्वोर्जस्वी भवेन्नरः ।
सतां पन्थानमाश्रित्य सर्वपापात्प्रमुच्यते ॥ ०२० ॥

दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते स्म प्राणस्य दातारस्तेभ्यो धर्मः सनातनः ॥ ०२१ ॥

सर्वावस्थं मनुष्येण न्यायेनान्नमुपार्जितम् ।
कार्यं पात्रगतं नित्यमन्नं हि परमा गतिः ॥ ०२२ ॥

अन्नस्य हि प्रदानेन नरो दुर्गं न सेवते ।
तस्मादन्नं प्रदातव्यमन्यायपरिवर्जितम् ॥ ०२३ ॥

यतेद्ब्राह्मणपूर्वं हि भोक्तुमन्नं गृही सदा ।
अवन्ध्यं दिवसं कुर्यादन्नदानेन मानवः ॥ ०२४ ॥

भोजयित्वा दशशतं नरो वेदविदां नृप ।
न्यायविद्धर्मविदुषामितिहासविदां तथा ॥ ०२५ ॥

न याति नरकं घोरं संसारांश्च न सेवते ।
सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते फलम् ॥ ०२६ ॥

एवं सुखसमायुक्तो रमते विगतज्वरः ।
रूपवान्कीर्तिमांश्चैव धनवांश्चोपपद्यते ॥ ०२७ ॥

एतत्ते सर्वमाख्यातमन्नदानफलं महत् ।
मूलमेतद्धि धर्माणां प्रदानस्य च भारत ॥ ०२८ ॥

---

# अध्याय ११४

युधिष्ठिर उवाच ॥

अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः ।
तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥ ००१ ॥

बृहस्पतिरुवाच ॥

सर्वाण्येतानि धर्मस्य पृथग्द्वाराणि सर्वशः ।
शृणु सङ्कीर्त्यमानानि षडेव भरतर्षभ ॥ ००२ ॥

हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं यः साधयति वै नरः ॥ ००३ ॥

त्रीन्दोषान्सर्वभूतेषु निधाय पुरुषः सदा ।
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥ ००४ ॥

अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनः सुखमन्विच्छन्न स प्रेत्य सुखी भवेत् ॥ ००५ ॥

आत्मोपमश्च भूतेषु यो वै भवति पूरुषः ।
न्यस्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ॥ ००६ ॥

सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ००७ ॥

न तत्परस्य संदद्यात्प्रतिकूलं यदात्मनः ।
एष सङ्क्षेपतो धर्मः कामादन्यः प्रवर्तते ॥ ००८ ॥

प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः समाधिमधिगच्छति ॥ ००९ ॥

यथा परः प्रक्रमतेऽपरेषु ; तथापरः प्रक्रमते परस्मिन् ।
एषैव तेऽस्तूपमा जीवलोके ; यथा धर्मो नैपुणेनोपदिष्टः ॥ ०१० ॥

वैशंपायन उवाच ॥

इत्युक्त्वा तं सुरगुरुर्धर्मराजं युधिष्ठिरम् ।
दिवमाचक्रमे धीमान्पश्यतामेव नस्तदा ॥ ०११ ॥

# अहिंसाफलम्

## अध्याय ११५

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा शरतल्पे पितामहम् ।
पुनरेव महातेजाः पप्रच्छ वदतां वरम् ॥ ००१ ॥

ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते ।
अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात् ॥ ००२ ॥

कर्मणा मनुजः कुर्वन्हिंसां पार्थिवसत्तम ।
वाचा च मनसा चैव कथं दुःखात्प्रमुच्यते ॥ ००३ ॥

भीष्म उवाच ॥

चतुर्विधेयं निर्दिष्टा अहिंसा ब्रह्मवादिभिः ।
एषैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ॥ ००४ ॥

यथा सर्वश्चतुष्पादस्त्रिभिः पादैर्न तिष्ठति ।
तथैवेयं महीपाल प्रोच्यते कारणैस्त्रिभिः ॥ ००५ ॥

यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ ००६ ॥

एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः परा ॥ ००६ ॥

कर्मणा लिप्यते जन्तुर्वाचा च मनसैव च ।
पूर्वं तु मनसा त्यक्त्वा तथा वाचाथ कर्मणा ।
त्रिकारणं तु निर्दिष्टं श्रूयते ब्रह्मवादिभिः ॥ ००८ ॥

मनोवाचि तथास्वादे दोषा ह्येषु प्रतिष्ठिताः ।
न भक्षयन्त्यतो मांसं तपोयुक्ता मनीषिणः ॥ ००९ ॥

दोषांस्तु भक्षणे राजन्मांसस्येह निबोध मे ।
पुत्रमांसोपमं जानन्खादते यो विचेतनः ॥ ०१० ॥

मातापितृसमायोगे पुत्रत्वं जायते यथा ।
रसं च प्रति जिह्वायाः प्रज्ञानं जायते तथा ॥ ०११ ॥

तथा शास्त्रेषु नियतं रागो ह्यास्वादिताद्भवेत् ॥ ०११ ॥

असंस्कृताः संस्कृताश्च लवणालवणास्तथा ।
प्रज्ञायन्ते यथा भावास्तथा चित्तं निरुध्यते ॥ ०१२ ॥

भेरीशङ्खमृदङ्गाद्यांस्तन्त्रीशब्दांश्च पुष्कलान् ।
निषेविष्यन्ति वै मन्दा मांसभक्षाः कथं नराः ॥ ०१३ ॥

अचिन्तितमनुद्दिष्टमसङ्कल्पितमेव च ।
रसं गृद्ध्याभिभूता वै प्रशंसन्ति फलार्थिनः ॥ ०१४ ॥

प्रशंसा ह्येव मांसस्य दोषकर्मफलान्विता ॥ ०१४ ॥

जीवितं हि परित्यज्य बहवः साधवो जनाः ।
स्वमांसैः परमांसानि परिपाल्य दिवं गताः ॥ ०१५ ॥

एवमेषा महाराज चतुर्भिः कारणैर्वृता ।
अहिंसा तव निर्दिष्टा सर्वधर्मार्थसंहिता ॥ ०१६ ॥

# अध्याय ११६

युधिष्ठिर उवाच ॥

अहिंसा परमो धर्म इत्युक्तं बहुशस्त्वया ।
श्राद्धेषु च भवानाह पितॄनामिषकाङ्क्षिणः ॥ ००१ ॥

मांसैर्बहुविधैः प्रोक्तस्त्वया श्राद्धविधिः पुरा ।
अहत्वा च कुतो मांसमेवमेतद्विरुध्यते ॥ ००२ ॥

जातो नः संशयो धर्मे मांसस्य परिवर्जने ।
दोषो भक्षयतः कः स्यात्कश्चाभक्षयतो गुणः ॥ ००३ ॥

हत्वा भक्षयतो वापि परेणोपहृतस्य वा ।
हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ॥ ००४ ॥

एतदिच्छामि तत्त्वेन कथ्यमानं त्वयानघ ।
निश्चयेन चिकीर्षामि धर्ममेतं सनातनम् ॥ ००५ ॥

कथमायुरवाप्नोति कथं भवति सत्त्ववान् ।
कथमव्यङ्गतामेति लक्षण्यो जायते कथम् ॥ ००६ ॥

भीष्म उवाच ॥

मांसस्य भक्षणे राजन्योऽधर्मः कुरुपुङ्गव ।
तं मे शृणु यथातत्त्वं यश्चास्य विधिरुत्तमः ॥ ००७ ॥

रूपमव्यङ्गतामायुर्बुद्धिं सत्त्वं बलं स्मृतिम् ।
प्राप्तुकामैर्नरैर्हिंसा वर्जिता वै कृतात्मभिः ॥ ००८ ॥

ऋषीणामत्र संवादो बहुशः कुरुपुङ्गव ।
बभूव तेषां तु मतं यत्तच्छृणु युधिष्ठिर ॥ ००९ ॥

यो यजेताश्वमेधेन मासि मासि यतव्रतः ।
वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर ॥ ०१० ॥

सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः ।
अमांसभक्षणं राजन्प्रशंसन्ति मनीषिणः ॥ ०११ ॥

न भक्षयति यो मांसं न हन्यान्न च घातयेत् ।
तं मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत् ॥ ०१२ ॥

अधृष्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
साधूनां संमतो नित्यं भवेन्मांसस्य वर्जनात् ॥ ०१३ ॥

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
नारदः प्राह धर्मात्मा नियतं सोऽवसीदति ॥ ०१४ ॥

ददाति यजते चापि तपस्वी च भवत्यपि ।
मधुमांसनिवृत्त्येति प्राहैवं स बृहस्पतिः ॥ ०१५ ॥

मासि मास्यश्वमेधेन यो यजेत शतं समाः ।
न खादति च यो मांसं सममेतन्मतं मम ॥ ०१६ ॥

सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति मधुमांसस्य वर्जनात् ॥ ०१७ ॥

सर्वे वेदा न तत्कुर्युः सर्वयज्ञाश्च भारत ।
यो भक्षयित्वा मांसानि पश्चादपि निवर्तते ॥ ०१८ ॥

दुष्करं हि रसज्ञेन मांसस्य परिवर्जनम् ।
चर्तुं व्रतमिदं श्रेष्ठं सर्वप्राण्यभयप्रदम् ॥ ०१९ ॥

सर्वभूतेषु यो विद्वान्ददात्यभयदक्षिणाम् ।
दाता भवति लोके स प्राणानां नात्र संशयः ॥ ०२० ॥

एवं वै परमं धर्मं प्रशंसन्ति मनीषिणः ।
प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ॥ ०२१ ॥

आत्मौपम्येन गन्तव्यं बुद्धिमद्भिर्महात्मभिः ।
मृत्युतो भयमस्तीति विदुषां भूतिमिच्छताम् ॥ ०२२ ॥

किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम् ।
अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥ ०२३ ॥

तस्माद्विद्धि महाराज मांसस्य परिवर्जनम् ।
धर्मस्यायतनं श्रेष्ठं स्वर्गस्य च सुखस्य च ॥ ०२४ ॥

अहिंसा परमो धर्मस्तथाहिंसा परं तपः ।
अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते ॥ ०२५ ॥

न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते ।
हत्वा जन्तुं ततो मांसं तस्माद्दोषोऽस्य भक्षणे ॥ ०२६ ॥

स्वाहास्वधामृतभुजो देवाः सत्यार्जवप्रियाः ।
क्रव्यादान्राक्षसान्विद्धि जिह्मानृतपरायणान् ॥ ०२७ ॥

कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च ।
रात्रावहनि संध्यासु चत्वरेषु सभासु च ॥ ०२८ ॥

अमांसभक्षणे राजन्भयमन्ते न गच्छति ॥ ०२८ ॥

यदि चेत्खादको न स्यान्न तदा घातको भवेत् ।
घातकः खादकार्थाय तं घातयति वै नरः ॥ ०२९ ॥

अभक्ष्यमेतदिति वा इति हिंसा निवर्तते ।
खादकार्थमतो हिंसा मृगादीनां प्रवर्तते ॥ ०३० ॥

यस्माद्ग्रसति चैवायुर्हिंसकानां महाद्युते ।
तस्माद्विवर्जयेन्मांसं य इच्छेद्भूतिमात्मनः ॥ ०३१ ॥

त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः ।
उद्वेजनीया भूतानां यथा व्यालमृगास्तथा ॥ ०३२ ॥

लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव च ।
संसर्गाद्वाथ पापानामधर्मरुचिता नृणाम् ॥ ०३३ ॥

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नवासे वसति यत्रतत्राभिजायते ॥ ०३४ ॥

धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः ॥ ०३५ ॥

इदं तु खलु कौन्तेय श्रुतमासीत्पुरा मया ।
मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ॥ ०३६ ॥

यो हि खादति मांसानि प्राणिनां जीवितार्थिनाम् ।
हतानां वा मृतानां वा यथा हन्ता तथैव सः ॥ ०३७ ॥

धनेन क्रायको हन्ति खादकश्चोपभोगतः ।
घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ ०३८ ॥

अखादन्ननुमोदंश्च भावदोषेण मानवः ।
योऽनुमन्येत हन्तव्यं सोऽपि दोषेण लिप्यते ॥ ०३९ ॥

अधृष्यः सर्वभूतानामायुष्मान्नीरुजः सुखी ।
भवत्यभक्षयन्मांसं दयावान्प्राणिनामिह ॥ ०४० ॥

हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः ।
मांसस्याभक्षणे धर्मो विशिष्टः स्यादिति श्रुतिः ॥ ०४१ ॥

अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत् ।
भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ॥ ०४२ ॥

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते ॥ ०४३ ॥

खादकस्य कृते जन्तुं यो हन्यात्पुरुषाधमः ।
महादोषकरस्तत्र खादको न तु घातकः ॥ ०४४ ॥

इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधो जनः ।
हन्याज्जन्तुं मांसगृद्धी स वै नरकभाङ्नरः ॥ ०४५ ॥

भक्षयित्वा तु यो मांसं पश्चादपि निवर्तते ।
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥ ०४६ ॥

आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्ता चोपभोक्ता च घातकाः सर्व एव ते ॥ ०४७ ॥

इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम् ।
पुराणमृषिभिर्जुष्टं वेदेषु परिनिश्चितम् ॥ ०४८ ॥

प्रवृत्तिलक्षणे धर्मे फलार्थिभिरभिद्रुते ।
यथोक्तं राजशार्दूल न तु तन्मोक्षकाङ्क्षिणाम् ॥ ०४९ ॥

हविर्यत्संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि ।

वेदोक्तेन प्रमाणेन पितृणां प्रक्रियासु च ॥ ०५० ॥

अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत् ॥ ०५० ॥

अस्वर्ग्यमयशस्यं च रक्षोवद्भरतर्षभ ।
विधिना हि नराः पूर्वं मांसं राजन्नभक्षयन् ॥ ०५१ ॥

य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम् ।
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ॥ ०५२ ॥

श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥ ०५३ ॥

ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा ।
अभक्ष्यमिति मांसं स प्राह भक्ष्यमिति प्रभो ॥ ०५४ ॥

आकाशान्मेदिनीं प्राप्तस्ततः स पृथिवीपतिः ।
एतदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ ०५५ ॥

प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षितास्तपसा मृगाः ॥ ०५६ ॥

क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः ।
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ ०५७ ॥

इदं तु श‍ृणु राजेन्द्र कीर्त्यमानं मयानघ ।
अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ॥ ०५८ ॥

यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम् ।
यश्चैकं वर्जयेन्मांसं सममेतन्मतं मम ॥ ०५९ ॥

कौमुदे तु विशेषेण शुक्लपक्षे नराधिप ।
वर्जयेत्सर्वमांसानि धर्मो ह्यत्र विधीयते ॥ ०६० ॥

चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ॥ ०६१ ॥

अथ वा मासमप्येकं सर्वमांसान्यभक्षयन् ।
अतीत्य सर्वदुःखानि सुखी जीवेन्निरामयः ॥ ०६२ ॥

ये वर्जयन्ति मांसानि मासशः पक्षशोऽपि वा ।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥ ०६३ ॥

मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः ।
सर्वभूतात्मभूतैस्तैर्विज्ञातार्थपरावरैः ॥ ०६४ ॥

नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषा चानरण्येन दिलीपरघुपूरुभिः ॥ ०६५ ॥

कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृगेण विष्वगश्वेन तथैव शशबिन्दुना ॥ ०६६ ॥

युवनाश्वेन च तथा शिबिनौशीनरेण च ॥ ०६६ ॥

श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च ।
रैवतेन रन्तिदेवेन वसुना सृञ्जयेन च ॥ ०६७ ॥

दुःषन्तेन करूषेण रामालर्कनलैस्तथा ।
विरूपाश्वेन निमिना जनकेन च धीमता ॥ ०६८ ॥

सिलेन पृथुना चैव वीरसेनेन चैव ह ।
इक्ष्वाकुणा शंभुना च श्वेतेन सगरेण च ॥ ०६९ ॥

एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥ ०७० ॥

ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियान्विताः ।
उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः ॥ ०७१ ॥

तदेतदुत्तमं धर्ममहिंसालक्षणं शुभम् ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥ ०७२ ॥

मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥ ०७३ ॥

विशिष्टतां ज्ञातिषु च लभन्ते नात्र संशयः ॥ ०७३ ॥

आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात् ।
मुच्येत्तथातुरो रोगाद्दुःखान्मुच्येत दुःखितः ॥ ०७४ ॥

तिर्यग्योनिं न गच्छेत रूपवांश्च भवेन्नरः ।
बुद्धिमान्वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ॥ ०७५ ॥

एतत्ते कथितं राजन्मांसस्य परिवर्जने ।
प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्मितम् ॥ ०७६ ॥

---

# अध्याय ११७

युधिष्ठिर उवाच ॥

इमे वै मानवा लोके भृशं मांसस्य गृद्धिनः ।
विसृज्य भक्षान्विविधान्यथा रक्षोगणास्तथा ॥ ००१ ॥

नापूपान्विविधाकाराञ्शाकानि विविधानि च ।
षाडवान्रसयोगांश्च तथेच्छन्ति यथामिषम् ॥ ००२ ॥

तत्र मे बुद्धिरत्रैव विसर्गे परिमुह्यते ।
न मन्ये रसतः किञ्चिन्मांसतोऽस्तीह किञ्चन ॥ ००३ ॥

तदिच्छामि गुणाञ्श्रोतुं मांसस्याभक्षणेऽपि वा ।
भक्षणे चैव ये दोषास्तांश्चैव पुरुषर्षभ ॥ ००४ ॥

सर्वं तत्त्वेन धर्मज्ञ यथावदिह धर्मतः ।
किं वा भक्ष्यमभक्ष्यं वा सर्वमेतद्वदस्व मे ॥ ००५ ॥

भीष्म उवाच ॥

एवमेतन्महाबाहो यथा वदसि भारत ।
न मांसात्परमत्रान्यद्रसतो विद्यते भुवि ॥ ००६ ॥

क्षतक्षीणाभितप्तानां ग्राम्यधर्मरताश्च ये ।
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ॥ ००७ ॥

सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां ददाति च ।
न भक्षोऽभ्यधिकः कश्चिन्मांसादस्ति परंतप ॥ ००८ ॥

विवर्जने तु बहवो गुणाः कौरवनन्दन ।
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ॥ ००९ ॥

स्वमांसं परमांसैर्यो विवर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मान्न नृशंसतरो नरः ॥ ०१० ॥

न हि प्राणात्प्रियतरं लोके किञ्चन विद्यते ।
तस्माद्दयां नरः कुर्याद्यथात्मनि तथा परे ॥ ०११ ॥

शुक्राच्च तात संभूतिर्मांसस्येह न संशयः ।
भक्षणे तु महान्दोषो वधेन सह कल्पते ॥ ०१२ ॥

अहिंसालक्षणो धर्म इति वेदविदो विदुः ।
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मवान्नरः ॥ ०१३ ॥

पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति ॥ ०१४ ॥

यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः ।
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते ॥ ०१५ ॥

क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।
वीर्येणोपार्जितं मांसं यथा खादन्न दुष्यति ॥ ०१६ ॥

आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः ।
अगस्त्येन पुरा राजन्मृगया येन पूज्यते ॥ ०१७ ॥

नात्मानमपरित्यज्य मृगया नाम विद्यते ।
समतामुपसङ्गम्य रूपं हन्यान्न वा नृप ॥ ०१८ ॥

अतो राजर्षयः सर्वे मृगयां यान्ति भारत ।
लिप्यन्ते न हि दोषेण न चैतत्पातकं विदुः ॥ ०१९ ॥

न हि तत्परमं किञ्चिदिह लोके परत्र च ।
यत्सर्वेष्विह लोकेषु दया कौरवनन्दन ॥ ०२० ॥

न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनाम्  ॥ ०२१  ॥

अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुमः  ॥ ०२२  ॥

क्षतं च स्खलितं चैव पतितं क्लिष्टमाहतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च  ॥ ०२३  ॥

नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यन्ते भयकालेषु मोक्षयन्ति च ये परान्  ॥ ०२४  ॥

प्राणदानात्परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरः कश्चिदस्तीति निश्चितम्  ॥ ०२५  ॥

अनिष्टं सर्वभूतानां मरणं नाम भारत ।
मृत्युकाले हि भूतानां सद्यो जायति वेपथुः  ॥ ०२६  ॥

जातिजन्मजरादुःखे नित्यं संसारसागरे ।
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च  ॥ ०२७  ॥

गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः ।
मूत्रश्लेष्मपुरीषाणां स्पर्शैश्च भृशदारुणैः  ॥ ०२८  ॥

जाताश्चाप्यवशास्तत्र भिद्यमानाः पुनः पुनः ।
पाट्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः  ॥ ०२९  ॥

कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः ।
आक्रम्य मार्यमाणाश्च भ्राम्यन्ते वै पुनः पुनः  ॥ ०३०  ॥

नात्मनोऽस्ति प्रियतरः पृथिव्यामनुसृत्य ह ।

तस्मात्प्राणिषु सर्वेषु दयावानात्मवान्भवेत्  ॥ ०३१  ॥

सर्वमांसानि यो राजन्यावज्जीवं न भक्षयेत् ।
स्वर्गे स विपुलं स्थानं प्राप्नुयान्नात्र संशयः  ॥ ०३२  ॥

ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ।
भक्ष्यन्ते तेऽपि तैर्भूतैरिति मे नास्ति संशयः  ॥ ०३३  ॥

मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहम् ।
एतन्मांसस्य मांसत्वमतो बुध्यस्व भारत  ॥ ०३४  ॥

घातको वध्यते नित्यं तथा वध्येत बन्धकः ।
आक्रोष्टाक्रुश्यते राजन्द्वेष्टा द्वेष्यत्वमाप्नुते  ॥ ०३५  ॥

येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते  ॥ ०३६  ॥

अहिंसा परमो धर्मस्तथाहिंसा परो दमः ।
अहिंसा परमं दानमहिंसा परमं तपः  ॥ ०३७  ॥

अहिंसा परमो यज्ञस्तथाहिंसा परं बलम् ।
अहिंसा परमं मित्रमहिंसा परमं सुखम्  ॥ ०३८  ॥

अहिंसा परमं सत्यमहिंसा परमं श्रुतम्  ॥ ०३८  ॥

सर्वयज्ञेषु वा दानं सर्वतीर्थेषु चाप्लुतम् ।
सर्वदानफलं वापि नैतत्तुल्यमहिंसया  ॥ ०३९  ॥

अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा ।
अहिंस्रः सर्वभूतानां यथा माता यथा पिता  ॥ ०४०  ॥

एतत्फलमहिंसाया भूयश्च कुरुपुङ्गव ।
न हि शक्या गुणा वक्तुमिह वर्षशतैरपि  ॥ ०४१  ॥

---

# कीटोपाख्यानम्

## अध्याय ११८

युधिष्ठिर उवाच  ॥

अकामाश्च सकामाश्च हता येऽस्मिन्महाहवे ।
कां योनिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह  ॥ ००१  ॥

दुःखं प्राणपरित्यागः पुरुषाणां महामृधे ।
जानामि तत्त्वं धर्मज्ञ प्राणत्यागं सुदुष्करम्  ॥ ००२  ॥

समृद्धे वासमृद्धे वा शुभे वा यदि वाशुभे ।
कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः  ॥ ००३  ॥

भीष्म उवाच  ॥

समृद्धे वासमृद्धे वा शुभे वा यदि वाशुभे ।
संसारेऽस्मिन्समाजाताः प्राणिनः पृथिवीपते  ॥ ००४  ॥

निरता येन भावेन तत्र मे शृणु कारणम् ।
सम्यक्चायमनुप्रश्नस्त्वयोक्तश्च युधिष्ठिर  ॥ ००५  ॥

अत्र ते वर्तयिष्यामि पुरावृत्तमिदं नृप ।

द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ॥ ००६ ॥

ब्रह्मभूतश्चरन्विप्रः कृष्णद्वैपायनः पुरा ।
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥ ००७ ॥

गतिज्ञः सर्वभूतानां रुतज्ञश्च शरीरिणाम् ।
सर्वज्ञः सर्वतो दृष्ट्वा कीटं वचनमब्रवीत् ॥ ००८ ॥

कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।
क्व धावसि तदाचक्ष्व कुतस्ते भयमागतम् ॥ ००९ ॥

कीट उवाच ॥

शकटस्यास्य महतो घोषं श्रुत्वा भयं मम ।
आगतं वै महाबुद्धे स्वन एष हि दारुणः ॥ ०१० ॥

श्रूयते न स मां हन्यादिति तस्मादपाक्रमे ॥ ०१० ॥

श्वसतां च शृणोम्येवं गोपुत्राणां प्रचोद्यताम् ।
वहतां सुमहाभारं संनिकर्षे स्वनं प्रभो ॥ ०११ ॥

नृणां च संवाहयतां श्रूयते विविधः स्वनः ॥ ०११ ॥

सोढुमस्मद्विधेनैष न शक्यः कीटयोनिना ।
तस्मादपक्रमाम्येष भयादस्मात्सुदारुणात् ॥ ०१२ ॥

दुःखं हि मृत्युर्भूतानां जीवितं च सुदुर्लभम् ।
अतो भीतः पलायामि गच्छेयं नासुखं सुखात् ॥ ०१३ ॥

भीष्म उवाच ॥

इत्युक्तः स तु तं प्राह कुतः कीट सुखं तव ।
मरणं ते सुखं मन्ये तिर्यग्योनौ हि वर्तसे ॥ ०१४ ॥

शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान्बहून् ।
नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ॥ ०१५ ॥

कीट उवाच ॥

सर्वत्र निरतो जीव इतीहापि सुखं मम ।
चेतयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् ॥ ०१६ ॥

इहापि विषयः सर्वो यथादेहं प्रवर्तितः ।
मानुषास्तिर्यगाश्चैव पृथग्भोगा विशेषतः ॥ ०१७ ॥

अहमासं मनुष्यो वै शूद्रो बहुधनः पुरा ।
अब्रह्मण्यो नृशंसश्च कदर्यो वृद्धिजीवनः ॥ ०१८ ॥

वाक्तीक्ष्णो निकृतिप्रज्ञो मोष्टा विश्वस्य सर्वशः ।
मिथःकृतोऽपनिधनः परस्वहरणे रतः ॥ ०१९ ॥

भृत्यातिथिजनश्चापि गृहे पर्युषितो मया ।
मात्सर्यात्स्वादुकामेन नृशंसेन बुभूषता ॥ ०२० ॥

देवार्थं पितृयज्ञार्थमन्नं श्रद्धाकृतं मया ।
न दत्तमर्थकामेन देयमन्नं पुनाति ह ॥ ०२१ ॥

गुप्तं शरणमाश्रित्य भयेषु शरणागताः ।
अकस्मान्नो भयात्त्यक्ता न च त्राताभयैषिणः ॥ ०२२ ॥

धनं धान्यं प्रियान्दारान्यानं वासस्तथाद्भुतम् ।
श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् ॥ ०२३ ॥

ईर्ष्युः परसुखं दृष्ट्वा आतताय्यबुभूषकः ।
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्तकः ॥ ०२४ ॥

नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया ।
स्मृत्वा तदनुतप्येऽहं त्यक्त्वा प्रियमिवात्मजम् ॥ ०२५ ॥

शुभानामपि जानामि कृतानां कर्मणां फलम् ।
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया ॥ ०२६ ॥

सकृज्जातिगुणोपेतः सङ्गत्या गृहमागतः ।
अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात्स्मृतिः ॥ ०२७ ॥

कर्मणा तेन चैवाहं सुखाशामिह लक्षये ।
तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ॥ ०२८ ॥

---

# अध्याय ११९

व्यास उवाच ॥

शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे ।
ममैव कीट तत्कर्म येन त्वं न प्रमुह्यसे ॥ ००१ ॥

अहं हि दर्शनादेव तारयामि तपोबलात् ।
तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ॥ ००२ ॥

जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटताम् ।

अवाप्स्यसि परं धर्मं धर्मस्थो यदि मन्यसे ॥ ००३ ॥

कर्म भूमिकृतं देवा भुञ्जते तिर्यगाश्च ये ।
धर्मादपि मनुष्येषु कामोऽर्थश्च यथा गुणैः ॥ ००४ ॥

वाग्बुद्धिपाणिपादैश्चाप्युपेतस्य विपश्चितः ।
किं हीयते मनुष्यस्य मन्दस्यापि हि जीवतः ॥ ००५ ॥

जीवन्हि कुरुते पूजां विप्राग्र्यः शशिसूर्ययोः ।
ब्रुवन्नपि कथां पुण्यां तत्र कीट त्वमेष्यसि ॥ ००६ ॥

गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे ।
तत्र तेऽहं विनेष्यामि ब्रह्मत्वं यत्र चेच्छसि ॥ ००७ ॥

स तथेति प्रतिश्रुत्य कीटो वर्त्मन्यतिष्ठत ।
तमृषिं द्रष्टुमगमत्सर्वास्वन्यासु योनिषु ॥ ००८ ॥

श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम् ।
श्वपाकवैश्यशूद्राणां क्षत्रियाणां च योनिषु ॥ ००९ ॥

स कीटेत्येवमाभाष्य ऋषिणा सत्यवादिना ।
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्ना कृताञ्जलिः ॥ ०१० ॥

कीट उवाच ॥

इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः ।
यदहं प्राप्य कीटत्वमागतो राजपुत्रताम् ॥ ०११ ॥

वहन्ति मामतिबलाः कुञ्जरा हेममालिनः ।
स्यन्दनेषु च काम्बोजा युक्ताः परमवाजिनः ॥ ०१२ ॥

उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति माम् ।
सबान्धवः सहामात्यश्चाश्नामि पिशितौदनम् ॥ ०१३ ॥

गृहेषु सुनिवासेषु सुखेषु शयनेषु च ।
पराध्र्येषु महाभाग स्वपामीह सुपूजितः ॥ ०१४ ॥

सर्वेष्वपररात्रेषु सूतमागधबन्दिनः ।
स्तुवन्ति मां यथा देवं महेन्द्रं प्रियवादिनः ॥ ०१५ ॥

प्रसादात्सत्यसंधस्य भवतोऽमिततेजसः ।
यदहं कीटतां प्राप्य संप्राप्तो राजपुत्रताम् ॥ ०१६ ॥

नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रशाधि माम् ।
त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया ॥ ०१७ ॥

व्यास उवाच ॥

अर्चितोऽहं त्वया राजन्वाग्भिरद्य यदृच्छया ।
अद्य ते कीटतां प्राप्य स्मृतिर्जाताजुगुप्सिता ॥ ०१८ ॥

न तु नाशोऽस्ति पापस्य यत्त्वयोपचितं पुरा ।
शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ॥ ०१९ ॥

मम ते दर्शनं प्राप्तं तच्चैव सुकृतं पुरा ।
तिर्यग्योनौ स्म जातेन मम चाप्यर्चनात्तथा ॥ ०२० ॥

इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि ।
गोब्राह्मणकृते प्राणान्हुत्वात्मीयान्रणाजिरे ॥ ०२१ ॥

राजपुत्रसुखं प्राप्य ऋतूंश्चैवाप्तदक्षिणान् ।
अथ मोदिष्यसे स्वर्गे ब्रह्मभूतोऽव्ययः सुखी ॥ ०२२ ॥

तिर्यग्योन्याः शूद्रतामभ्युपैति ; शूद्रो वैश्यत्वं क्षत्रियत्वं च वैश्यः ।
वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं ; स्वर्गं पुण्यं ब्राह्मणः साधुवृत्तः ॥ ०२३ ॥

---

# अध्याय १२०

भीष्म उवाच ॥

क्षत्रधर्ममनुप्राप्तः स्मरन्नेव स वीर्यवान् ।
त्यक्त्वा स कीटतां राजंश्चचार विपुलं तपः ॥ ००१ ॥

तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः ।
आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ॥ ००२ ॥

व्यास उवाच ॥

क्षात्रं चैव व्रतं कीट भूतानां परिपालनम् ।
क्षात्रं चैव व्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ॥ ००३ ॥

पाहि सर्वाः प्रजाः सम्यक्शुभाशुभविदात्मवान् ।
शुभैः संविभजन्कामैरशुभानां च पावनैः ॥ ००४ ॥

आत्मवान्भव सुप्रीतः स्वधर्मचरणे रतः ।
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ ००५ ॥

भीष्म उवाच ॥

सोऽथारण्यमभिप्रेत्य पुनरेव युधिष्ठिर ।

महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पाल्य च ॥ ००६ ॥

अचिरेणैव कालेन कीटः पार्थिवसत्तम ।
प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ॥ ००७ ॥

ततस्तं ब्राह्मणं दृष्ट्वा पुनरेव महायशाः ।
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ ००८ ॥

व्यास उवाच ॥

भो भो विप्रर्षभ श्रीमन्मा व्यथिष्ठाः कथञ्चन ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ००९ ॥

उपपद्यति धर्मज्ञ यथाधर्मं यथागमम् ॥ ००९ ॥

तस्मान्मृत्युभयात्कीट मा व्यथिष्ठाः कथञ्चन ।
धर्मलोपाद्भयं ते स्यात्तस्माद्धर्मं चरोत्तमम् ॥ ०१० ॥

कीट उवाच ॥

सुखात्सुखतरं प्राप्तो भगवंस्त्वत्कृते ह्यहम् ।
धर्ममूलां श्रियं प्राप्य पाप्मा नष्ट इहाद्य मे ॥ ०११ ॥

भीष्म उवाच ॥

भगवद्वचनात्कीटो ब्राह्मण्यं प्राप्य दुर्लभम् ।
अकरोत्पृथिवीं राजन्यज्ञयूपशताङ्किताम् ॥ ०१२ ॥

ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमः ॥ ०१२ ॥

अवाप च परं कीटः पार्थ ब्रह्म सनातनम् ।

स्वकर्मफलनिर्वृत्तं व्यासस्य वचनात्तदा ॥ ०१३ ॥

तेऽपि यस्मात्स्वभावेन हताः क्षत्रियपुङ्गवाः ।
संप्राप्तास्ते गतिं पुण्यां तस्मान्मा शोच पुत्रक ॥ ०१४ ॥

---

# मैत्रेयभिक्शा

## अध्याय १२१

युधिष्ठिर उवाच ॥

विद्या तपश्च दानं च किमेतेषां विशिष्यते ।
पृच्छामि त्वा सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च ॥ ००२ ॥

कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन् ।
वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले ॥ ००३ ॥

तमुपस्थितमासीनं ज्ञात्वा स मुनिसत्तमम् ।
अर्चित्वा भोजयामास मैत्रेयोऽशनमुत्तमम् ॥ ००४ ॥

तदन्नमुत्तमं भुक्त्वा गुणवत्सार्वकामिकम् ।
प्रतिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ॥ ००५ ॥

तमुत्स्मयन्तं संप्रेक्ष्य मैत्रेयः कृष्णमब्रवीत् ।
कारणं ब्रूहि धर्मात्मन्योऽस्मयिष्ठाः कुतश्च ते ॥ ००६ ॥

तपस्विनो धृतिमतः प्रमोदः समुपागतः ॥ ००६ ॥

एतत्पृच्छामि ते विद्वन्नभिवाद्य प्रणम्य च ।
आत्मनश्च तपोभाग्यं महाभाग्यं तथैव च ॥ ००७ ॥

पृथगाचरतस्तात पृथगात्मनि चात्मनोः ।
अल्पान्तरमहं मन्ये विशिष्टमपि वा त्वया ॥ ००८ ॥

व्यास उवाच ॥

अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः ।
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ ००९ ॥

त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम् ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत् ॥ ०१० ॥

इदानीं चैव नः कृत्यं पुरस्ताच्च परं स्मृतम् ॥ ०१० ॥

अल्पोऽपि तादृशो दायो भवत्युत महाफलः ।
तृषिताय च यद्दत्तं हृदयेनानसूयता ॥ ०११ ॥

तृषितस्तृषिताय त्वं दत्त्वैतदशनं मम ।
अजैषीर्महतो लोकान्महायज्ञैरिवाभिभो ॥ ०१२ ॥

अतो दानपवित्रेण प्रीतोऽस्मि तपसैव च ॥ ०१२ ॥

पुण्यस्यैव हि ते गन्धः पुण्यस्यैव च दर्शनम् ।

पुण्यश्च वाति गन्धस्ते मन्ये कर्मविधानतः ॥ ०१३ ॥

अधिकं मार्जनात्तात तथैवाप्यनुलेपनात् ।
शुभं सर्वपवित्रेभ्यो दानमेव परं भवेत् ॥ ०१४ ॥

यानीमान्युत्तमानीह वेदोक्तानि प्रशंससि ।
तेषां श्रेष्ठतमं दानमिति मे नास्ति संशयः ॥ ०१५ ॥

दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेषु धर्मः प्रतिष्ठितः ॥ ०१६ ॥

यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः ।
सर्वत्यागो यथा चेह तथा दानमनुत्तमम् ॥ ०१७ ॥

त्वं हि तात सुखादेव सुखमेष्यसि शोभनम् ।
सुखात्सुखतरप्राप्तिमाप्नुते मतिमान्नरः ॥ ०१८ ॥

तन्नः प्रत्यक्षमेवेदमुपलब्धमसंशयम् ।
श्रीमन्तमाप्नुवन्त्यर्था दानं यज्ञस्तथा सुखम् ॥ ०१९ ॥

सुखादेव परं दुःखं दुःखादन्यत्परं सुखम् ।
दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः ॥ ०२० ॥

त्रिविधानीह वृत्तानि नरस्याहुर्मनीषिणः ।
पुण्यमन्यत्पापमन्यन्न पुण्यं न च पापकम् ॥ ०२१ ॥

न वृत्तं मन्यतेऽन्यस्य मन्यतेऽन्यस्य पापकम् ।
तथा स्वकर्मनिर्वृत्तं न पुण्यं न च पापकम् ॥ ०२२ ॥

रमस्वैधस्व मोदस्व देहि चैव यजस्व च ।
न त्वामभिभविष्यन्ति वैद्या न च तपस्विनः ॥ ०२३ ॥

# अध्याय १२२

भीष्म उवाच ॥

एवमुक्तः प्रत्युवाच मैत्रेयः कर्मपूजकः ।
अत्यन्तं श्रीमति कुले जातः प्राज्ञो बहुश्रुतः ॥ ००१ ॥

असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् ।
अनुज्ञातस्तु भवता किञ्चिद्ब्रूयामहं विभो ॥ ००२ ॥

व्यास उवाच ॥

यद्यदिच्छसि मैत्रेय यावद्यावद्यथा तथा ।
ब्रूहि तावन्महाप्राज्ञ शुश्रूषे वचनं तव ॥ ००३ ॥

मैत्रेय उवाच ॥

निर्दोषं निर्मलं चैव वचनं दानसंहितम् ।
विद्यातपोभ्यां हि भवान्भावितात्मा न संशयः ॥ ००४ ॥

भवतो भावितात्मत्वाद्दायोऽयं सुमहान्मम ।
भूयो बुद्ध्यानुपश्यामि सुसमृद्धतपा इव ॥ ००५ ॥

अपि मे दर्शनादेव भवतोऽभ्युदयो महान् ।
मन्ये भवत्प्रसादोऽयं तद्धि कर्म स्वभावतः ॥ ००६ ॥

तपः श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम् ।

त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ॥ ००७ ॥

तस्मिंस्तृप्ते च तृप्यन्ते पितरो दैवतानि च ।
न हि श्रुतवतां किञ्चिदधिकं ब्राह्मणादृते ॥ ००८ ॥

यथा हि सुकृते क्षेत्रे फलं विन्दति मानवः ।
एवं दत्त्वा श्रुतवति फलं दाता समश्नुते ॥ ००९ ॥

ब्राह्मणश्चेन्न विद्येत श्रुतवृत्तोपसंहितः ।
प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनम् ॥ ०१० ॥

अदन्ह्यविद्वान्हन्त्यन्नमद्यमानं च हन्ति तम् ।
तं च हन्यति यस्यान्नं स हत्वा हन्यतेऽबुधः ॥ ०११ ॥

प्रभुर्ह्यन्नमदन्विद्वान्पुनर्जनयतीश्वरः ।
स चान्नाज्जायते तस्मात्सूक्ष्म एव व्यतिक्रमः ॥ ०१२ ॥

यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः ।
न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः ॥ ०१३ ॥

यत्र वै ब्राह्मणाः सन्ति श्रुतवृत्तोपसंहिताः ।
तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते ॥ ०१४ ॥

ये योनिशुद्धाः सततं तपस्यभिरता भृशम् ।
दानाध्ययनसंपन्नास्ते वै पूज्यतमाः सदा ॥ ०१५ ॥

तैर्हि सद्भिः कृतः पन्थाश्चेतयानो न मुह्यते ।
ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः ॥ ०१६ ॥

# अध्याय १२३

भीष्म उवाच ॥

एवमुक्तः स भगवान्मैत्रेयं प्रत्यभाषत ।
दिष्ट्यैवं त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी ॥ ००१ ॥

लोको ह्ययं गुणानेव भूयिष्ठं स्म प्रशंसति ॥ ००१ ॥

रूपमानवयोमानश्रीमानाश्चाप्यसंशयम् ।
दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः ॥ ००२ ॥

यत्ते भृशतरं दानाद्वर्तयिष्यामि तच्छृणु ॥ ००२ ॥

यानीहागमशास्त्राणि याश्च काश्चित्प्रवृत्तयः ।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ॥ ००३ ॥

अहं दानं प्रशंसामि भवानपि तपःश्रुते ।
तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनम् ॥ ००४ ॥

तपसा महदाप्नोति विद्यया चेति नः श्रुतम् ।
तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम् ॥ ००५ ॥

यद्यद्धि किञ्चित्संधाय पुरुषस्तप्यते तपः ।
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः ॥ ००६ ॥

दुरन्वयं दुष्प्रधृष्यं दुरापं दुरतिक्रमम् ।
सर्वं वै तपसाभ्येति तपो हि बलवत्तरम् ॥ ००७ ॥

सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः ।
तपसा तरते सर्वमेनसश्च प्रमुच्यते ॥ ००८ ॥

सर्वविद्यस्तु चक्षुष्मानपि यादृशतादृशः ।
तपस्विनौ च तावाहुस्ताभ्यां कार्यं सदा नमः ॥ ००९ ॥

सर्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः ।
दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियम् ॥ ०१० ॥

इमं च ब्रह्मलोकं च लोकं च बलवत्तरम् ।
अन्नदानैः सुकृतिनः प्रतिपद्यन्ति लौकिकाः ॥ ०११ ॥

पूजिताः पूजयन्त्येतान्मानिता मानयन्ति च ।
अदाता यत्र यत्रैति सर्वतः संप्रणुद्यते ॥ ०१२ ॥

अकर्ता चैव कर्ता च लभते यस्य यादृशम् ।
यद्येवोर्ध्वं यद्यवाक्क त्वं लोकमभियास्यसि ॥ ०१३ ॥

प्राप्स्यसे त्वन्नपानानि यानि दास्यसि कानिचित् ।
मेधाव्यसि कुले जातः श्रुतवाननृशंसवान् ॥ ०१४ ॥

कौमारदारव्रतवान्मैत्रेय निरतो भव ।
एतद्गृहाण प्रथमं प्रशस्तं गृहमेधिनाम् ॥ ०१५ ॥

यो भर्ता वासितातुष्टो भर्तुस्तुष्टा च वासिता ।
यस्मिन्नेवं कुले सर्वं कल्याणं तत्र वर्तते ॥ ०१६ ॥

अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा ।
दानेन तपसा चैव सर्वपापमपोह्यते ॥ ०१७ ॥

स्वस्ति प्राप्नुहि मैत्रेय गृहान्साधु व्रजाम्यहम् ।
एतन्मनसि कर्तव्यं श्रेय एवं भविष्यति ॥ ०१८ ॥

तं प्रणम्याथ मैत्रेयः कृत्वा चाभिप्रदक्षिणम् ।
स्वस्ति प्राप्नोतु भगवानित्युवाच कृताञ्जलिः ॥ ०१९ ॥

---

# शाण्डिलीसुमनासंवादः

## अध्याय १२४

युधिष्ठिर उवाच ॥

सत्स्त्रीणां समुदाचारं सर्वधर्मभृतां वर ।
श्रोतुमिच्छाम्यहं त्वत्तस्तं मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

सर्वज्ञां सर्वधर्मज्ञां देवलोके मनस्विनीम् ।
कैकेयी सुमना नाम शाण्डिलीं पर्यपृच्छत ॥ ००२ ॥

केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्वपापानि देवलोकं त्वमागता ॥ ००३ ॥

हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा ।
सुता ताराधिपस्येव प्रभया दिवमागता ॥ ००४ ॥

अरजांसि च वस्त्राणि धारयन्ती गतक्लमा ।
विमानस्था शुभे भासि सहस्रगुणमोजसा ॥ ००५ ॥

न त्वमल्पेन तपसा दानेन नियमेन वा ।

इमं लोकमनुप्राप्ता तस्मात्तत्त्वं वदस्व मे ॥ ००६ ॥

इति पृष्टा सुमनया मधुरं चारुहासिनी ।
शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ॥ ००७ ॥

नाहं काषायवसना नापि वल्कलधारिणी ।
न च मुण्डा न जटिला भूत्वा देवत्वमागता ॥ ००८ ॥

अहितानि च वाक्यानि सर्वाणि परुषाणि च ।
अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रुवम् ॥ ००९ ॥

देवतानां पितॄणां च ब्राह्मणानां च पूजने ।
अप्रमत्ता सदायुक्ता श्वश्रूश्वशुरवर्तिनी ॥ ०१० ॥

पैशुन्ये न प्रवर्तामि न ममैतन्मनोगतम् ।
अद्वारे न च तिष्ठामि चिरं न कथयामि च ॥ ०११ ॥

असद्वा हसितं किञ्चिदहितं वापि कर्मणा ।
रहस्यमरहस्यं वा न प्रवर्तामि सर्वथा ॥ ०१२ ॥

कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम् ।
आसनेनोपसंयोज्य पूजयामि समाहिता ॥ ०१३ ॥

यद्यच्च नाभिजानाति यद्भोज्यं नाभिनन्दति ।
भक्ष्यं वाप्यथ वा लेह्यं तत्सर्वं वर्जयाम्यहम् ॥ ०१४ ॥

कुटुम्बार्थे समानीतं यत्किञ्चित्कार्यमेव तु ।
प्रातरुत्थाय तत्सर्वं कारयामि करोमि च ॥ ०१५ ॥

प्रवासं यदि मे भर्ता याति कार्येण केनचित् ।
मङ्गलैर्बहुभिर्युक्ता भवामि नियता सदा ॥ ०१६ ॥

अञ्जनं रोचनां चैव स्नानं माल्यानुलेपनम् ।
प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्तरि ॥ ०१७ ॥

नोत्थापयामि भर्तारं सुखसुप्तमहं सदा ।
आतुरेष्वपि कार्येषु तेन तुष्यति मे मनः ॥ ०१८ ॥

नायासयामि भर्तारं कुटुम्बार्थे च सर्वदा ।
गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना ॥ ०१९ ॥

इमं धर्मपथं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारीणां स्वर्गलोके महीयते ॥ ०२० ॥

भीष्म उवाच ॥

एतदाख्याय सा देवी सुमनायै तपस्विनी ।
पतिधर्मं महाभागा जगामादर्शनं तदा ॥ ०२१ ॥

यश्चेदं पाण्डवाख्यानं पठेत्पर्वणि पर्वणि ।
स देवलोकं संप्राप्य नन्दने सुसुखं वसेत् ॥ ०२२ ॥

---

# सान्त्वप्रशंसा

## अध्याय १२५

युधिष्ठिर उवाच ॥

साम्ना वापि प्रदाने वा ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥ ००१ ॥

भीष्म उवाच ॥

साम्ना प्रसाद्यते कश्चिद्दानेन च तथापरः ।
पुरुषः प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥ ००२ ॥

गुणांस्तु शृणु मे राजन्सान्त्वस्य भरतर्षभ ।
दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा ॥ ००३ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ॥ ००४ ॥

कश्चित्तु बुद्धिसंपन्नो ब्राह्मणो विजने वने ।
गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ॥ ००५ ॥

स बुद्धिश्रुतसंपन्नस्तं दृष्ट्वातीव भीषणम् ।
सामैवास्मिन्प्रयुयुजे न मुमोह न विव्यथे ॥ ००६ ॥

रक्षस्तु वाचा संपूज्य प्रश्नं पप्रच्छ तं द्विजम् ।
मोक्ष्यसे ब्रूहि मे प्रश्नं केनास्मि हरिणः कृशः ॥ ००७ ॥

मुहूर्तमथ सञ्चिन्त्य ब्राह्मणस्तस्य रक्षसः ।
आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह ॥ ००८ ॥

विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः ।
विषयानतुलान्भुङ्क्षे तेनासि हरिणः कृशः ॥ ००९ ॥

नूनं मित्राणि ते रक्षः साधूपचरितान्यपि ।
स्वदोषादपरज्यन्ते तेनासि हरिणः कृशः ॥ ०१० ॥

धनैश्वर्याधिकाः स्तब्धास्त्वद्गुणैः परमावराः ।
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ ०११ ॥

गुणवान्विगुणानन्यान्नूनं पश्यसि सत्कृतान् ।
प्राज्ञोऽप्राज्ञान्विनीतात्मा तेनासि हरिणः कृशः ॥ ०१२ ॥

अवृत्त्या क्लिश्यमानोऽपि वृत्त्युपायान्विगर्हयन् ।
माहात्म्याद्व्यथसे नूनं तेनासि हरिणः कृशः ॥ ०१३ ॥

संपीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः ।
जितं त्वां मन्यते साधो तेनासि हरिणः कृशः ॥ ०१४ ॥

क्लिश्यमानान्विमार्गेषु कामक्रोधावृतात्मनः ।
मन्ये नु ध्यायसि जनांस्तेनासि हरिणः कृशः ॥ ०१५ ॥

प्राज्ञैः संभावितो नूनं नप्राज्ञैरुपसंहितः ।
ह्रीमानमर्षी दुर्वृत्तैस्तेनासि हरिणः कृशः ॥ ०१६ ॥

नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन् ।
वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ॥ ०१७ ॥

प्रकाशार्थगतिर्नूनं रहस्यकुशलः कृती ।
तज्ज्ञैर्न पूज्यसे नूनं तेनासि हरिणः कृशः ॥ ०१८ ॥

असत्स्वभिनिविष्टेषु ब्रुवतो मुक्तसंशयम् ।
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥ ०१९ ॥

धनबुद्धिश्रुतैर्हीनः केवलं तेजसान्वितः ।
महत्प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ ०२० ॥

तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम् ।
बन्धुवर्गो न गृह्णाति तेनासि हरिणः कृशः ॥ ०२१ ॥

नूनमर्थवतां मध्ये तव वाक्यमनुत्तमम् ।
न भाति कालेऽभिहितं तेनासि हरिणः कृशः ॥ ०२२ ॥

दृढपूर्वश्रुतं मूर्खं कुपितं हृदयप्रियम् ।
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ॥ ०२३ ॥

नूनमासञ्जयित्वा ते कृत्ये कस्मिंश्चिदीप्सिते ।
कश्चिदर्थयतेऽत्यर्थं तेनासि हरिणः कृशः ॥ ०२४ ॥

नूनं त्वा स्वगुणापेक्षं पूजयानं सुहृद्ध्रुवम् ।
मयार्थ इति जानाति तेनासि हरिणः कृशः ॥ ०२५ ॥

अन्तर्गतमभिप्रायं न नूनं लज्जयेच्छसि ।
विवक्तुं प्राप्तिशैथिल्यात्तेनासि हरिणः कृशः ॥ ०२६ ॥

नानाबुद्धिरुची.ण्ल्लोके मनुष्यान्नूनमिच्छसि ।
ग्रहीतुं स्वगुणैः सर्वांस्तेनासि हरिणः कृशः ॥ ०२७ ॥

अविद्वान्भीरुरल्पार्थो विद्याविक्रमदानजम् ।
यशः प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ ०२८ ॥

चिराभिलषितं किञ्चित्फलमप्राप्तमेव ते ।
कृतमन्यैरपहृतं तेनासि हरिणः कृशः ॥ ०२९ ॥

नूनमात्मकृतं दोषमपश्यन्किञ्चिदात्मनि ।
अकारणेऽभिशस्तोऽसि तेनासि हरिणः कृशः ॥ ०३० ॥

सुहृदामप्रमत्तानामप्रमोक्ष्यार्थहानिजम् ।

दुःखमर्थगुणैर्हीनं तेनासि हरिणः कृशः ॥ ०३१ ॥

साधून्गृहस्थान्दृष्ट्वा च तथासाधून्वनेचरान् ।
मुक्तांश्चावसथे सक्तांस्तेनासि हरिणः कृशः ॥ ०३२ ॥

धर्म्यमर्थं च काले च देशे चाभिहितं वचः ।
न प्रतिष्ठति ते नूनं तेनासि हरिणः कृशः ॥ ०३३ ॥

दत्तानकुशलैरर्थान्मनीषी सञ्जिजीविषुः ।
प्राप्य वर्तयसे नूनं तेनासि हरिणः कृशः ॥ ०३४ ॥

पापान्विवर्धतो दृष्ट्वा कल्याणांश्चावसीदतः ।
ध्रुवं मृगयसे योग्यं तेनासि हरिणः कृशः ॥ ०३५ ॥

परस्परविरुद्धानां प्रियं नूनं चिकीर्षसि ।
सुहृदामविरोधेन तेनासि हरिणः कृशः ॥ ०३६ ॥

श्रोत्रियांश्च विकर्मस्थान्प्राज्ञांश्चाप्यजितेन्द्रियान् ।
मन्येऽनुध्यायसि जनांस्तेनासि हरिणः कृशः ॥ ०३७ ॥

एवं संपूजितं रक्षो विप्रं तं प्रत्यपूजयत् ।
सखायमकरोच्चैनं संयोज्यार्थैर्मुमोच ह ॥ ०३८ ॥

---

# उमामहेश्वरसंवादः

## अध्याय १२६

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
आगमैर्बहुभिः स्फीतो भवान्नः प्रथितः कुले ॥ ००१ ॥

त्वत्तो धर्मार्थसंयुक्तमायत्यां च सुखोदयम् ।
आश्चर्यभूतं लोकस्य श्रोतुमिच्छाम्यरिंदम ॥ ००२ ॥

अयं च कालः संप्राप्तो दुर्लभज्ञातिबान्धवः ।
शास्ता च न हि नः कश्चित्त्वामृते भरतर्षभ ॥ ००३ ॥

यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
वक्तुमर्हसि नः प्रश्नं यत्त्वां पृच्छामि पार्थिव ॥ ००४ ॥

अयं नारायणः श्रीमान्सर्वपार्थिवसंमतः ।
भवन्तं बहुमानेन प्रश्रयेण च सेवते ॥ ००५ ॥

अस्य चैव समक्षं त्वं पार्थिवानां च सर्वशः ।
भ्रातृणां च प्रियार्थं मे स्नेहाद्भाषितुमर्हसि ॥ ००६ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं श्रुत्वा स्नेहादागतसंभ्रमः ।
भीष्मो भागीरथीपुत्र इदं वचनमब्रवीत् ॥ ००७ ॥

हन्त ते कथयिष्यामि कथामतिमनोरमाम् ।
अस्य विष्णोः पुरा राजन्प्रभावोऽयं मया श्रुतः ॥ ००८ ॥

यश्च गोवृषभाङ्कस्य प्रभावस्तं च मे शृणु ।
रुद्राण्याः संशयो यश्च दंपत्योस्तं च मे शृणु ॥ ००९ ॥

व्रतं चचार धर्मात्मा कृष्णो द्वादशवार्षिकम् ।
दीक्षितं चागतौ द्रष्टुमुभौ नारदपर्वतौ ॥ ०१० ॥

कृष्णद्वैपायनश्चैव धौम्यश्च जपतां वरः ।
देवलः काश्यपश्चैव हस्तिकाश्यप एव च ॥ ०११ ॥

अपरे ऋषयः सन्तो दीक्षादमसमन्विताः ।
शिष्यैरनुगताः सर्वे देवकल्पैस्तपोधनैः ॥ ०१२ ॥

तेषामतिथिसत्कारमर्चनीयं कुलोचितम् ।
देवकीतनयः प्रीतो देवकल्पमकल्पयत् ॥ ०१३ ॥

हरितेषु सुवर्णेषु बर्हिष्केषु नवेषु च ।
उपोपविविशुः प्रीता विष्टरेषु महर्षयः ॥ ०१४ ॥

कथाश्चक्रुस्ततस्ते तु मधुरा धर्मसंहिताः ।
राजर्षीणां सुराणां च ये वसन्ति तपोधनाः ॥ ०१५ ॥

ततो नारायणं तेजो व्रतचर्येन्धनोत्थितम् ।
वक्त्रान्निःसृत्य कृष्णस्य वह्निरद्भुतकर्मणः ॥ ०१६ ॥

सोऽग्निर्ददाह तं शैलं सद्रुमं सलताक्षुपम् ।
सपक्षिमृगसंघातं सश्वापदसरीसृपम् ॥ ०१७ ॥

मृगैश्च विविधाकारैर्हाहाभूतमचेतनम् ।
शिखरं तस्य शैलस्य मथितं दीप्तदर्शनम् ॥ ०१८ ॥

स तु वह्निर्महाज्वालो दग्ध्वा सर्वमशेषतः ।
विष्णोः समीपमागम्य पादौ शिष्यवदस्पृशत्  ॥ ०१९  ॥

ततो विष्णुर्वनं दृष्ट्वा निर्दग्धमरिकर्शनः ।
सौम्यैर्दृष्टिनिपातैस्तत्पुनः प्रकृतिमानयत्  ॥ ०२०  ॥

तथैव स गिरिर्भूयः प्रपुष्पितलताद्रुमः ।
सपक्षिगणसंघुष्टः सश्वापदसरीसृपः  ॥ ०२१  ॥

तदद्भुतमचिन्त्यं च दृष्ट्वा मुनिगणस्तदा ।
विस्मितो हृष्टलोमा च बभूवास्राविलेक्षणः  ॥ ०२२  ॥

ततो नारायणो दृष्ट्वा तानृषीन्विस्मयान्वितान् ।
प्रश्रितं मधुरं स्निग्धं पप्रच्छ वदतां वरः  ॥ ०२३  ॥

किमस्य ऋषिपूगस्य त्यक्तसङ्गस्य नित्यशः ।
निर्ममस्यागमवतो विस्मयः समुपागतः  ॥ ०२४  ॥

एतं मे संशयं सर्वं याथातथ्यमनिन्दिताः ।
ऋषयो वक्तुमर्हन्ति निश्चितार्थं तपोधनाः  ॥ ०२५  ॥

ऋषय ऊचुः  ॥

भवान्विसृजते लोकान्भवान्संहरते पुनः ।
भवाञ्शीतं भवानुष्णं भवानेव प्रवर्षति  ॥ ०२६  ॥

पृथिव्यां यानि भूतानि स्थावराणि चराणि च ।
तेषां पिता त्वं माता च प्रभुः प्रभव एव च  ॥ ०२७  ॥

एतन्नो विस्मयकरं प्रशंस मधुसूदन ।
त्वमेवार्हसि कल्याण वक्तुं वह्नेर्विनिर्गमम्  ॥ ०२८  ॥

ततो विगतसंत्रासा वयमप्यरिकर्शन ।
यच्छ्रुतं यच्च दृष्टं नस्तत्प्रवक्ष्यामहे हरे ॥ ०२९ ॥

वासुदेव उवाच ॥

एतत्तद्वैष्णवं तेजो मम वक्त्राद्विनिःसृतम् ।
कृष्णवर्त्मा युगान्ताभो येनायं मथितो गिरिः ॥ ०३० ॥

ऋषयश्चार्तिमापन्ना जितक्रोधा जितेन्द्रियाः ।
भवन्तो व्यथिताश्चासन्देवकल्पास्तपोधनाः ॥ ०३१ ॥

व्रतचर्यापरीतस्य तपस्विव्रतसेवया ।
मम वह्निः समुद्भूतो न वै व्यथितुमर्हथ ॥ ०३२ ॥

व्रतं चर्तुमिहायातस्त्वहं गिरिमिमं शुभम् ।
पुत्रं चात्मसमं वीर्ये तपसा स्रष्टुमागतः ॥ ०३३ ॥

ततो ममात्मा यो देहे सोऽग्निर्भूत्वा विनिःसृतः ।
गतश्च वरदं द्रष्टुं सर्वलोकपितामहम् ॥ ०३४ ॥

तेन चात्मानुशिष्टो मे पुत्रत्वे मुनिसत्तमाः ।
तेजसोऽर्धेन पुत्रस्ते भवितेति वृषध्वजः ॥ ०३५ ॥

सोऽयं वह्निरुपागम्य पादमूले ममान्तिकम् ।
शिष्यवत्परिचर्यार्थं शान्तः प्रकृतिमागतः ॥ ०३६ ॥

एतदस्य रहस्यं वः पद्मनाभस्य धीमतः ।
मया प्रेम्णा समाख्यातं न भीः कार्या तपोधनाः ॥ ०३७ ॥

सर्वत्र गतिरव्यग्रा भवतां दीर्घदर्शनाः ।

तपस्विव्रतसंदीप्ता ज्ञानविज्ञानशोभिताः ॥ ०३८ ॥

यच्छ्रुतं यच्च वो दृष्टं दिवि वा यदि वा भुवि ।
आश्चर्यं परमं किञ्चित्तद्भवन्तो ब्रुवन्तु मे ॥ ०३९ ॥

तस्यामृतनिकाशस्य वाङ्मधोरस्ति मे स्पृहा ।
भवद्भिः कथितस्येह तपोवननिवासिभिः ॥ ०४० ॥

यद्यप्यहमदृष्टं वा दिव्यमद्भुतदर्शनम् ।
दिवि वा भुवि वा किञ्चित्पश्याम्यमलदर्शनाः ॥ ०४१ ॥

प्रकृतिः सा मम परा न क्वचित्प्रतिहन्यते ।
न चात्मगतमैश्वर्यमाश्चर्यं प्रतिभाति मे ॥ ०४२ ॥

श्रद्धेयः कथितो ह्यर्थः सज्जनश्रवणं गतः ।
चिरं तिष्ठति मेदिन्यां शैले लेख्यमिवार्पितम् ॥ ०४३ ॥

तदहं सज्जनमुखान्निःसृतं तत्समागमे ।
कथयिष्याम्यहरहर्बुद्धिदीपकरं नृणाम् ॥ ०४४ ॥

ततो मुनिगणाः सर्वे प्रश्रिताः कृष्णसंनिधौ ।
नेत्रैः पद्मदलप्रख्यैरपश्यन्त जनार्दनम् ॥ ०४५ ॥

वर्धयन्तस्तथैवान्ये पूजयन्तस्तथापरे ।
वाग्भिर्ऋग्भूषितार्थाभिः स्तुवन्तो मधुसूदनम् ॥ ०४६ ॥

ततो मुनिगणाः सर्वे नारदं देवदर्शनम् ।
तदा नियोजयामासुर्वचने वाक्यकोविदम् ॥ ०४७ ॥

यदाश्चर्यमचिन्त्यं च गिरौ हिमवति प्रभो ।
अनुभूतं मुनिगणैस्तीर्थयात्रापरायणैः ॥ ०४८ ॥

तद्भवानृषिसंघस्य हितार्थं सर्वचोदितः ।
यथादृष्टं हृषीकेशो सर्वमाख्यातुमर्हति ॥ ०४९ ॥

एवमुक्तः स मुनिभिर्नारदो भगवानृषिः ।
कथयामास देवर्षिः पूर्ववृत्तां कथां शुभाम् ॥ ०५० ॥

---

# अध्याय १२७

भीष्म उवाच ॥

ततो नारायणसुहृन्नारदो भगवानृषिः ।
शङ्करस्योमया सार्धं संवादं प्रत्यभाषत ॥ ००१ ॥

तपश्चचार धर्मात्मा वृषभाङ्कः सुरेश्वरः ।
पुण्ये गिरौ हिमवति सिद्धचारणसेविते ॥ ००२ ॥

नानौषधियुते रम्ये नानापुष्पसमाकुले ।
अप्सरोगणसङ्कीर्णे भूतसंघनिषेविते ॥ ००३ ॥

तत्र देवो मुदा युक्तो भूतसंघशतैर्वृतः ।
नानारूपैर्विरूपैश्च दिव्यैरद्भुतदर्शनैः ॥ ००४ ॥

सिंहव्याघ्रगजप्रख्यैः सर्वजातिसमन्वितैः ।
क्रोष्टुकद्वीपिवदनैरृक्षर्षभमुखैस्तथा ॥ ००५ ॥

उलूकवदनैर्भीमैः श्येनभासमुखैस्तथा ।

नानावर्णमृगप्रख्यैः सर्वजातिसमन्वयैः ॥ ००६ ॥

किंनरैर्देवगन्धर्वैर्यक्षभूतगणैस्तथा ॥ ००६ ॥

दिव्यपुष्पसमाकीर्णं दिव्यमालाविभूषितम् ।
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम् ॥ ००७ ॥

तत्सदो वृषभाङ्कस्य दिव्यवादित्रनादितम् ॥ ००७ ॥

मृदङ्गपणवोद्घुष्टं शङ्खभेरीनिनादितम् ।
नृत्यद्भिर्भूतसंघैश्च बर्हिणैश्च समन्ततः ॥ ००८ ॥

प्रनृत्ताप्सरसं दिव्यं दिव्यस्त्रीगणसेवितम् ।
दृष्टिकान्तमनिर्देश्यं दिव्यमद्भुतदर्शनम् ॥ ००९ ॥

स गिरिस्तपसा तस्य भूतेशस्य व्यरोचत ।
स्वाध्यायपरमैर्विप्रैर्ब्रह्मघोषैर्विनादितः ।
षट्पदैरुपगीतैश्च माधवाप्रतिमो गिरिः ॥ ०११ ॥

तं महोत्सवसङ्काशं भीमरूपधरं पुनः ।
दृष्ट्वा मुनिगणस्यासीत्परा प्रीतिर्जनार्दन ॥ ०१२ ॥

मुनयश्च महाभागाः सिद्धाश्चैवोर्ध्वरेतसः ।
मरुतो वसवः साध्या विश्वेदेवाः सनातनाः ॥ ०१३ ॥

यक्षा नागाः पिशाचाश्च लोकपाला हुताशनाः ।
भावाश्च सर्वे न्यग्भूतास्तत्रैवासन्समागताः ॥ ०१४ ॥

ऋतवः सर्वपुष्पैश्च व्यकिरन्त महाद्भुतैः ।
ओषध्यो ज्वलमानाश्च द्योतयन्ति स्म तद्वनम् ॥ ०१५ ॥

विहगाश्च मुदा युक्ताः प्रानृत्यन्व्यनदंश्च ह ।
गिरिपृष्ठेषु रम्येषु व्याहरन्तो जनप्रियाः ॥ ०१६ ॥

तत्र देवो गिरितटे दिव्यधातुविभूषिते ।
पर्यङ्क इव विभ्राजन्नुपविष्टो महामनाः ॥ ०१७ ॥

व्याघ्रचर्माम्बरधरः सिंहचर्मोत्तरच्छदः ।
व्यालयज्ञोपवीती च लोहिताङ्गदभूषणः ॥ ०१८ ॥

हरिश्मश्रुर्जटी भीमो भयकर्ता सुरद्विषाम् ।
अभयः सर्वभूतानां भक्तानां वृषभध्वजः ॥ ०१९ ॥

दृष्ट्वा तमृषयः सर्वे शिरोभिरवनीं गताः ।
विमुक्ताः सर्वपापेभ्यः क्षान्ता विगतकल्मषाः ॥ ०२० ॥

तस्य भूतपतेः स्थानं भीमरूपधरं बभौ ।
अप्रधृष्यतरं चैव महोरगसमाकुलम् ॥ ०२१ ॥

क्षणेनैवाभवत्सर्वमद्भुतं मधुसूदन ।
तत्सदो वृषभाङ्कस्य भीमरूपधरं बभौ ॥ ०२२ ॥

तमभ्ययाच्छैलसुता भूतस्त्रीगणसंवृता ।
हरतुल्याम्बरधरा समानव्रतचारिणी ॥ ०२३ ॥

बिभ्रती कलशं रौक्मं सर्वतीर्थजलोद्भवम् ।
गिरिस्रवाभिः पुण्याभिः सर्वतोऽनुगता शुभा ॥ ०२४ ॥

पुष्पवृष्ट्याभिवर्षन्ती गन्धैर्बहुविधैस्तथा ।
सेवन्ती हिमवत्पार्श्वं हरपार्श्वमुपागमत् ॥ ०२५ ॥

ततः स्मयन्ती पाणिभ्यां नर्मार्थं चारुदर्शना ।

हरनेत्रे शुभे देवी सहसा सा समावृणोत्  ॥ ०२६  ॥

संवृताभ्यां तु नेत्राभ्यां तमोभूतमचेतनम् ।
निर्होमं निर्वषट्कारं तत्सदः सहसाभवत्  ॥ ०२७  ॥

जनश्च विमनाः सर्वो भयत्राससमन्वितः ।
निमीलिते भूतपतौ नष्टसूर्य इवाभवत्  ॥ ०२८  ॥

ततो वितिमिरो लोकः क्षणेन समपद्यत ।
ज्वाला च महती दीप्ता ललाटात्तस्य निःसृता  ॥ ०२९  ॥

तृतीयं चास्य संभूतं नेत्रमादित्यसंनिभम् ।
युगान्तसदृशं दीप्तं येनासौ मथितो गिरिः  ॥ ०३०  ॥

ततो गिरिसुता दृष्ट्वा दीप्ताग्निसदृशेक्षणम् ।
हरं प्रणम्य शिरसा ददर्शायतलोचना  ॥ ०३१  ॥

दह्यमाने वने तस्मिन्सशालसरलद्रुमे ।
सचन्दनवने रम्ये दिव्यौषधिविदीपिते  ॥ ०३२  ॥

मृगयूथैर्द्रुतैर्भीतैर्हरपार्श्वमुपागतैः ।
शरणं चाप्यविन्दद्भिस्तत्सदः सङ्कुलं बभौ  ॥ ०३३  ॥

ततो नभःस्पृशज्वालो विद्युल्लोलार्चिरुज्ज्वलः ।
द्वादशादित्यसदृशो युगान्ताग्निरिवापरः  ॥ ०३४  ॥

क्षणेन तेन दग्धः स हिमवानभवन्नगः ।
सधातुशिखराभोगो दीनदग्धवनौषधिः  ॥ ०३५  ॥

तं दृष्ट्वा मथितं शैलं शैलराजसुता ततः ।
भगवन्तं प्रपन्ना सा साञ्जलिप्रग्रहा स्थिता  ॥ ०३६  ॥

उमां शर्वस्तदा दृष्ट्वा स्त्रीभावागतमार्दवाम् ।
पितुर्दैन्यमनिच्छन्तीं प्रीत्यापश्यत्ततो गिरिम्  ॥ ०३७  ॥

ततोऽभवत्पुनः सर्वः प्रकृतिस्थः सुदर्शनः ।
प्रहृष्टविहगश्चैव प्रपुष्पितवनद्रुमः  ॥ ०३८  ॥

प्रकृतिस्थं गिरिं दृष्ट्वा प्रीता देवी महेश्वरम् ।
उवाच सर्वभूतानां पतिं पतिमनिन्दिता  ॥ ०३९  ॥

भगवन्सर्वभूतेश शूलपाणे महाव्रत ।
संशयो मे महाञ्जातस्तं मे व्याख्यातुमर्हसि  ॥ ०४०  ॥

किमर्थं ते ललाटे वै तृतीयं नेत्रमुत्थितम् ।
किमर्थं च गिरिर्दग्धः सपक्षिगणकाननः  ॥ ०४१  ॥

किमर्थं च पुनर्देव प्रकृतिस्थः क्षणात्कृतः ।
तथैव द्रुमसंछन्नः कृतोऽयं ते महेश्वर  ॥ ०४२  ॥

महेश्वर उवाच  ॥

नेत्रे मे संवृते देवि त्वया बाल्यादनिन्दिते ।
नष्टालोकस्ततो लोकः क्षणेन समपद्यत  ॥ ०४३  ॥

नष्टादित्ये तथा लोके तमोभूते नगात्मजे ।
तृतीयं लोचनं दीप्तं सृष्टं ते रक्षता प्रजाः  ॥ ०४४  ॥

तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः ।
त्वत्प्रियार्थं च मे देवि प्रकृतिस्थः क्षणात्कृतः  ॥ ०४५  ॥

उमोवाच  ॥

भगवन्केन ते वक्त्रं चन्द्रवत्प्रियदर्शनम् ।
पूर्वं तथैव श्रीकान्तमुत्तरं पश्चिमं तथा ॥ ०४६ ॥

दक्षिणं च मुखं रौद्रं केनोर्ध्वं कपिला जटाः ।
केन कण्ठश्च ते नीलो बर्हिबर्हनिभः कृतः ॥ ०४७ ॥

हस्ते चैतत्पिनाकं ते सततं केन तिष्ठति ।
जटिलो ब्रह्मचारी च किमर्थमसि नित्यदा ॥ ०४८ ॥

एतं मे संशयं सर्वं वद भूतपतेऽनघ ।
सधर्मचारिणी चाहं भक्ता चेति वृषध्वज ॥ ०४९ ॥

एवमुक्तः स भगवाञ्शैलपुत्र्या पिनाकधृक् ।
तस्या वृत्त्या च बुद्ध्या च प्रीतिमानभवत्प्रभुः ॥ ०५० ॥

ततस्तामब्रवीद्देवः सुभगे श्रूयतामिति ।
हेतुभिर्यैर्ममैतानि रूपाणि रुचिरानने ॥ ०५१ ॥

---

# अध्याय १२८

महेश्वर उवाच ॥

तिलोत्तमा नाम पुरा ब्रह्मणा योषिदुत्तमा ।
तिलं तिलं समुद्धृत्य रत्नानां निर्मिता शुभा ॥ ००१ ॥

साभ्यगच्छत मां देवि रूपेणाप्रतिमा भुवि ।

प्रदक्षिणं लोभयन्ती मां शुभे रुचिरानना ॥ ००२ ॥

यतो यतः सा सुदती मामुपाधावदन्तिके ।
ततस्ततो मुखं चारु मम देवि विनिर्गतम् ॥ ००३ ॥

तां दिदृक्षुरहं योगाच्चतुर्मूर्तित्वमागतः ।
चतुर्मुखश्च संवृत्तो दर्शयन्योगमात्मनः ॥ ००४ ॥

पूर्वेण वदनेनाहमिन्द्रत्वमनुशास्मि ह ।
उत्तरेण त्वया सार्धं रमाम्यहमनिन्दिते ॥ ००५ ॥

पश्चिमं मे मुखं सौम्यं सर्वप्राणिसुखावहम् ।
दक्षिणं भीमसङ्काशं रौद्रं संहरति प्रजाः ॥ ००६ ॥

जटिलो ब्रह्मचारी च लोकानां हितकाम्यया ।
देवकार्यार्थसिद्ध्यर्थं पिनाकं मे करे स्थितम् ॥ ००७ ॥

इन्द्रेण च पुरा वज्रं क्षिप्तं श्रीकाङ्क्षिणा मम ।
दग्ध्वा कण्ठं तु तद्यातं तेन श्रीकण्ठता मम ॥ ००८ ॥

उमोवाच ॥

वाहनेषु प्रभूतेषु श्रीमत्स्वन्येषु सत्सु ते ।
कथं गोवृषभो देव वाहनत्वमुपागतः ॥ ००९ ॥

महेश्वर उवाच ॥

सुरभीं ससृजे ब्रह्मामृतधेनुं पयोमुचम् ।
सा सृष्टा बहुधा जाता क्षरमाणा पयोऽमृतम् ॥ ०१० ॥

तस्या वत्समुखोत्सृष्टः फेनो मद्गात्रमागतः ।

ततो दग्धा मया गावो नानावर्णत्वमागताः ॥ ०११ ॥

ततोऽहं लोकगुरुणा शमं नीतोऽर्थवेदिना ।
वृषं चेमं ध्वजार्थं मे ददौ वाहनमेव च ॥ ०१२ ॥

उमोवाच ॥

निवासा बहुरूपास्ते विश्वरूपगुणान्विताः ।
तांश्च संत्यज्य भगवञ्श्मशाने रमसे कथम् ॥ ०१३ ॥

केशास्थिकलिले भीमे कपालघटसङ्कुले ।
गृध्रगोमायुकलिले चिताग्निशतसङ्कुले ॥ ०१४ ॥

अशुचौ मांसकलिले वसाशोणितकर्दमे ।
विनिकीर्णामिषचये शिवानादविनादिते ॥ ०१५ ॥

महेश्वर उवाच ॥

मेध्यान्वेषी महीं कृत्स्नां विचरामि निशास्वहम् ।
न च मेध्यतरं किञ्चिच्छ्मशानादिह विद्यते ॥ ०१६ ॥

तेन मे सर्ववासानां श्मशाने रमते मनः ।
न्यग्रोधशाखासंछन्ने निर्भुक्तस्रग्विभूषिते ॥ ०१७ ॥

तत्र चैव रमन्ते मे भूतसंघाः शुभानने ।
न च भूतगणैर्देवि विनाहं वस्तुमुत्सहे ॥ ०१८ ॥

एष वासो हि मे मेध्यः स्वर्गीयश्च मतो हि मे ।
पुण्यः परमकश्चैव मेध्यकामैरुपास्यते ॥ ०१९ ॥

उमोवाच ॥

भगवन्सर्वभूतेश सर्वधर्मभृतां वर ।
पिनाकपाणे वरद संशयो मे महानयम् ॥ ०२० ॥

अयं मुनिगणः सर्वस्तपस्तप इति प्रभो ।
तपोन्वेषकरो लोके भ्रमते विविधाकृतिः ॥ ०२१ ॥

अस्य चैवर्षिसंघस्य मम च प्रियकाम्यया ।
एतं ममेह संदेहं वक्तुमर्हस्यरिंदम ॥ ०२२ ॥

धर्मः किंलक्षणः प्रोक्तः कथं वाचरितुं नरैः ।
शक्यो धर्ममविन्दद्भिर्धर्मज्ञ वद मे प्रभो ॥ ०२३ ॥

नारद उवाच ॥

ततो मुनिगणः सर्वस्तां देवीं प्रत्यपूजयत् ।
वाग्भिर्ऋग्भूषितार्थाभिः स्तवैश्चार्थविदां वर ॥ ०२४ ॥

महेश्वर उवाच ॥

अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ।
शमो दानं यथाशक्ति गार्हस्थ्यो धर्म उत्तमः ॥ ०२५ ॥

परदारेष्वसङ्कल्पो न्यासस्त्रीपरिरक्षणम् ।
अदत्तादानविरमो मधुमांसस्य वर्जनम् ॥ ०२६ ॥

एष पञ्चविधो धर्मो बहुशाखः सुखोदयः ।
देहिभिर्धर्मपरमैः कर्तव्यो धर्मसञ्चयः ॥ ०२७ ॥

उमोवाच ॥

भगवन्संशयं पृष्टस्तं मे व्याख्यातुमर्हसि ।
चातुर्वर्ण्यस्य यो धर्मः स्वे स्वे वर्णे गुणावहः ॥ ०२८ ॥

ब्राह्मणे कीदृशो धर्मः क्षत्रिये कीदृशो भवेत् ।
वैश्ये किंलक्षणो धर्मः शूद्रे किंलक्षणो भवेत् ॥ ०२९ ॥

महेश्वर उवाच ॥

न्यायतस्ते महाभागे संशयः समुदीरितः ।
भूमिदेवा महाभागाः सदा लोके द्विजातयः ॥ ०३० ॥

उपवासः सदा धर्मो ब्राह्मणस्य न संशयः ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ०३१ ॥

तस्य धर्मक्रिया देवि व्रतचर्या च न्यायतः ।
तथोपनयनं चैव द्विजायैवोपपद्यते ॥ ०३२ ॥

गुरुदैवतपूजार्थं स्वाध्यायाभ्यसनात्मकः ।
देहिभिर्धर्मपरमैश्चर्तव्यो धर्मसंभवः ॥ ०३३ ॥

उमोवाच ॥

भगवन्संशयो मेऽत्र तं मे व्याख्यातुमर्हसि ।
चातुर्वर्ण्यस्य धर्मं हि नैपुण्येन प्रकीर्तय ॥ ०३४ ॥

महेश्वर उवाच ॥

रहस्यश्रवणं धर्मो वेदव्रतनिषेवणम् ।
व्रतचर्यापरो धर्मो गुरुपादप्रसादनम् ॥ ०३५ ॥

भैक्षचर्यापरो धर्मो धर्मो नित्योपवासिता ।

नित्यस्वाध्यायिता धर्मो ब्रह्मचर्याश्रमस्तथा ॥ ०३६ ॥

गुरुणा त्वभ्यनुज्ञातः समावर्तेत वै द्विजः ।
विन्देतानन्तरं भार्यामनुरूपां यथाविधि ॥ ०३७ ॥

शूद्रान्नवर्जनं धर्मस्तथा सत्पथसेवनम् ।
धर्मो नित्योपवासित्वं ब्रह्मचर्यं तथैव च ॥ ०३८ ॥

आहिताग्निरधीयानो जुह्वानः संयतेन्द्रियः ।
विघसाशी यताहारो गृहस्थः सत्यवाक्शुचिः ॥ ०३९ ॥

अतिथिव्रतता धर्मो धर्मस्त्रेताग्निधारणम् ।
इष्टीश्च पशुबन्धांश्च विधिपूर्वं समाचरेत् ॥ ०४० ॥

यज्ञश्च परमो धर्मस्तथाहिंसा च देहिषु ।
अपूर्वभोजनं धर्मो विघसाशित्वमेव च ॥ ०४१ ॥

भुक्ते परिजने पश्चाद्भोजनं धर्म उच्यते ।
ब्राह्मणस्य गृहस्थस्य श्रोत्रियस्य विशेषतः ॥ ०४२ ॥

दंपत्योः समशीलत्वं धर्मश्च गृहमेधिनाम् ।
गृह्याणां चैव देवानां नित्यं पुष्पबलिक्रिया ॥ ०४३ ॥

नित्योपलेपनं धर्मस्तथा नित्योपवासिता ।
सुसंमृष्टोपलिप्ते च साज्यधूमोद्गमे गृहे ॥ ०४४ ॥

एष द्विजजने धर्मो गार्हस्थ्यो लोकधारणः ।
द्विजातीनां सतां नित्यं सदैवैष प्रवर्तते ॥ ०४५ ॥

यस्तु क्षत्रगतो देवि त्वया धर्म उदीरितः ।
तमहं ते प्रवक्ष्यामि तं मे शृणु समाहिता ॥ ०४६ ॥

क्षत्रियस्य स्मृतो धर्मः प्रजापालनमादितः ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ ०४७ ॥

प्रजाः पालयते यो हि धर्मेण मनुजाधिपः ।
तस्य धर्मार्जिता लोकाः प्रजापालनसञ्चिताः ॥ ०४८ ॥

तत्र राज्ञः परो धर्मो दमः स्वाध्याय एव च ।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ॥ ०४९ ॥

यज्ञोपवीतधारणं यज्ञो धर्मक्रियास्तथा ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ॥ ०५० ॥

सम्यग्दण्डे स्थितिर्धर्मो धर्मो वेदक्रतुक्रियाः ।
व्यवहारस्थितिर्धर्मः सत्यवाक्यरतिस्तथा ॥ ०५१ ॥

आर्तहस्तप्रदो राजा प्रेत्य चेह महीयते ।
गोब्राह्मणार्थे विक्रान्तः सङ्ग्रामे निधनं गतः ॥ ०५२ ॥

अश्वमेधजिता.ण्ल्लोकान्प्राप्नोति त्रिदिवालये ॥ ०५२ ॥

वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ॥ ०५३ ॥

वाणिज्यं सत्पथस्थानमातिथ्यं प्रशमो दमः ।
विप्राणां स्वागतं त्यागो वैश्यधर्मः सनातनः ॥ ०५४ ॥

तिलान्गन्धान्रसांश्चैव न विक्रीणीत वै क्वचित् ।
वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः ॥ ०५५ ॥

सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति यथार्हतः ।

शूद्रधर्मः परो नित्यं शुश्रूषा च द्विजातिषु  ॥ ०५६  ॥

स शूद्रः संशिततपाः सत्यसंधो जितेन्द्रियः ।
शुश्रूषन्नतिथिं प्राप्तं तपः सञ्चिनुते महत्  ॥ ०५७  ॥

त्यक्तहिंसः शुभाचारो देवताद्विजपूजकः ।
शूद्रो धर्मफलैरिष्टैः संप्रयुज्येत बुद्धिमान्  ॥ ०५८  ॥

एतत्ते सर्वमाख्यातं चातुर्वर्ण्यस्य शोभने ।
एकैकस्येह सुभगे किमन्यच्छ्रोतुमिच्छसि  ॥ ०५९  ॥

---

# अध्याय १२९

उमोवाच  ॥

उक्तास्त्वया पृथग्धर्माश्चातुर्वर्ण्यहिताः शुभाः ।
सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीहि मे  ॥ ००१  ॥

महेश्वर उवाच  ॥

ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना ।
लोकांस्तारयितुं कृत्स्नान्मर्त्येषु क्षितिदेवताः  ॥ ००२  ॥

तेषामिमं प्रवक्ष्यामि धर्मकर्मफलोदयम् ।
ब्राह्मणेषु हि यो धर्मः स धर्मः परमो मतः  ॥ ००३  ॥

इमे तु लोकधर्मार्थं त्रयः सृष्टाः स्वयंभुवा ।

पृथिव्याः सर्जने नित्यं सृष्टास्तानपि मे शृणु ॥ ००४ ॥

वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
शिष्टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः ॥ ००५ ॥

त्रैविद्यो ब्राह्मणो विद्वान्न चाध्ययनजीवनः ।
त्रिकर्मा त्रिपरिक्रान्तो मैत्र एष स्मृतो द्विजः ॥ ००६ ॥

षडिमानि तु कर्माणि प्रोवाच भुवनेश्वरः ।
वृत्त्यर्थं ब्राह्मणानां वै शृणु तानि समाहिता ॥ ००७ ॥

यजनं याजनं चैव तथा दानप्रतिग्रहौ ।
अध्यापनमधीतं च षट्कर्मा धर्मभाग्द्विजः ॥ ००८ ॥

नित्यस्वाध्यायता धर्मो धर्मो यज्ञः सनातनः ।
दानं प्रशस्यते चास्य यथाशक्ति यथाविधि ॥ ००९ ॥

अयं तु परमो धर्मः प्रवृत्तः सत्सु नित्यशः ।
गृहस्थता विशुद्धानां धर्मस्य निचयो महान् ॥ ०१० ॥

पञ्चयज्ञविशुद्धात्मा सत्यवागनसूयकः ।
दाता ब्राह्मणसत्कर्ता सुसंमृष्टनिवेशनः ॥ ०११ ॥

अमानी च सदाजिह्मः स्निग्धवाणीप्रदस्तथा ।
अतिथ्यभ्यागतरतिः शेषान्नकृतभोजनः ॥ ०१२ ॥

पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा ।
दीपं प्रतिश्रयं चापि यो ददाति स धार्मिकः ॥ ०१३ ॥

प्रातरुत्थाय चाचम्य भोजनेनोपमन्त्र्य च ।
सत्कृत्यानुव्रजेद्यश्च तस्य धर्मः सनातनः ॥ ०१४ ॥

सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
शूद्रधर्मः समाख्यातस्त्रिवर्णपरिचारणम्  ॥ ०१५  ॥

प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते ।
तमहं कीर्तयिष्यामि सर्वभूतहितं शुभम्  ॥ ०१६  ॥

दातव्यमसकृच्छक्त्या यष्टव्यमसकृत्तथा ।
पुष्टिकर्मविधानं च कर्तव्यं भूतिमिच्छता  ॥ ०१७  ॥

धर्मेणार्थः समाहार्यो धर्मलब्धं त्रिधा धनम् ।
कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः  ॥ ०१८  ॥

एकेनांशेन धर्मार्थश्चर्तव्यो भूतिमिच्छता ।
एकेनांशेन कामार्थ एकमंशं विवर्धयेत्  ॥ ०१९  ॥

निवृत्तिलक्षणस्त्वन्यो धर्मो मोक्ष इति स्मृतः ।
तस्य वृत्तिं प्रवक्ष्यामि शृणु मे देवि तत्त्वतः  ॥ ०२०  ॥

सर्वभूतदया धर्मो न चैकग्रामवासिता ।
आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणाम्  ॥ ०२१  ॥

न कुण्ड्यां नोदके सङ्गो न वाससि न चासने ।
न त्रिदण्डे न शयने नाग्नौ न शरणालये  ॥ ०२२  ॥

अध्यात्मगतचित्तो यस्तन्मनास्तत्परायणः ।
युक्तो योगं प्रति सदा प्रतिसंख्यानमेव च  ॥ ०२३  ॥

वृक्षमूलशयो नित्यं शून्यागारनिवेशनः ।
नदीपुलिनशायी च नदीतीररतिश्च यः  ॥ ०२४  ॥

विमुक्तः सर्वसङ्गेषु स्नेहबन्धेषु च द्विजः ।
आत्मन्येवात्मनो भावं समासज्याटति द्विजः ॥ ०२५ ॥

स्थाणुभूतो निराहारो मोक्षदृष्टेन कर्मणा ।
परिव्रजति यो युक्तस्तस्य धर्मः सनातनः ॥ ०२६ ॥

न चैकत्र चिरासक्तो न चैकग्रामगोचरः ।
युक्तो ह्यटति निर्मुक्तो न चैकपुलिनेशयः ॥ ०२७ ॥

एष मोक्षविदां धर्मो वेदोक्तः सत्पथः सताम् ।
यो मार्गमनुयातीमं पदं तस्य न विद्यते ॥ ०२८ ॥

चतुर्विधा भिक्षवस्ते कुटीचरकृतोदकः ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ॥ ०२९ ॥

अतः परतरं नास्ति नाधरं न तिरोऽग्रतः ।
अदुःखमसुखं सौम्यमजरामरमव्ययम् ॥ ०३० ॥

उमोवाच ॥

गार्हस्थ्यो मोक्षधर्मश्च सज्जनाचरितस्त्वया ।
भाषितो मर्त्यलोकस्य मार्गः श्रेयस्करो महान् ॥ ०३१ ॥

ऋषिधर्मं तु धर्मज्ञ श्रोतुमिच्छाम्यनुत्तमम् ।
स्पृहा भवति मे नित्यं तपोवननिवासिषु ॥ ०३२ ॥

आज्यधूमोद्भवो गन्धो रुणद्धीव तपोवनम् ।
तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ॥ ०३३ ॥

एतं मे संशयं देव मुनिधर्मकृतं विभो ।
सर्वधर्मार्थतत्त्वज्ञ देवदेव वदस्व मे ॥ ०३४ ॥

निखिलेन मया पृष्टं महादेव यथातथम्  ॥ ०३४  ॥

महेश्वर उवाच  ॥

हन्त तेऽहं प्रवक्ष्यामि मुनिधर्ममनुत्तमम् ।
यं कृत्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे  ॥ ०३५  ॥

फेनपानामृषीणां यो धर्मो धर्मविदां सदा ।
तं मे शृणु महाभागे धर्मज्ञे धर्ममादितः  ॥ ०३६  ॥

उञ्छन्ति सततं तस्मिन्ब्राह्मं फेनोत्करं शुभम् ।
अमृतं ब्रह्मणा पीतं मधुरं प्रसृतं दिवि  ॥ ०३७  ॥

एष तेषां विशुद्धानां फेनपानां तपोधने ।
धर्मचर्याकृतो मार्गो वालखिल्यगणे शृणु  ॥ ०३८  ॥

वालखिल्यास्तपःसिद्धा मुनयः सूर्यमण्डले ।
उञ्छमुञ्छन्ति धर्मज्ञाः शाकुनीं वृत्तिमास्थिताः  ॥ ०३९  ॥

मृगनिर्मोकवसनाश्चीरवल्कलवाससः ।
निर्द्वंद्वाः सत्पथं प्राप्ता वालखिल्यास्तपोधनाः  ॥ ०४०  ॥

अङ्गुष्ठपर्वमात्रास्ते स्वेष्वङ्गेषु व्यवस्थिताः ।
तपश्चरणमीहन्ते तेषां धर्मफलं महत्  ॥ ०४१  ॥

ते सुरैः समतां यान्ति सुरकार्यार्थसिद्धये ।
द्योतयन्तो दिशः सर्वास्तपसा दग्धकिल्बिषाः  ॥ ०४२  ॥

ये त्वन्ये शुद्धमनसो दयाधर्मपरायणाः ।
सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये  ॥ ०४३  ॥

पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि ।
संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिनस्तथा ॥ ०४४ ॥

सोमपानां च देवानामूष्मपाणां तथैव च ।
उञ्छन्ति ये समीपस्थाः स्वभावनियतेन्द्रियाः ॥ ०४५ ॥

तेषामग्निपरिष्यन्दः पितृदेवार्चनं तथा ।
यज्ञानां चापि पञ्चानां यजनं धर्म उच्यते ॥ ०४६ ॥

एष चक्रचरैर्देवि देवलोकचरैर्द्विजैः ।
ऋषिधर्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ॥ ०४७ ॥

सर्वेष्वेवर्षिधर्मेषु जेय आत्मा जितेन्द्रियः ।
कामक्रोधौ ततः पश्चाज्जेतव्याविति मे मतिः ॥ ०४८ ॥

अग्निहोत्रपरिस्पन्दो धर्मरात्रिसमासनम् ।
सोमयज्ञाभ्यनुज्ञानं पञ्चमी यज्ञदक्षिणा ॥ ०४९ ॥

नित्यं यज्ञक्रिया धर्मः पितृदेवार्चने रतिः ।
सर्वातिथ्यं च कर्तव्यमन्नेनोञ्छार्जितेन वै ॥ ०५० ॥

निवृत्तिरुपभोगस्य गोरसानां च वै रतिः ।
स्थण्डिले शयनं योगः शाकपर्णनिषेवणम् ॥ ०५१ ॥

फलमूलाशनं वायुरापः शैवलभक्षणम् ।
ऋषीणां नियमा ह्येते यैर्जयन्त्यजितां गतिम् ॥ ०५२ ॥

विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसञ्चारे काले विगतभैक्षके ॥ ०५३ ॥

अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः ।
सत्यधर्मरतिः क्षान्तो मुनिधर्मेण युज्यते ॥ ०५४ ॥

न स्तम्भी न च मानी यो न प्रमत्तो न विस्मितः ।
मित्रामित्रसमो मैत्रो यः स धर्मविदुत्तमः ॥ ०५५ ॥

---

# अध्याय १३०

उमोवाच ॥

देशेषु रमणीयेषु गिरीणां निर्झरेषु च ।
स्रवन्तीनां च कुञ्जेषु पर्वतोपवनेषु च ॥ ००१ ॥

देशेषु च विचित्रेषु फलवत्सु समाहिताः ।
मूलवत्सु च देशेषु वसन्ति नियतव्रताः ॥ ००२ ॥

तेषामपि विधिं पुण्यं श्रोतुमिच्छामि शङ्कर ।
वानप्रस्थेषु देवेश स्वशरीरोपजीविषु ॥ ००३ ॥

महेश्वर उवाच ॥

वानप्रस्थेषु यो धर्मस्तं मे शृणु समाहिता ।
श्रुत्वा चैकमना देवि धर्मबुद्धिपरा भव ॥ ००४ ॥

संसिद्धैर्नियतैः सद्भिर्वनवासमुपागतैः ।
वानप्रस्थैरिदं कर्म कर्तव्यं शृणु यादृशम् ॥ ००५ ॥

त्रिकालमभिषेकार्थः पितृदेवार्चनं क्रिया ।
अग्निहोत्रपरिस्पन्द इष्टिहोमविधिस्तथा ॥ ००६ ॥

नीवारग्रहणं चैव फलमूलनिषेवणम् ।
इङ्गुदैरण्डतैलानां स्नेहार्थं च निषेवणम् ॥ ००७ ॥

योगचर्याकृतैः सिद्धैः कामक्रोधविवर्जनम् ।
वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ॥ ००८ ॥

युक्तैर्योगवहैः सद्भिर्ग्रीष्मे पञ्चतपैस्तथा ।
मण्डूकयोगनियतैर्यथान्यायनिषेविभिः ॥ ००९ ॥

वीरासनगतैर्नित्यं स्थण्डिले शयनैस्तथा ।
शीतयोगोऽग्नियोगश्च चर्तव्यो धर्मबुद्धिभिः ॥ ०१० ॥

अब्भक्षैर्वायुभक्षैश्च शैवालोत्तरभोजनैः ।
अश्मकुट्टैस्तथा दान्तैः संप्रक्षालैस्तथापरैः ॥ ०११ ॥

चीरवल्कलसंवीतैर्मृगचर्मनिवासिभिः ।
कार्या यात्रा यथाकालं यथाधर्मं यथाविधि ॥ ०१२ ॥

वननित्यैर्वनचरैर्वनपैर्वनगोचरैः ।
वनं गुरुमिवासाद्य वस्तव्यं वनजीविभिः ॥ ०१३ ॥

तेषां होमक्रिया धर्मः पञ्चयज्ञनिषेवणम् ।
नागपञ्चमयज्ञस्य वेदोक्तस्यानुपालनम् ॥ ०१४ ॥

अष्टमीयज्ञपरता चातुर्मास्यनिषेवणम् ।
पौर्णमास्यां तु यो यज्ञो नित्ययज्ञस्तथैव च ॥ ०१५ ॥

विमुक्ता दारसंयोगैर्विमुक्ताः सर्वसङ्करैः ।

विमुक्ताः सर्वपापैश्च चरन्ति मुनयो वने ॥ ०१६ ॥

स्रुग्भाण्डपरमा नित्यं त्रेताग्निशरणाः सदा ।
सन्तः सत्पथनित्या ये ते यान्ति परमां गतिम् ॥ ०१७ ॥

ब्रह्मलोकं महापुण्यं सोमलोकं च शाश्वतम् ।
गच्छन्ति मुनयः सिद्धा ऋषिधर्मव्यपाश्रयात् ॥ ०१८ ॥

एष धर्मो मया देवि वानप्रस्थाश्रितः शुभः ।
विस्तरेणार्थसंपन्नो यथास्थूलमुदाहृतः ॥ ०१९ ॥

उमोवाच ॥

भगवन्देवदेवेश सर्वभूतनमस्कृत ।
यो धर्मो मुनिसंघस्य सिद्धिवादेषु तं वद ॥ ०२० ॥

सिद्धिवादेषु संसिद्धास्तथा वननिवासिनः ।
स्वैरिणो दारसंयुक्तास्तेषां धर्मः कथं स्मृतः ॥ ०२१ ॥

महेश्वर उवाच ॥

स्वैरिणस्तापसा देवि सर्वे दारविहारिणः ।
तेषां मौण्ड्यं कषायश्च वासरात्रिश्च कारणम् ॥ ०२२ ॥

त्रिकालमभिषेकश्च होत्रं त्वृषिकृतं महत् ।
समाधिः सत्पथस्थानं यथोदितनिषेवणम् ॥ ०२३ ॥

ये च ते पूर्वकथिता धर्मा वननिवासिनाम् ।
यदि सेवन्ति धर्मांस्तानाप्नुवन्ति तपःफलम् ॥ ०२४ ॥

ये च दंपतिधर्माणः स्वदारनियतेन्द्रियाः ।

चरन्ति विधिदृष्टं तद्दतुकालाभिगामिनः ॥ ०२५ ॥

तेषामृषिकृतो धर्मो धर्मिणामुपपद्यते ।
न कामकारात्कामोऽन्यः संसेव्यो धर्मदर्शिभिः ॥ ०२६ ॥

सर्वभूतेषु यः सम्यग्ददात्यभयदक्षिणाम् ।
हिंसारोषविमुक्तात्मा स वै धर्मेण युज्यते ॥ ०२७ ॥

सर्वभूतानुकम्पी यः सर्वभूतार्जवव्रतः ।
सर्वभूतात्मभूतश्च स वै धर्मेण युज्यते ॥ ०२८ ॥

सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे एते समे स्यातामार्जवं वा विशिष्यते ॥ ०२९ ॥

आर्जवं धर्म इत्याहुरधर्मो जिह्म उच्यते ।
आर्जवेनेह संयुक्तो नरो धर्मेण युज्यते ॥ ०३० ॥

आर्जवो भुवने नित्यं वसत्यमरसंनिधौ ।
तस्मादार्जवनित्यः स्याद्य इच्छेद्धर्ममात्मनः ॥ ०३१ ॥

क्षान्तो दान्तो जितक्रोधो धर्मभूतोऽविहिंसकः ।
धर्मे रतमना नित्यं नरो धर्मेण युज्यते ॥ ०३२ ॥

व्यपेततन्द्रो धर्मात्मा शक्त्या सत्पथमाश्रितः ।
चारित्रपरमो बुद्धो ब्रह्मभूयाय कल्पते ॥ ०३३ ॥

उमोवाच ॥

आश्रमाभिरता देव तापसा ये तपोधनाः ।
दीप्तिमन्तः कया चैव चर्ययाथ भवन्ति ते ॥ ०३४ ॥

राजानो राजपुत्राश्च निर्धना वा महाधनाः ।
कर्मणा केन भगवन्प्राप्नुवन्ति महाफलम् ॥ ०३५ ॥

नित्यं स्थानमुपागम्य दिव्यचन्दनरूषिताः ।
केन वा कर्मणा देव भवन्ति वनगोचराः ॥ ०३६ ॥

एतं मे संशयं देव तपश्चर्यागतं शुभम् ।
शंस सर्वमशेषेण त्र्यक्ष त्रिपुरनाशन ॥ ०३७ ॥

महेश्वर उवाच ॥

उपवासव्रतैर्दान्ता अहिंस्राः सत्यवादिनः ।
संसिद्धाः प्रेत्य गन्धर्वैः सह मोदन्त्यनामयाः ॥ ०३८ ॥

मण्डूकयोगशयनो यथास्थानं यथाविधि ।
दीक्षां चरति धर्मात्मा स नागैः सह मोदते ॥ ०३९ ॥

शष्पं मृगमुखोत्सृष्टं यो मृगैः सह सेवते ।
दीक्षितो वै मुदा युक्तः स गच्छत्यमरावतीम् ॥ ०४० ॥

शैवालं शीर्णपर्णं वा तद्व्रतो यो निषेवते ।
शीतयोगवहो नित्यं स गच्छेत्परमां गतिम् ॥ ०४१ ॥

वायुभक्षोऽम्बुभक्षो वा फलमूलाशनोऽपि वा ।
यक्षेष्वैश्वर्यमाधाय मोदतेऽप्सरसां गणैः ॥ ०४२ ॥

अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्मणा ।
चीर्त्वा द्वादश वर्षाणि राजा भवति पार्थिवः ॥ ०४३ ॥

आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
मरुं संसाध्य यत्नेन राजा भवति पार्थिवः ॥ ०४४ ॥

स्थण्डिले शुद्धमाकाशं परिगृह्य समन्ततः ।
प्रविश्य च मुदा युक्तो दीक्षां द्वादशवार्षिकीम्  ॥ ०४५  ॥

स्थण्डिलस्य फलान्याहुर्यानानि शयनानि च ।
गृहाणि च महार्हाणि चन्द्रशुभ्राणि भामिनि  ॥ ०४६  ॥

आत्मानमुपजीवन्यो नियतो नियताशनः ।
देहं वानशने त्यक्त्वा स स्वर्गं समुपाश्नुते  ॥ ०४७  ॥

आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ।
त्यक्त्वा महार्णवे देहं वारुणं लोकमश्नुते  ॥ ०४८  ॥

आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ।
अश्मना चरणौ भित्त्वा गुह्यकेषु स मोदते  ॥ ०४९  ॥

साधयित्वात्मनात्मानं निर्द्वंद्वो निष्परिग्रहः ।
चीर्त्वा द्वादश वर्षाणि दीक्षामेकां मनोगताम्  ॥ ०५०  ॥

स्वर्गलोकमवाप्नोति देवैश्च सह मोदते  ॥ ०५०  ॥

आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ।
हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते  ॥ ०५१  ॥

यस्तु देवि यथान्यायं दीक्षितो नियतो द्विजः ।
आत्मन्यात्मानमाधाय निर्द्वंद्वो निष्परिग्रहः  ॥ ०५२  ॥

चीर्त्वा द्वादश वर्षाणि दीक्षामेकां मनोगताम् ।
अरणीसहितं स्कन्धे बद्ध्वा गच्छत्यनावृतः  ॥ ०५३  ॥

वीराध्वानमना नित्यं वीरासनरतस्तथा ।

वीरस्थायी च सततं स वीरगतिमाप्नुयात्  ॥ ०५४  ॥

स शक्रलोकगो नित्यं सर्वकामपुरस्कृतः ।
दिव्यपुष्पसमाकीर्णो दिव्यचन्दनभूषितः  ॥ ०५५  ॥

सुखं वसति धर्मात्मा दिवि देवगणैः सह  ॥ ०५५  ॥

वीरलोकगतो वीरो वीरयोगवहः सदा ।
सत्त्वस्थः सर्वमुत्सृज्य दीक्षितो नियतः शुचिः  ॥ ०५६  ॥

वीराध्वानं प्रपद्येद्यस्तस्य लोकाः सनातनाः  ॥ ०५६  ॥

कामगेन विमानेन स वै चरति च्छन्दतः ।
शक्रलोकगतः श्रीमान्मोदते च निरामयः  ॥ ०५७  ॥

---

# अध्याय १३१

उमोवाच  ॥

भगवन्भगनेत्रघ्न पूष्णो दशनपातन ।
दक्षक्रतुहर त्र्यक्ष संशयो मे महानयम्  ॥ ००१  ॥

चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयंभुवा ।
केन कर्मविपाकेन वैश्यो गच्छति शूद्रताम्  ॥ ००२  ॥

वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत् ।
प्रतिलोमः कथं देव शक्यो धर्मो निषेवितुम्  ॥ ००३  ॥

केन वा कर्मणा विप्रः शूद्रयोनौ प्रजायते ।
क्षत्रियः शूद्रतामेति केन वा कर्मणा विभो ॥ ००४ ॥

एतं मे संशयं देव वद भूतपतेऽनघ ।
त्रयो वर्णाः प्रकृत्येह कथं ब्राह्मण्यमाप्नुयुः ॥ ००५ ॥

महेश्वर उवाच ॥

ब्राह्मण्यं देवि दुष्प्रापं निसर्गाद्ब्राह्मणः शुभे ।
क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः ॥ ००६ ॥

कर्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति वै द्विजः ।
ज्येष्ठं वर्णमनुप्राप्य तस्माद्रक्षेत वै द्विजः ॥ ००७ ॥

स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति ।
क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयाय गच्छति ॥ ००८ ॥

यस्तु विप्रत्वमुत्सृज्य क्षात्रं धर्मं निषेवते ।
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते ॥ ००९ ॥

वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः ।
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा ॥ ०१० ॥

स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात् ।
स्वधर्मात्प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुते ॥ ०११ ॥

तत्रासौ निरयं प्राप्तो वर्णभ्रष्टो बहिष्कृतः ।
ब्रह्मलोकपरिभ्रष्टः शूद्रः समुपजायते ॥ ०१२ ॥

क्षत्रियो वा महाभागे वैश्यो वा धर्मचारिणि ।
स्वानि कर्माण्यपाहाय शूद्रकर्माणि सेवते ॥ ०१३ ॥

स्वस्थानात्स परिभ्रष्टो वर्णसङ्करतां गतः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः ॥ ०१४ ॥

यस्तु शुद्धः स्वधर्मेण ज्ञानविज्ञानवाञ्शुचिः ।
धर्मज्ञो धर्मनिरतः स धर्मफलमश्नुते ॥ ०१५ ॥

इदं चैवापरं देवि ब्रह्मणा समुदीरितम् ।
अध्यात्मं नैष्ठिकं सद्भिर्धर्मकामैर्निषेव्यते ॥ ०१६ ॥

उग्रान्नं गर्हितं देवि गणान्नं श्राद्धसूतकम् ।
घुष्टान्नं नैव भोक्तव्यं शूद्रान्नं नैव कर्हिचित् ॥ ०१७ ॥

शूद्रान्नं गर्हितं देवि देवदेवैर्महात्मभिः ।
पितामहमुखोत्सृष्टं प्रमाणमिति मे मतिः ॥ ०१८ ॥

शूद्रान्नेनावशेषेण जठरे यो म्रियेत वै ।
आहिताग्निस्तथा यज्वा स शूद्रगतिभाग्भवेत् ॥ ०१९ ॥

तेन शूद्रान्नशेषेण ब्रह्मस्थानादपाकृतः ।
ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा ॥ ०२० ॥

यस्यान्नेनावशेषेण जठरे यो म्रियेत वै ।
तां तां योनिं व्रजेद्विप्रो यस्यान्नमुपजीवति ॥ ०२१ ॥

ब्राह्मणत्वं शुभं प्राप्य दुर्लभं योऽवमन्यते ।
अभोज्यान्नानि चाश्नाति स द्विजत्वात्पतेत वै ॥ ०२२ ॥

सुरापो ब्रह्महा क्षुद्रश्चौरो भग्नव्रतोऽशुचिः ।
स्वाध्यायवर्जितः पापो लुब्धो नैकृतिकः शठः ॥ ०२३ ॥

अव्रती वृषलीभर्ता कुण्डाशी सोमविक्रयी ।
निहीनसेवी विप्रो हि पतति ब्रह्मयोनितः ॥ ०२४ ॥

गुरुतल्पी गुरुद्वेषी गुरुकुत्सारतिश्च यः ।
ब्रह्मद्विड्वापि पतति ब्राह्मणो ब्रह्मयोनितः ॥ ०२५ ॥

एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा ।
शूद्रो ब्राह्मणतां गच्छेद्वैश्यः क्षत्रियतां व्रजेत् ॥ ०२६ ॥

शूद्रकर्माणि सर्वाणि यथान्यायं यथाविधि ।
शुश्रूषां परिचर्यां च ज्येष्ठे वर्णे प्रयत्नतः ॥ ०२७ ॥

कुर्यादविमनाः शूद्रः सततं सत्पथे स्थितः ॥ ०२७ ॥

दैवतद्विजसत्कर्ता सर्वातिथ्यकृतव्रतः ।
ऋतुकालाभिगामी च नियतो नियताशनः ॥ ०२८ ॥

चौक्षश्चौक्षजनान्वेषी शेषान्नकृतभोजनः ।
वृथामांसान्यभुञ्जानः शूद्रो वैश्यत्वमृच्छति ॥ ०२९ ॥

ऋतवागनहंवादी निर्द्वंद्वः शमकोविदः ।
यजते नित्ययज्ञैश्च स्वाध्यायपरमः शुचिः ॥ ०३० ॥

दान्तो ब्राह्मणसत्कर्ता सर्ववर्णबुभूषकः ।
गृहस्थव्रतमातिष्ठन्द्विकालकृतभोजनः ॥ ०३१ ॥

शेषाशी विजिताहारो निष्कामो निरहंवदः ।
अग्निहोत्रमुपासंश्च जुह्वानश्च यथाविधि ॥ ०३२ ॥

सर्वातिथ्यमुपातिष्ठञ्शेषान्नकृतभोजनः ।
त्रेताग्निमन्त्रविहितो वैश्यो भवति वै यदि ॥ ०३३ ॥

स वैश्यः क्षत्रियकुले शुचौ महति जायते ॥ ०३३ ॥

स वैश्यः क्षत्रियो जातो जन्मप्रभृति संस्कृतः ।
उपनीतो व्रतपरो द्विजो भवति सत्कृतः ॥ ०३४ ॥

ददाति यजते यज्ञैः संस्कृतैराप्तदक्षिणैः ।
अधीते स्वर्गमन्विच्छंस्त्रेताग्निशरणः सदा ॥ ०३५ ॥

आर्तहस्तप्रदो नित्यं प्रजा धर्मेण पालयन् ।
सत्यः सत्यानि कुरुते नित्यं यः सुखदर्शनः ॥ ०३६ ॥

धर्मदण्डो न निर्दण्डो धर्मकार्यानुशासकः ।
यन्त्रितः कार्यकरणे षड्भागकृतलक्षणः ॥ ०३७ ॥

ग्राम्यधर्मान्न सेवेत स्वच्छन्देनार्थकोविदः ।
ऋतुकाले तु धर्मात्मा पत्नीं सेवेत नित्यदा ॥ ०३८ ॥

सर्वोपवासी नियतः स्वाध्यायपरमः शुचिः ।
बर्हिष्कान्तरिते नित्यं शयानोऽग्निगृहे सदा ॥ ०३९ ॥

सर्वातिथ्यं त्रिवर्गस्य कुर्वाणः सुमनाः सदा ।
शूद्राणां चान्नकामानां नित्यं सिद्धमिति ब्रुवन् ॥ ०४० ॥

स्वार्थाद्वा यदि वा कामान्न किञ्चिदुपलक्षयेत् ।
पितृदेवातिथिकृते साधनं कुरुते च यः ॥ ०४१ ॥

स्ववेश्मनि यथान्यायमुपास्ते भैक्षमेव च ।
त्रिकालमग्निहोत्रं च जुह्वानो वै यथाविधि ॥ ०४२ ॥

गोब्राह्मणहितार्थाय रणे चाभिमुखो हतः ।

त्रेताग्निमन्त्रपूतं वा समाविश्य द्विजो भवेत् ॥ ०४३ ॥

ज्ञानविज्ञानसंपन्नः संस्कृतो वेदपारगः ।
विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा ॥ ०४४ ॥

एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः ।
शूद्रोऽप्यागमसंपन्नो द्विजो भवति संस्कृतः ॥ ०४५ ॥

ब्राह्मणो वाप्यसद्वृत्तः सर्वसङ्करभोजनः ।
ब्राह्मण्यं पुण्यमुत्सृज्य शूद्रो भवति तादृशः ॥ ०४६ ॥

कर्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः ।
शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माब्रवीत्स्वयम् ॥ ०४७ ॥

स्वभावकर्म च शुभं यत्र शूद्रेऽपि तिष्ठति ।
विशुद्धः स द्विजातिर्वै विज्ञेय इति मे मतिः ॥ ०४८ ॥

न योनिर्नापि संस्कारो न श्रुतं न च संनतिः ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥ ०४९ ॥

सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते ।
वृत्ते स्थितश्च सुश्रोणि ब्राह्मणत्वं निगच्छति ॥ ०५० ॥

ब्राह्मः स्वभावः कल्याणि समः सर्वत्र मे मतिः ।
निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति स द्विजः ॥ ०५१ ॥

एते योनिफला देवि स्थानभागनिदर्शकाः ।
स्वयं च वरदेनोक्ता ब्रह्मणा सृजता प्रजाः ॥ ०५२ ॥

ब्राह्मणो हि महत्क्षेत्रं लोके चरति पादवत् ।
यत्तत्र बीजं वपति सा कृषिः पारलौकिकी ॥ ०५३ ॥

मिताशिना सदा भाव्यं सत्पथालम्बिना सदा ।
ब्राह्ममार्गमतिक्रम्य वर्तितव्यं बुभूषता ॥ ०५४ ॥

संहिताध्यायिना भाव्यं गृहे वै गृहमेधिना ।
नित्यं स्वाध्याययुक्तेन दानाध्ययनजीविना ॥ ०५५ ॥

एवंभूतो हि यो विप्रः सततं सत्पथे स्थितः ।
आहिताग्निरधीयानो ब्रह्मभूयाय कल्पते ॥ ०५६ ॥

ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मभिः ।
योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते ॥ ०५७ ॥

एतत्ते सर्वमाख्यातं यथा शूद्रो भवेद्द्विजः ।
ब्राह्मणो वा च्युतो धर्माद्यथा शूद्रत्वमाप्नुते ॥ ०५८ ॥

---

# अध्याय १३२

उमोवाच ॥

भगवन्सर्वभूतेश सुरासुरनमस्कृत ।
धर्माधर्मे नृणां देव ब्रूहि मे संशयं विभो ॥ ००१ ॥

कर्मणा मनसा वाचा त्रिविधं हि नरः सदा ।
बध्यते बन्धनैः पाशैर्मुच्यतेऽप्यथ वा पुनः ॥ ००२ ॥

केन शीलेन वा देव कर्मणा कीदृशेन वा ।
समाचारैर्गुणैर्वाक्यैः स्वर्गं यान्तीह मानवाः ॥ ००३ ॥

महेश्वर उवाच ॥

देवि धर्मार्थतत्त्वज्ञे सत्यनित्ये दमे रते ।
सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्धनः ॥ ००४ ॥

सत्यधर्मरताः सन्तः सर्वलिप्साविवर्जिताः ।
नाधर्मेण न धर्मेण बध्यन्ते छिन्नसंशयाः ॥ ००५ ॥

प्रलयोत्पत्तितत्त्वज्ञाः सर्वज्ञाः समदर्शिनः ।
वीतरागा विमुच्यन्ते पुरुषाः सर्वबन्धनैः ॥ ००६ ॥

कर्मणा मनसा वाचा ये न हिंसन्ति किञ्चन ।
ये न सज्जन्ति कस्मिंश्चिद्बध्यन्ते ते न कर्मभिः ॥ ००७ ॥

प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः ।
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ॥ ००८ ॥

सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु ।
त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ॥ ००९ ॥

परस्वे निर्ममा नित्यं परदारविवर्जकाः ।
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ ०१० ॥

मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये ।
परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः ॥ ०११ ॥

स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च ।
स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः ॥ ०१२ ॥

स्वदारनिरता ये च ऋतुकालाभिगामिनः ।

अग्राम्यसुखभोगाश्च ते नराः स्वर्गगामिनः ॥ ०१३ ॥

परदारेषु ये नित्यं चारित्रावृतलोचनाः ।
यतेन्द्रियाः शीलपरास्ते नराः स्वर्गगामिनः ॥ ०१४ ॥

एष देवकृतो मार्गः सेवितव्यः सदा नरैः ।
अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः ॥ ०१५ ॥

दानधर्मतपोयुक्तः शीलशौचदयात्मकः ।
वृत्त्यर्थं धर्महेतोर्वा सेवितव्यः सदा नरैः ॥ ०१६ ॥

स्वर्गवासमभीप्सद्भिर्न सेव्यस्त्वत उत्तरः ॥ ०१६ ॥

उमोवाच ॥

वाचाथ बध्यते येन मुच्यतेऽप्यथ वा पुनः ।
तानि कर्माणि मे देव वद भूतपतेऽनघ ॥ ०१७ ॥

महेश्वर उवाच ॥

आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा ।
ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ॥ ०१८ ॥

वृत्त्यर्थं धर्महेतोर्वा कामकारात्तथैव च ।
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः ॥ ०१९ ॥

श्लक्ष्णां वाणीं निराबाधां मधुरां पापवर्जिताम् ।
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥ ०२० ॥

कटुकां ये न भाषन्ते परुषां निष्ठुरां गिरम् ।
अपैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः ॥ ०२१ ॥

पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम् ।
ऋतां मैत्रीं प्रभाषन्ते ते नराः स्वर्गगामिनः ॥ ०२२ ॥

वर्जयन्ति सदा सूच्यं परद्रोहं च मानवाः ।
सर्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः ॥ ०२३ ॥

शठप्रलापाद्विरता विरुद्धपरिवर्जकाः ।
सौम्यप्रलापिनो नित्यं ते नराः स्वर्गगामिनः ॥ ०२४ ॥

न कोपाद्व्याहरन्ते ये वाचं हृदयदारणीम् ।
सान्त्वं वदन्ति क्रुद्धापि ते नराः स्वर्गगामिनः ॥ ०२५ ॥

एष वाणीकृतो देवि धर्मः सेव्यः सदा नरैः ।
शुभः सत्यगुणो नित्यं वर्जनीया मृषा बुधैः ॥ ०२६ ॥

उमोवाच ॥

मनसा बध्यते येन कर्मणा पुरुषः सदा ।
तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक् ॥ ०२७ ॥

महेश्वर उवाच ॥

मानसेनेह धर्मेण संयुक्ताः पुरुषाः सदा ।
स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्तयतः श‍ृणु ॥ ०२८ ॥

दुष्प्रणीतेन मनसा दुष्प्रणीततराकृतिः ।
बध्यते मानवो येन श‍ृणु चान्यच्छुभानने ॥ ०२९ ॥

अरण्ये विजने न्यस्तं परस्वं वीक्ष्य ये नराः ।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ०३० ॥

ग्रामे गृहे वा यद्द्रव्यं पारक्यं विजने स्थितम् ।
नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः ॥ ०३१ ॥

तथैव परदारान्ये कामवृत्तान्रहोगतान् ।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ०३२ ॥

शत्रुं मित्रं च ये नित्यं तुल्येन मनसा नराः ।
भजन्ति मैत्राः सङ्गम्य ते नराः स्वर्गगामिनः ॥ ०३३ ॥

श्रुतवन्तो दयावन्तः शुचयः सत्यसङ्गराः ।
स्वैरर्थैः परिसंतुष्टास्ते नराः स्वर्गगामिनः ॥ ०३४ ॥

अवैरा ये त्वनायासा मैत्रचित्तपराः सदा ।
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ॥ ०३५ ॥

श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः ।
धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः ॥ ०३६ ॥

शुभानामशुभानां च कर्मणां फलसञ्चये ।
विपाकज्ञाश्च ये देवि ते नराः स्वर्गगामिनः ॥ ०३७ ॥

न्यायोपेता गुणोपेता देवद्विजपराः सदा ।
समतां समनुप्राप्तास्ते नराः स्वर्गगामिनः ॥ ०३८ ॥

शुभैः कर्मफलैर्देवि मयैते परिकीर्तिताः ।
स्वर्गमार्गोपगा भूयः किमन्यच्छ्रोतुमिच्छसि ॥ ०३९ ॥

उमोवाच ॥

महान्मे संशयः कश्चिन्मर्त्यान्प्रति महेश्वर ।

तस्मात्तं नैपुणेनाद्य ममाख्यातुं त्वमर्हसि ॥ ०४० ॥

केनायुर्लभते दीर्घं कर्मणा पुरुषः प्रभो ।
तपसा वापि देवेश केनायुर्लभते महत् ॥ ०४१ ॥

क्षीणायुः केन भवति कर्मणा भुवि मानवः ।
विपाकं कर्मणां देव वक्तुमर्हस्यनिन्दित ॥ ०४२ ॥

अपरे च महाभोगा मन्दभोगास्तथापरे ।
अकुलीनास्तथा चान्ये कुलीनाश्च तथापरे ॥ ०४३ ॥

दुर्दर्शाः केचिदाभान्ति नराः काष्ठमया इव ।
प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः ॥ ०४४ ॥

दुष्प्रज्ञाः केचिदाभान्ति केचिदाभान्ति पण्डिताः ।
महाप्रज्ञास्तथैवान्ये ज्ञानविज्ञानदर्शिनः ॥ ०४५ ॥

अल्पाबाधास्तथा केचिन्महाबाधास्तथापरे ।
दृश्यन्ते पुरुषा देव तन्मे शंसितुमर्हसि ॥ ०४६ ॥

महेश्वर उवाच ॥

हन्त तेऽहं प्रवक्ष्यामि देवि कर्मफलोदयम् ।
मर्त्यलोके नराः सर्वे येन स्वं भुञ्जते फलम् ॥ ०४७ ॥

प्राणातिपाती यो रौद्रो दण्डहस्तोद्यतस्तथा ।
नित्यमुद्यतदण्डश्च हन्ति भूतगणान्नरः ॥ ०४८ ॥

निर्दयः सर्वभूतानां नित्यमुद्वेगकारकः ।
अपि कीटपिपीलानामशरण्यः सुनिर्घृणः ॥ ०४९ ॥

एवंभूतो नरो देवि निरयं प्रतिपद्यते ।
विपरीतस्तु धर्मात्मा रूपवानभिजायते ॥ ०५० ॥

निरयं याति हिंसात्मा याति स्वर्गमहिंसकः ।
यातनां निरये रौद्रां स कृच्छ्रां लभते नरः ॥ ०५१ ॥

अथ चेन्निरयात्तस्मात्समुत्तरति कर्हिचित् ।
मानुष्यं लभते चापि हीनायुस्तत्र जायते ॥ ०५२ ॥

पापेन कर्मणा देवि बद्धो हिंसारतिर्नरः ।
अप्रियः सर्वभूतानां हीनायुरुपजायते ॥ ०५३ ॥

यस्तु शुक्लाभिजातीयः प्राणिघातविवर्जकः ।
निक्षिप्तदण्डो निर्दण्डो न हिनस्ति कदाचन ॥ ०५४ ॥

न घातयति नो हन्ति घ्नन्तं नैवानुमोदते ।
सर्वभूतेषु सस्नेहो यथात्मनि तथापरे ॥ ०५५ ॥

ईदृशः पुरुषोत्कर्षो देवि देवत्वमश्नुते ।
उपपन्नान्सुखान्भोगानुपाश्नाति मुदा युतः ॥ ०५६ ॥

अथ चेन्मानुषे लोके कदाचिदुपपद्यते ।
तत्र दीर्घायुरुत्पन्नः स नरः सुखमेधते ॥ ०५७ ॥

एवं दीर्घायुषां मार्गः सुवृत्तानां सुकर्मणाम् ।
प्राणिहिंसाविमोक्षेण ब्रह्मणा समुदीरितः ॥ ०५८ ॥

# अध्याय १३३

उमोवाच ॥

किंशीलाः किंसमाचाराः पुरुषाः कैश्च कर्मभिः ।
स्वर्गं समभिपद्यन्ते संप्रदानेन केन वा ॥ ००१ ॥

महेश्वर उवाच ॥

दाता ब्राह्मणसत्कर्ता दीनान्धकृपणादिषु ।
भक्ष्यभोज्यान्नपानानां वाससां च प्रदायकः ॥ ००२ ॥

प्रतिश्रयान्सभाः कूपान्प्रपाः पुष्करिणीस्तथा ।
नैत्यकानि च सर्वाणि किमिच्छकमतीव च ॥ ००३ ॥

आसनं शयनं यानं धनं रत्नं गृहांस्तथा ।
सस्यजातानि सर्वाणि गाः क्षेत्राण्यथ योषितः ॥ ००४ ॥

सुप्रतीतमना नित्यं यः प्रयच्छति मानवः ।
एवंभूतो मृतो देवि देवलोकेऽभिजायते ॥ ००५ ॥

तत्रोष्य सुचिरं कालं भुक्त्वा भोगाननुत्तमान् ।
सहाप्सरोभिर्मुदितो रमित्वा नन्दनादिषु ॥ ००६ ॥

तस्मात्स्वर्गाच्च्युतो लोकान्मानुषेषूपजायते ।
महाभोगे कुले देवि धनधान्यसमाचिते ॥ ००७ ॥

तत्र कामगुणैः सर्वैः समुपेतो मुदा युतः ।
महाभोगो महाकोशो धनी भवति मानवः ॥ ००८ ॥

एते देवि महाभोगाः प्राणिनो दानशीलिनः ।

ब्रह्मणा वै पुरा प्रोक्ताः सर्वस्य प्रियदर्शनाः ॥ ००९ ॥

अपरे मानवा देवि प्रदानकृपणा द्विजैः ।
याचिता न प्रयच्छन्ति विद्यमानेऽप्यबुद्धयः ॥ ०१० ॥

दीनान्धकृपणान्दृष्ट्वा भिक्षुकानतिथीनपि ।
याच्यमाना निवर्तन्ते जिह्वालोभसमन्विताः ॥ ०११ ॥

न धनानि न वासांसि न भोगान्न च काञ्चनम् ।
न गावो नान्नविकृतिं प्रयच्छन्ति कदाचन ॥ ०१२ ॥

अप्रवृत्तास्तु ये लुब्धा नास्तिका दानवर्जिताः ।
एवंभूता नरा देवि निरयं यान्त्यबुद्धयः ॥ ०१३ ॥

ते चेन्मनुष्यतां यान्ति यदा कालस्य पर्ययात् ।
धनरिक्ते कुले जन्म लभन्ते स्वल्पबुद्धयः ॥ ०१४ ॥

क्षुत्पिपासापरीताश्च सर्वभोगबहिष्कृताः ।
निराशाः सर्वभोगेभ्यो जीवन्त्यधमजीविकाम् ॥ ०१५ ॥

अल्पभोगकुले जाता अल्पभोगरता नराः ।
अनेन कर्मणा देवि भवन्त्यधनिनो नराः ॥ ०१६ ॥

अपरे स्तम्भिनो नित्यं मानिनः पापतो रताः ।
आसनार्हस्य ये पीठं न प्रयच्छन्त्यचेतसः ॥ ०१७ ॥

मार्गार्हस्य च ये मार्गं न यच्छन्त्यल्पबुद्धयः ।
पाद्यार्हस्य च ये पाद्यं न ददत्यल्पबुद्धयः ॥ ०१८ ॥

अर्घार्हान्न च सत्कारैरर्चयन्ति यथाविधि ।
अर्घ्यमाचमनीयं वा न यच्छन्त्यल्पबुद्धयः ॥ ०१९ ॥

गुरुं चाभिगतं प्रेम्णा गुरुवन्न बुभूषते ।
अभिमानप्रवृत्तेन लोभेन समवस्थिताः ॥ ०२० ॥

संमान्यांश्चावमन्यन्ते वृद्धान्परिभवन्ति च ।
एवंविधा नरा देवि सर्वे निरयगामिनः ॥ ०२१ ॥

ते वै यदि नरास्तस्मान्निरयादुत्तरन्ति वै ।
वर्षपूगैस्ततो जन्म लभन्ते कुत्सिते कुले ॥ ०२२ ॥

श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम् ।
कुलेषु तेषु जायन्ते गुरुवृद्धापचायिनः ॥ ०२३ ॥

न स्तम्भी न च मानी यो देवताद्विजपूजकः ।
लोकपूज्यो नमस्कर्ता प्रश्रितो मधुरं वदन् ॥ ०२४ ॥

सर्ववर्णप्रियकरः सर्वभूतहितः सदा ।
अद्वेषी सुमुखः श्लक्ष्णः स्निग्धवाणीप्रदः सदा ॥ ०२५ ॥

स्वागतेनैव सर्वेषां भूतानामविहिंसकः ।
यथार्हसत्क्रियापूर्वमर्चयन्नुपतिष्ठति ॥ ०२६ ॥

मार्गार्हाय ददन्मार्गं गुरुं गुरुवदर्चयन् ।
अतिथिप्रग्रहरतस्तथाभ्यागतपूजकः ॥ ०२७ ॥

एवंभूतो नरो देवि स्वर्गतिं प्रतिपद्यते ।
ततो मानुषतां प्राप्य विशिष्टकुलजो भवेत् ॥ ०२८ ॥

तत्रासौ विपुलैर्भोगैः सर्वरत्नसमायुतः ।
यथार्हदाता चार्हेषु धर्मचर्यापरो भवेत् ॥ ०२९ ॥

संमतः सर्वभूतानां सर्वलोकनमस्कृतः ।
स्वकर्मफलमाप्नोति स्वयमेव नरः सदा ॥ ०३० ॥

उदात्तकुलजातीय उदात्ताभिजनः सदा ।
एष धर्मो मया प्रोक्तो विधात्रा स्वयमीरितः ॥ ०३१ ॥

यस्तु रौद्रसमाचारः सर्वसत्त्वभयङ्करः ।
हस्ताभ्यां यदि वा पद्भ्यां रज्ज्वा दण्डेन वा पुनः ॥ ०३२ ॥

लोष्टैः स्तम्भैरुपायैर्वा जन्तून्बाधति शोभने ।
हिंसार्थं निकृतिप्रज्ञः प्रोद्वेजयति चैव ह ॥ ०३३ ॥

उपक्रामति जन्तूंश्च उद्वेगजननः सदा ।
एवंशीलसमाचारो निरयं प्रतिपद्यते ॥ ०३४ ॥

स चेन्मानुषतां गच्छेद्यदि कालस्य पर्ययात् ।
बह्वाबाधपरिक्लिष्टे सोऽधमे जायते कुले ॥ ०३५ ॥

लोकद्वेष्योऽधमः पुंसां स्वयं कर्मकृतैः फलैः ।
एष देवि मनुष्येषु बोद्धव्यो ज्ञातिबन्धुषु ॥ ०३६ ॥

अपरः सर्वभूतानि दयावाननुपश्यति ।
मैत्रदृष्टिः पितृसमो निर्वैरो नियतेन्द्रियः ॥ ०३७ ॥

नोद्वेजयति भूतानि न विहिंसयते तथा ।
हस्तपादैः सुनियतैर्विश्वास्यः सर्वजन्तुषु ॥ ०३८ ॥

न रज्ज्वा न च दण्डेन न लोष्टैर्नायुधेन च ।
उद्वेजयति भूतानि श्लक्ष्णकर्मा दयापरः ॥ ०३९ ॥

एवंशीलसमाचारः स्वर्गे समुपजायते ।

तत्रासौ भवने दिव्ये मुदा वसति देववत्  ॥ ०४०  ॥

स चेत्कर्मक्षयान्मर्त्यो मनुष्येषूपजायते ।
अल्पाबाधो निरीतीकः स जातः सुखमेधते  ॥ ०४१  ॥

सुखभागी निरायासो निरुद्वेगः सदा नरः ।
एष देवि सतां मार्गो बाधा यत्र न विद्यते  ॥ ०४२  ॥

उमोवाच  ॥

इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः ।
ज्ञानविज्ञानसंपन्नाः प्रज्ञावन्तोऽर्थकोविदाः  ॥ ०४३  ॥

दुष्प्रज्ञाश्चापरे देव ज्ञानविज्ञानवर्जिताः  ॥ ०४३  ॥

केन कर्मविपाकेन प्रज्ञावान्पुरुषो भवेत् ।
अल्पप्रज्ञो विरूपाक्ष कथं भवति मानवः  ॥ ०४४  ॥

एतं मे संशयं छिन्धि सर्वधर्मविदां वर  ॥ ०४४  ॥

जात्यन्धाश्चापरे देव रोगार्ताश्चापरे तथा ।
नराः क्लीबाश्च दृश्यन्ते कारणं ब्रूहि तत्र वै  ॥ ०४५  ॥

महेश्वर उवाच  ॥

ब्राह्मणान्वेदविदुषः सिद्धान्धर्मविदस्तथा ।
परिपृच्छन्त्यहरहः कुशलाकुशलं तथा  ॥ ०४६  ॥

वर्जयन्त्यशुभं कर्म सेवमानाः शुभं तथा ।
लभन्ते स्वर्गतिं नित्यमिह लोके सुखं तथा  ॥ ०४७  ॥

स चेन्मानुषतां याति मेधावी तत्र जायते ।
श्रुतं प्रज्ञानुगं चास्य कल्याणमुपजायते ॥ ०४८ ॥

परदारेषु ये मूढाश्चक्षुर्दुष्टं प्रयुञ्जते ।
तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति ह ॥ ०४९ ॥

मनसा तु प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियम् ।
रोगार्तास्ते भवन्तीह नरा दुष्कृतकर्मिणः ॥ ०५० ॥

ये तु मूढा दुराचारा वियोनौ मैथुने रताः ।
पुरुषेषु सुदुष्प्रज्ञाः क्लीबत्वमुपयान्ति ते ॥ ०५१ ॥

पशूंश्च ये बन्धयन्ति ये चैव गुरुतल्पगाः ।
प्रकीर्णमैथुना ये च क्लीबा जायन्ति ते नराः ॥ ०५२ ॥

उमोवाच ॥

सावद्यं किं नु वै कर्म निरवद्यं तथैव च ।
श्रेयः कुर्वन्नवाप्नोति मानवो देवसत्तम ॥ ०५३ ॥

महेश्वर उवाच ॥

श्रेयांसं मार्गमातिष्ठन्सदा यः पृच्छते द्विजान् ।
धर्मान्वेषी गुणाकाङ्क्षी स स्वर्गं समुपाश्नुते ॥ ०५४ ॥

यदि मानुषतां देवि कदाचित्स निगच्छति ।
मेधावी धारणायुक्तः प्राज्ञस्तत्राभिजायते ॥ ०५५ ॥

एष देवि सतां धर्मो मन्तव्यो भूतिकारकः ।
नृणां हितार्थाय तव मया वै समुदाहृतः ॥ ०५६ ॥

उमोवाच ॥

अपरे स्वल्पविज्ञाना धर्मविद्वेषिणो नराः ।
ब्राह्मणान्वेदविदुषो नेच्छन्ति परिसर्पितुम् ॥ ०५७ ॥

व्रतवन्तो नराः केचिच्छ्रद्धादमपरायणाः ।
अव्रता भ्रष्टनियमास्तथान्ये राक्षसोपमाः ॥ ०५८ ॥

यज्वानश्च तथैवान्ये निर्होमाश्च तथापरे ।
केन कर्मविपाकेन भवन्तीह वदस्व मे ॥ ०५९ ॥

महेश्वर उवाच ॥

आगमाल्लोकधर्माणां मर्यादाः पूर्वनिर्मिताः ।
प्रामाण्येनानुवर्तन्ते दृश्यन्ते हि दृढव्रताः ॥ ०६० ॥

अधर्मं धर्ममित्याहुर्ये च मोहवशं गताः ।
अव्रता नष्टमर्यादास्ते प्रोक्ता ब्रह्मराक्षसाः ॥ ०६१ ॥

ते चेत्कालकृतोद्योगात्संभवन्तीह मानुषाः ।
निर्होमा निर्वषट्कारास्ते भवन्ति नराधमाः ॥ ०६२ ॥

एष देवि मया सर्वः संशयच्छेदनाय ते ।
कुशलाकुशलो नृणां व्याख्यातो धर्मसागरः ॥ ०६३ ॥

---

# अध्याय १३४

महेश्वर उवाच ॥

परावरज्ञे धर्मज्ञे तपोवननिवासिनि ।
साध्वि सुभ्रु सुकेशान्ते हिमवत्पर्वतात्मजे ॥ ००१ ॥

दक्षे शमदमोपेते निर्ममे धर्मचारिणि ।
पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितम् ॥ ००२ ॥

सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती ।
मार्तण्डजस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च ॥ ००३ ॥

वरुणस्य ततो गौरी सूर्यस्य च सुवर्चला ।
रोहिणी शशिनः साध्वी स्वाहा चैव विभावसोः ॥ ००४ ॥

अदितिः कश्यपस्याथ सर्वास्ताः पतिदेवताः ।
पृष्टाश्चोपासिताश्चैव तास्त्वया देवि नित्यशः ॥ ००५ ॥

तेन त्वां परिपृच्छामि धर्मज्ञे धर्मवादिनि ।
स्त्रीधर्मं श्रोतुमिच्छामि त्वयोदाहृतमादितः ॥ ००६ ॥

सहधर्मचरी मे त्वं समशीला समव्रता ।
समानसारवीर्या च तपस्तीव्रं कृतं च ते ॥ ००७ ॥

त्वया ह्युक्तो विशेषेण प्रमाणत्वमुपैष्यति ॥ ००७ ॥

स्त्रियश्चैव विशेषेण स्त्रीजनस्य गतिः सदा ।
गौर्गां गच्छति सुश्रोणि लोकेष्वेषा स्थितिः सदा ॥ ००८ ॥

मम चार्धं शरीरस्य मम चार्धाद्विनिःसृता ।
सुरकार्यकरी च त्वं लोकसंतानकारिणी ॥ ००९ ॥

तव सर्वः सुविदितः स्त्रीधर्मः शाश्वतः शुभे ।

तस्मादशेषतो ब्रूहि स्त्रीधर्मं विस्तरेण मे ॥ ०१० ॥

उमोवाच ॥

भगवन्सर्वभूतेश भूतभव्यभवोद्भव ।
त्वत्प्रभावादियं देव वाक्चैव प्रतिभाति मे ॥ ०११ ॥

इमास्तु नद्यो देवेश सर्वतीर्थोदकैर्युताः ।
उपस्पर्शनहेतोस्त्वा समीपस्था उपासते ॥ ०१२ ॥

एताभिः सह संमन्त्र्य प्रवक्ष्याम्यनुपूर्वशः ।
प्रभवन्योऽनहंवादी स वै पुरुष उच्यते ॥ ०१३ ॥

स्त्री च भूतेश सततं स्त्रियमेवानुधावति ।
मया संमानिताश्चैव भविष्यन्ति सरिद्वराः ॥ ०१४ ॥

एषा सरस्वती पुण्या नदीनामुत्तमा नदी ।
प्रथमा सर्वसरितां नदी सागरगामिनी ॥ ०१५ ॥

विपाशा च वितस्ता च चन्द्रभागा इरावती ।
शतद्रुर्देविका सिन्धुः कौशिकी गोमती तथा ॥ ०१६ ॥

तथा देवनदी चेयं सर्वतीर्थाभिसंवृता ।
गगनाद्गां गता देवी गङ्गा सर्वसरिद्वरा ॥ ०१७ ॥

इत्युक्त्वा देवदेवस्य पत्नी धर्मभृतां वरा ।
स्मितपूर्वमिवाभाष्य सर्वास्ताः सरितस्तदा ॥ ०१८ ॥

अपृच्छद्देवमहिषी स्त्रीधर्मं धर्मवत्सला ।
स्त्रीधर्मकुशलास्ता वै गङ्गाद्याः सरितां वराः ॥ ०१९ ॥

अयं भगवता दत्तः प्रश्नः स्त्रीधर्मसंश्रितः ।
तं तु संमन्त्र्य युष्माभिर्वक्तुमिच्छामि शङ्करे ॥ ०२० ॥

न चैकसाध्यं पश्यामि विज्ञानं भुवि कस्यचित् ।
दिवि वा सागरगमास्तेन वो मानयाम्यहम् ॥ ०२१ ॥

भीष्म उवाच ॥

एवं सर्वाः सरिच्छ्रेष्ठाः पृष्टाः पुण्यतमाः शिवाः ।
ततो देवनदी गङ्गा नियुक्ता प्रतिपूज्य ताम् ॥ ०२२ ॥

बह्वीभिर्बुद्धिभिः स्फीता स्त्रीधर्मज्ञा शुचिस्मिता ।
शैलराजसुतां देवीं पुण्या पापापहां शिवाम् ॥ ०२३ ॥

बुद्ध्या विनयसंपन्ना सर्वज्ञानविशारदा ।
सस्मितं बहुबुद्ध्याढ्या गङ्गा वचनमब्रवीत् ॥ ०२४ ॥

धन्याः स्मोऽनुगृहीताः स्मो देवि धर्मपरायणा ।
या त्वं सर्वजगन्मान्या नदीर्मानयसेऽनघे ॥ ०२५ ॥

प्रभवन्पृच्छते यो हि संमानयति वा पुनः ।
नूनं जनमदुष्टात्मा पण्डिताख्यां स गच्छति ॥ ०२६ ॥

ज्ञानविज्ञानसंपन्नानूहापोहविशारदान् ।
प्रवक्तॄन्पृच्छते योऽन्यान्स वै ना पदमर्च्छति ॥ ०२७ ॥

अन्यथा बहुबुद्ध्याढ्यो वाक्यं वदति संसदि ।
अन्यथैव ह्यहंमानी दुर्बलं वदते वचः ॥ ०२८ ॥

दिव्यज्ञाने दिवि श्रेष्ठे दिव्यपुण्ये सदोत्थिते ।
त्वमेवार्हसि नो देवि स्त्रीधर्ममनुशासितुम् ॥ ०२९ ॥

भीष्म उवाच ॥

ततः साराधिता देवी गङ्गया बहुभिर्गुणैः ।
प्राह सर्वमशेषेण स्त्रीधर्मं सुरसुन्दरी ॥ ०३० ॥

स्त्रीधर्मो मां प्रति यथा प्रतिभाति यथाविधि ।
तमहं कीर्तयिष्यामि तथैव प्रथितो भवेत् ॥ ०३१ ॥

स्त्रीधर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः ।
सहधर्मचरी भर्तुर्भवत्यग्निसमीपतः ॥ ०३२ ॥

सुस्वभावा सुवचना सुवृत्ता सुखदर्शना ।
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ ०३३ ॥

सा भवेद्धर्मपरमा सा भवेद्धर्मभागिनी ।
देववत्सततं साध्वी या भर्तारं प्रपश्यति ॥ ०३४ ॥

शुश्रूषां परिचारं च देववद्या करोति च ।
नान्यभावा ह्यविमनाः सुव्रता सुखदर्शना ॥ ०३५ ॥

पुत्रवक्रमिवाभीक्ष्णं भर्तुर्वदनमीक्षते ।
या साध्वी नियताचारा सा भवेद्धर्मचारिणी ॥ ०३६ ॥

श्रुत्वा दंपतिधर्मं वै सहधर्मकृतं शुभम् ।
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ ०३७ ॥

परुषाण्यपि चोक्ता या दृष्टा वा क्रूरचक्षुषा ।
सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता ॥ ०३८ ॥

न चन्द्रसूर्यौ न तरुं पुंनाम्नो या निरीक्षते ।

भर्तृवर्जं वरारोहा सा भवेद्धर्मचारिणी ॥ ०३९ ॥

दरिद्रं व्याधितं दीनमध्वना परिकर्शितम् ।
पतिं पुत्रमिवोपास्ते सा नारी धर्मभागिनी ॥ ०४० ॥

या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ।
पतिप्रिया पतिप्राणा सा नारी धर्मभागिनी ॥ ०४१ ॥

शुश्रूषां परिचर्यां च करोत्यविमनाः सदा ।
सुप्रतीता विनीता च सा नारी धर्मभागिनी ॥ ०४२ ॥

न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा ।
स्पृहा यस्या यथा पत्यौ सा नारी धर्मभागिनी ॥ ०४३ ॥

कल्योत्थानरता नित्यं गुरुशुश्रूषणे रता ।
सुसंमृष्टक्षया चैव गोशकृत्कृतलेपना ॥ ०४४ ॥

अग्निकार्यपरा नित्यं सदा पुष्पबलिप्रदा ।
देवतातिथिभृत्यानां निरुप्य पतिना सह ॥ ०४५ ॥

शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि ।
तुष्टपुष्टजना नित्यं नारी धर्मेण युज्यते ॥ ०४६ ॥

श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता ।
मातापितृपरा नित्यं या नारी सा तपोधना ॥ ०४७ ॥

ब्राह्मणान्दुर्बलानाथान्दीनान्धकृपणांस्तथा ।
बिभर्त्यन्नेन या नारी सा पतिव्रतभागिनी ॥ ०४८ ॥

व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया ।
पतिचित्ता पतिहिता सा पतिव्रतभागिनी ॥ ०४९ ॥

पुण्यमेतत्तपश्चैव स्वर्गश्चैष सनातनः ।
या नारी भर्तृपरमा भवेद्भर्तृव्रता शिवा ॥ ०५० ॥

पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः ।
पत्या समा गतिर्नास्ति दैवतं वा यथा पतिः ॥ ०५१ ॥

पतिप्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत् ।
अहं स्वर्गं न हीच्छेयं त्वय्यप्रीते महेश्वर ॥ ०५२ ॥

यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम् ।
पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथञ्चन ॥ ०५३ ॥

आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा ।
आपद्धर्माननुप्रेक्ष्य तत्कार्यमविशङ्कया ॥ ०५४ ॥

एष देव मया प्रोक्तः स्त्रीधर्मो वचनात्तव ।
या त्वेवंभाविनी नारी सा भवेद्धर्मभागिनी ॥ ०५५ ॥

भीष्म उवाच ॥

इत्युक्तः स तु देवेशः प्रतिपूज्य गिरेः सुताम् ।
लोकान्विसर्जयामास सर्वैरनुचरैः सह ॥ ०५६ ॥

ततो ययुर्भूतगणाः सरितश्च यथागतम् ।
गन्धर्वाप्सरसश्चैव प्रणम्य शिरसा भवम् ॥ ०५७ ॥

---

# विष्णुसहस्त्रनाम

## अध्याय १३५

वैशंपायन उवाच ॥

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत ॥ ००१ ॥

किमेकं दैवतं लोके किं वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ ००२ ॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ००३ ॥

भीष्म उवाच ॥

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ००४ ॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ००५ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ००६ ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ००७ ॥

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ००८ ॥

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम्  ॥ ००९  ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता  ॥ ०१०  ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये  ॥ ०११  ॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम्  ॥ ०१२  ॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये  ॥ ०१३  ॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः  ॥ ०१४  ॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च  ॥ ०१५  ॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः  ॥ ०१६  ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः  ॥ ०१७  ॥

स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः  ॥ ०१८  ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ०१९ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ०२० ॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ०२१ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ०२२ ॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ ०२३ ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ०२४ ॥

वसुर्वसुमनाः सत्यः समात्मा संमितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ ०२५ ॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ ०२६ ॥

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ ०२७ ॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ ०२८ ॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।

अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ ०२९ ॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥ ०३० ॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ ०३१ ॥

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ ०३२ ॥

महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ ०३३ ॥

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ०३४ ॥

अमृत्युः सर्वदृक्सिंहः संधाता संधिमान्स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ ०३५ ॥

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ०३६ ॥

अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ ०३७ ॥

आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ ०३८ ॥

सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ ०३९ ॥

असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ ०४० ॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ०४१ ॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ०४२ ॥

ओजस्तेजो द्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ०४३ ॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ०४४ ॥

भूतभव्यभवन्नाथः पवनः पावनोऽनिलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ०४५ ॥

युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ०४६ ॥

इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ०४७ ॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ०४८ ॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥ ०४९ ॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ०५० ॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ०५१ ॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिञ्जयः ॥ ०५२ ॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ०५३ ॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ०५४ ॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ०५५ ॥

रामो विरामो विरतो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ०५६ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ०५७ ॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ०५८ ॥

विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ०५९ ॥

अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।

नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ०६० ॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ०६१ ॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ०६२ ॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ०६३ ॥

धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ०६४ ॥

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ०६५ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ०६६ ॥

सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः ॥ ०६७ ॥

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ०६८ ॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ०६९ ॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ०७० ॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ०७१ ॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ०७२ ॥

भगवान्भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ०७३ ॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवःस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ०७४ ॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥ ०७५ ॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ०७६ ॥

अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ०७७ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमा.ल्लोकत्रयाश्रयः ॥ ०७८ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ०७९ ॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ०८० ॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ०८१ ॥

कालनेमिनिहा वीरः शूरः शौरिर्जनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ०८२ ॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ०८३ ॥

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ०८४ ॥

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ०८५ ॥

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ०८६ ॥

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ०८७ ॥

सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ०८८ ॥

भूतावासो वासुदेवो सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ०८९ ॥

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ०९० ॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।

लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ०९१ ॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ०९२ ॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ०९३ ॥

तेजो वृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहोऽव्यग्रो नैकशृङ्गो गदाग्रजः ॥ ०९४ ॥

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ०९५ ॥

समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ०९६ ॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ०९७ ॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ०९८ ॥

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ०९९ ॥

कुमुदः कुंदरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १०० ॥

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ १०१ ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ १०२ ॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥ १०३ ॥

भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ १०४ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ १०५ ॥

सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥ १०६ ॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ १०७ ॥

अनन्तो हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतम् ॥ १०८ ॥

सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥ १०९ ॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ११० ॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ १११ ॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ११२ ॥

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ ११३ ॥

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४ ॥

आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११५ ॥

प्रमाणं प्राणनिलयः प्राणकृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११६ ॥

भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११७ ॥

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८ ॥

आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ ११९ ॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १२० ॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १२१ ॥

य इदं श्रृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।

नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥ १२२ ॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १२३ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः ॥ १२४ ॥

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ १२५ ॥

यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥ १२६ ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥ १२७ ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतश्च मुच्येतापन्न आपदः ॥ १२८ ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३० ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं वाप्युपजायते ॥ १३१ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३२ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३४ ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १३५ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३६ ॥

सर्वागमानामाचारः प्रथमं परिकल्प्यते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३७ ॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पानि कर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १३९ ॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्री.ण्ल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १४० ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२ ॥

# ब्राह्मणप्रशंसा

## अध्याय १३६

युधिष्ठिर उवाच ॥

के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च ।
किमाचारः कीदृशेषु पितामह न रिष्यते ॥ ००१ ॥

भीष्म उवाच ॥

ब्राह्मणानां परिभवः सादयेदपि देवताः ।
ब्राह्मणानां नमस्कर्ता युधिष्ठिर न रिष्यते ॥ ००२ ॥

ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत् ।
ते हि लोकानिमान्सर्वान्धारयन्ति मनीषिणः ॥ ००३ ॥

ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः ।
धनत्यागाभिरामाश्च वाक्संयमरताश्च ये ॥ ००४ ॥

रमणीयाश्च भूतानां निधानं च धृतव्रताः ।
प्रणेतारश्च लोकानां शास्त्राणां च यशस्विनः ॥ ००५ ॥

तपो येषां धनं नित्यं वाक्चैव विपुलं बलम् ।
प्रभवश्चापि धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः ॥ ००६ ॥

धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेतवः ।

यानुपाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः ॥ ००७ ॥

पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः ।
पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ॥ ००८ ॥

धुरि ये नावसीदन्ति विषमे सद्गवा इव ।
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ॥ ००९ ॥

भोजनादेव ये लोकांस्त्रायन्ते महतो भयात् ।
दीपाः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ॥ ०१० ॥

सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः ।
गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः ॥ ०११ ॥

आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः ।
परावरविशेषज्ञा गन्तारः परमां गतिम् ॥ ०१२ ॥

विमुक्ता धुतपाप्मानो निर्द्वंद्वा निष्परिग्रहाः ।
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः ॥ ०१३ ॥

चन्दने मलपङ्के च भोजनेऽभोजने समाः ।
समं येषां दुकूलं च शाणक्षौमाजिनानि च ॥ ०१४ ॥

तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि ।
शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः ॥ ०१५ ॥

अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
लोकानन्यान्सृजेयुश्च लोकपालांश्च कोपिताः ॥ ०१६ ॥

अपेयः सागरो येषामभिशापान्महात्मनाम् ।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥ ०१७ ॥

देवानामपि ये देवाः कारणं कारणस्य च ।
प्रमाणस्य प्रमाणं च कस्तानभिभवेद्बुधः  ॥ ०१८  ॥

येषां वृद्धश्च बालश्च सर्वः संमानमर्हति ।
तपोविद्याविशेषात्तु मानयन्ति परस्परम्  ॥ ०१९  ॥

अविद्वान्ब्राह्मणो देवः पात्रं वै पावनं महत् ।
विद्वान्भूयस्तरो देवः पूर्णसागरसंनिभः  ॥ ०२०  ॥

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत्  ॥ ०२१  ॥

श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति ।
हविर्यज्ञेषु च वहन्भूय एवाभिशोभते  ॥ ०२२  ॥

एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम्  ॥ ०२३  ॥

---

# पवनार्जुनसंवादः

## अध्याय १३७

युधिष्ठिर उवाच  ॥

कां तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप ।
कं वा कर्मोदयं मत्वा तानर्चसि महामते  ॥ ००१  ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पवनस्य च संवादमर्जुनस्य च भारत ॥ ००२ ॥

सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः ।
अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः ॥ ००३ ॥

स तु रत्नाकरवतीं सद्वीपां सागराम्बराम् ।
शशास सर्वां पृथिवीं हैहयः सत्यविक्रमः ॥ ००४ ॥

स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कारणे ।
क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च ॥ ००५ ॥

आराधयामास च तं कृतवीर्यात्मजो मुनिम् ।
न्यमन्त्रयत संहृष्टः स द्विजश्च वरैस्त्रिभिः ॥ ००६ ॥

स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् ।
सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा ॥ ००७ ॥

मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे ।
विक्रमेण महीं कृत्स्नां जयेयं विपुलव्रत ॥ ००८ ॥

तां च धर्मेण संप्राप्य पालयेयमतन्द्रितः ॥ ००८ ॥

चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम ।
तं ममानुग्रहकृते दातुमर्हस्यनिन्दित ॥ ००९ ॥

अनुशासन्तु मां सन्तो मिथ्यावृत्तं तदाश्रयम् ॥ ००९ ॥

इत्युक्तः स द्विजः प्राह तथास्त्विति नराधिपम् ।
एवं समभवंस्तस्य वरास्ते दीप्ततेजसः ॥ ०१० ॥

ततः स रथमास्थाय ज्वलनार्कसमद्युतिः ।
अब्रवीद्वीर्यसंमोहात्को न्वस्ति सदृशो मया ॥ ०११ ॥

वीर्यधैर्ययशःशौचैर्विक्रमेणौजसापि वा ॥ ०११ ॥

तद्वाक्यान्ते चान्तरिक्षे वागुवाचाशरीरिणी ।
न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम् ॥ ०१२ ॥

सहितो ब्राह्मणेनेह क्षत्रियो रक्षति प्रजाः ॥ ०१२ ॥

अर्जुन उवाच ॥

कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये ।
कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः ॥ ०१३ ॥

पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः ।
त्वयोक्तौ यौ तु तौ हेतू विशेषस्त्वत्र दृश्यते ॥ ०१४ ॥

ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम् ।
श्रितान्ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि ॥ ०१५ ॥

क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम् ।
क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ॥ ०१६ ॥

सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहं सदा ।
आत्मसंभावितान्विप्रान्स्थापयाम्यात्मनो वशे ॥ ०१७ ॥

कथितं ह्यनया सत्यं गायत्र्या कन्यया दिवि ।

विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः ॥ ०१८ ॥

न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन ।
देवो वा मानुषो वापि तस्माज्ज्येष्ठो द्विजादहम् ॥ ०१९ ॥

अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् ।
न हि मे संयुगे कश्चित्सोढुमुत्सहते बलम् ॥ ०२० ॥

अर्जुनस्य वचः श्रुत्वा वित्रस्ताभून्निशाचरी ।
अथैनमन्तरिक्षस्थस्ततो वायुरभाषत ॥ ०२१ ॥

त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु ।
एतेषां कुर्वतः पापं राष्ट्रक्षोभो हि ते भवेत् ॥ ०२२ ॥

अथ वा त्वां महीपाल शमयिष्यन्ति वै द्विजाः ।
निरसिष्यन्ति वा राष्ट्राद्धतोत्साहं महाबलाः ॥ ०२३ ॥

तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः ।
वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् ॥ ०२४ ॥

अर्जुन उवाच ॥

अहो त्वयाद्य विप्रेषु भक्तिरागः प्रदर्शितः ।
यादृशं पृथिवी भूतं तादृशं ब्रूहि वै द्विजम् ॥ ०२५ ॥

वायोर्वा सदृशं किञ्चिद्ब्रूहि त्वं ब्राह्मणोत्तमम् ।
अपां वै सदृशं ब्रूहि सूर्यस्य नभसोऽपि वा ॥ ०२६ ॥

# अध्याय १३८

वायुरुवाच ॥

श्रृणु मूढ गुणान्कांश्चिद्ब्राह्मणानां महात्मनाम् ।
ये त्वया कीर्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः ॥ ००१ ॥

त्यक्त्वा महीत्वं भूमिस्तु स्पर्धयाङ्गनृपस्य ह ।
नाशं जगाम तां विप्रो व्यष्टम्भयत कश्यपः ॥ ००२ ॥

अक्षया ब्राह्मणा राजन्दिवि चेह च नित्यदा ।
अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा ॥ ००३ ॥

स ताः पिबन्क्षीरमिव नातृप्यत महातपाः ।
अपूरयन्महौघेन महीं सर्वां च पार्थिव ॥ ००४ ॥

तस्मिन्नहं च क्रुद्धे वै जगत्त्यक्त्वा ततो गतः ।
व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात् ॥ ००५ ॥

अभिशप्तश्च भगवान्गौतमेन पुरंदरः ।
अहल्यां कामयानो वै धर्मार्थं च न हिंसितः ॥ ००६ ॥

तथा समुद्रो नृपते पूर्णो मृष्टेन वारिणा ।
ब्राह्मणैरभिशप्तः स.ण्लवणोदः कृतो विभो ॥ ००७ ॥

सुवर्णवर्णो निर्धूमः संहतोर्ध्वशिखः कविः ।
क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः ॥ ००८ ॥

मरुतश्चूर्णितान्पश्य येऽहसन्त महोदधिम् ।
सुवर्णधारिणा नित्यमवशप्ता द्विजातिना ॥ ००९ ॥

समो न त्वं द्विजातिभ्यः श्रेष्ठं विद्धि नराधिप ।
गर्भस्थान्ब्राह्मणान्सम्यङ्गमस्यति किल प्रभुः ॥ ०१० ॥

दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम् ।
तालजङ्घं महत्क्षत्रमौर्वेणैकेन नाशितम् ॥ ०११ ॥

त्वया च विपुलं राज्यं बलं धर्मः श्रुतं तथा ।
दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् ॥ ०१२ ॥

अग्निं त्वं यजसे नित्यं कस्मादर्जुन ब्राह्मणम् ।
स हि सर्वस्य लोकस्य हव्यवाड्किं न वेत्सि तम् ॥ ०१३ ॥

अथ वा ब्राह्मणश्रेष्ठमनु भूतानुपालकम् ।
कर्तारं जीवलोकस्य कस्माज्जानन्विमुह्यसे ॥ ०१४ ॥

तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभवाप्ययः ।
येनेदं निखिलं विश्वं जनितं स्थावरं चरम् ॥ ०१५ ॥

अण्डजातं तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः ।
अण्डाद्भिन्नाद्बभुः शैला दिशोऽम्भः पृथिवी दिवम् ॥ ०१६ ॥

द्रष्टव्यं नैतदेवं हि कथं ज्यायस्तमो हि सः ।
स्मृतमाकाशमण्डं तु तस्माज्जातः पितामहः ॥ ०१७ ॥

तिष्ठेत्कथमिति ब्रूहि न किञ्चिद्धि तदा भवेत् ।
अहङ्कार इति प्रोक्तः सर्वतेजोगतः प्रभुः ॥ ०१८ ॥

नास्त्यण्डमस्ति तु ब्रह्मा स राज.ण्ल्लोकभावनः ।
इत्युक्तः स तदा तूष्णीमभूद्वायुस्तमब्रवीत् ॥ ०१९ ॥

# अध्याय १३९

वायुरुवाच ॥

इमां भूमिं ब्राह्मणेभ्यो दित्सुर्वै दक्षिणां पुरा ।
अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ ॥ ००१ ॥

धारणीं सर्वभूतानामयं प्राप्य वरो नृपः ।
कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम् ॥ ००२ ॥

साहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम् ।
अयं सराष्ट्रो नृपतिर्मा भूदिति ततोऽगमत् ॥ ००३ ॥

ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा ।
प्रविवेश महीं सद्यो मुक्त्वात्मानं समाहितः ॥ ००४ ॥

रुद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता ।
धर्मोत्तरा नष्टभया भूमिरासीत्ततो नृप ॥ ००५ ॥

एवं वर्षसहस्राणि दिव्यानि विपुलव्रतः ।
त्रिंशतं कश्यपो राजन्भूमिरासीदतन्द्रितः ॥ ००६ ॥

अथागम्य महाराज नमस्कृत्य च कश्यपम् ।
पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः ॥ ००७ ॥

एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत् ।
अन्यं प्रब्रूहि वापि त्वं कश्यपात्क्षत्रियं वरम् ॥ ००८ ॥

तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीत्पुनः ।

श्रृणु राजन्नुतथ्यस्य जातस्याङ्गिरसे कुले ॥ ००९ ॥

भद्रा सोमस्य दुहिता रूपेण परमा मता ।
तस्यास्तुल्यं पतिं सोम उतथ्यं समपश्यत ॥ ०१० ॥

सा च तीव्रं तपस्तेपे महाभागा यशस्विनी ।
उतथ्यं तु महाभागं तत्कृतेऽवरयत्तदा ॥ ०११ ॥

तत आहूय सोतथ्यं ददावत्र यशस्विनीम् ।
भार्यार्थे स च जग्राह विधिवद्भूरिदक्षिण ॥ ०१२ ॥

तां त्वकामयत श्रीमान्वरुणः पूर्वमेव ह ।
स चागम्य वनप्रस्थं यमुनायां जहार ताम् ॥ ०१३ ॥

जलेश्वरस्तु हृत्वा तामनयत्स्वपुरं प्रति ।
परमाद्भुतसङ्काशं षड्हस्रशतह्रदम् ॥ ०१४ ॥

न हि रम्यतरं किञ्चित्तस्मादन्यत्पुरोत्तमम् ।
प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम् ॥ ०१५ ॥

तत्र देवस्तया सार्धं रेमे राजञ्जलेश्वरः ॥ ०१५ ॥

अथाख्यातमुतथ्याय ततः पत्न्यवमर्दनम् ।
तच्छ्रुत्वा नारदात्सर्वमुतथ्यो नारदं तदा ।
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः ॥ ०१७ ॥

मद्वाक्यान्मुञ्च मे भार्यां कस्माद्वा हृतवानसि ॥ ०१७ ॥

लोकपालोऽसि लोकानां न लोकस्य विलोपकः ।
सोमेन दत्ता भार्या मे त्वया चापहृताद्य वै ॥ ०१८ ॥

इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः ।
मुञ्च भार्यामुतथ्यस्येत्यथ तं वरुणोऽब्रवीत्  ॥ ०१९  ॥

ममैषा सुप्रिया भार्या नैनामुत्स्रष्टुमुत्सहे  ॥ ०१९  ॥

इत्युक्तो वरुणेनाथ नारदः प्राप्य तं मुनिम् ।
उतथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव  ॥ ०२०  ॥

गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने ।
न प्रयच्छति ते भार्यां यत्ते कार्यं कुरुष्व तत्  ॥ ०२१  ॥

नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः ।
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः  ॥ ०२२  ॥

पीयमाने च सर्वस्मिंस्तोये वै सलिलेश्वरः ।
सुहृद्भिः क्षिप्यमाणोऽपि नैवामुञ्चत तां तदा  ॥ ०२३  ॥

ततः क्रुद्धोऽब्रवीद्भूमिमुतथ्यो ब्राह्मणोत्तमः ।
दर्शयस्व स्थलं भद्रे षट्सहस्रशतह्रदम्  ॥ ०२४  ॥

ततस्तदिरिणं जातं समुद्रश्चापसर्पितः ।
तस्माद्देशान्नदीं चैव प्रोवाचासौ द्विजोत्तमः  ॥ ०२५  ॥

अदृश्या गच्छ भीरु त्वं सरस्वति मरुं प्रति ।
अपुण्य एष भवतु देशस्त्यक्तस्त्वया शुभे  ॥ ०२६  ॥

तस्मिन्सञ्चूर्णिते देशे भद्रामादाय वारिपः ।
अददाच्छरणं गत्वा भार्यामाङ्गिरसाय वै  ॥ ०२७  ॥

प्रतिगृह्य तु तां भार्यामुतथ्यः सुमनाभवत् ।
मुमोच च जगद्दुःखाद्वरुणं चैव हैहय  ॥ ०२८  ॥

ततः स लब्ध्वा तां भार्यां वरुणं प्राह धर्मवित् ।
उतथ्यः सुमहातेजा यत्तच्छृणु नराधिप ॥ ०२९ ॥

मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप ।
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ ॥ ०३० ॥

एष राजन्नीदृशो वै उतथ्यो ब्राह्मणर्षभः ।
ब्रवीम्यहं ब्रूहि वा त्वमुतथ्यात्क्षत्रियं वरम् ॥ ०३१ ॥

---

# अध्याय १४०

भीष्म उवाच ॥

इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य ह ॥ ००१ ॥

असुरैर्निर्जिता देवा निरुत्साहाश्च ते कृताः ।
यज्ञाश्चैषां हृताः सर्वे पितृभ्यश्च स्वधा तथा ॥ ००२ ॥

कर्मेज्या मानवानां च दानवैर्हैहयर्षभ ।
भ्रष्टैश्वर्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः ॥ ००३ ॥

ततः कदाचित्ते राजन्दीप्तमादित्यवर्चसम् ।
ददृशुस्तेजसा युक्तमगस्त्यं विपुलव्रतम् ॥ ००४ ॥

अभिवाद्य च तं देवा दृष्ट्वा च यशसा वृतम् ।
इदमूचुर्महात्मानं वाक्यं काले जनाधिप ॥ ००५ ॥

दानवैर्युधि भग्नाः स्म तथैश्वर्याच्च भ्रंशिताः ।
तदस्मान्नो भयात्तीव्रात्त्राहि त्वं मुनिपुङ्गव ॥ ००६ ॥

इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत् ।
प्रजज्वाल च तेजस्वी कालाग्निरिव सङ्क्षये ॥ ००७ ॥

तेन दीप्तांशुजालेन निर्दग्धा दानवास्तदा ।
अन्तरिक्षान्महाराज न्यपतन्त सहस्रशः ॥ ००८ ॥

दह्यमानास्तु ते दैत्यास्तस्यागस्त्यस्य तेजसा ।
उभौ लोकौ परित्यज्य ययुः काष्ठां स्म दक्षिणाम् ॥ ००९ ॥

बलिस्तु यजते यज्ञमश्वमेधं महीं गतः ।
येऽन्ये स्वस्था महीस्थाश्च ते न दग्धा महासुराः ॥ ०१० ॥

ततो लोकाः पुनः प्राप्ताः सुरैः शान्तं च तद्रजः ।
अथैनमब्रुवन्देवा भूमिष्ठानसुराञ्जहि ॥ ०११ ॥

इत्युक्त आह देवान्स न शक्नोमि महीगतान् ।
दग्धुं तपो हि क्षीयेन्मे धक्ष्यामीति च पार्थिव ॥ ०१२ ॥

एवं दग्धा भगवता दानवाः स्वेन तेजसा ।
अगस्त्येन तदा राजंस्तपसा भावितात्मना ॥ ०१३ ॥

ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयानघ ।
ब्रवीम्यहं ब्रूहि वा त्वमगस्त्यात्क्षत्रियं वरम् ॥ ०१४ ॥

इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्वसिष्ठस्य मुख्यं कर्म यशस्विनः ॥ ०१५ ॥

आदित्याः सत्रमासन्त सरो वै मानसं प्रति ।
वसिष्ठं मनसा गत्वा श्रुत्वा तत्रास्य गोचरम् ॥ ०१६ ॥

यजमानांस्तु तान्दृष्ट्वा व्यग्रान्दीक्षानुकर्शितान् ।
हन्तुमिच्छन्ति शैलाभाः खलिनो नाम दानवाः ॥ ०१७ ॥

अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः ।
हता हता वै ते तत्र जीवन्त्याप्लुत्य दानवाः ॥ ०१८ ॥

ते प्रगृह्य महाघोरान्पर्वतान्परिघान्द्रुमान् ।
विक्षोभयन्तः सलिलमुत्थिताः शतयोजनम् ॥ ०१९ ॥

अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव ह ।
ततस्तैरर्दिता देवाः शरणं वासवं ययुः ॥ ०२० ॥

स च तैर्व्यथितः शक्रो वसिष्ठं शरणं ययौ ।
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः ॥ ०२१ ॥

तथा तान्दुःखिताञ्जानन्नानृशंस्यपरो मुनिः ।
अयत्नेनादहत्सर्वान्खलिनः स्वेन तेजसा ॥ ०२२ ॥

कैलासं प्रस्थितां चापि नदीं गङ्गां महातपाः ।
आनयत्तत्सरो दिव्यं तया भिन्नं च तत्सरः ॥ ०२३ ॥

सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत् ।
हताश्च खलिनो यत्र स देशः खलिनोऽभवत् ॥ ०२४ ॥

एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः ।
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना ॥ ०२५ ॥

एतत्कर्म वसिष्ठस्य कथितं ते मयानघ ।

ब्रवीम्यहं ब्रूहि वा त्वं वसिष्ठात्क्षत्रियं वरम्  ॥ ०२६  ॥

---

# अध्याय १४१

भीष्म उवाच  ॥

इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत् ।
शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः  ॥ ००१  ॥

घोरे तमस्ययुध्यन्त सहिता देवदानवाः ।
अविध्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ  ॥ ००२  ॥

अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः ।
देवा नृपतिशार्दूल सहैव बलिभिस्तदा  ॥ ००३  ॥

असुरैर्वध्यमानास्ते क्षीणप्राणा दिवौकसः ।
अपश्यन्त तपस्यन्तमत्रिं विप्रं महावने  ॥ ००४  ॥

अथैनमब्रुवन्देवाः शान्तक्रोधं जितेन्द्रियम् ।
असुरैरिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ  ॥ ००५  ॥

वयं वध्यामहे चापि शत्रुभिस्तमसावृते ।
नाधिगच्छाम शान्तिं च भयात्त्रायस्व नः प्रभो  ॥ ००६  ॥

कथं रक्षामि भवतस्तेऽब्रुवंश्चन्द्रमा भव ।
तिमिरघ्नश्च सविता दस्युहा चैव नो भव  ॥ ००७  ॥

एवमुक्तस्तदात्रिस्तु तमोनुदभवच्छशी ।

अपश्यत्सौम्यभावं च सूर्यस्य प्रतिदर्शनम्  ॥ ००८  ॥

दृष्ट्वा नातिप्रभं सोमं तथा सूर्यं च पार्थिव ।
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे  ॥ ००९  ॥

जगद्वितिमिरं चापि प्रदीप्तमकरोत्तदा ।
व्यजयच्छत्रुसंघांश्च देवानां स्वेन तेजसा  ॥ ०१०  ॥

अत्रिणा दह्यमानांस्तान्दृष्ट्वा देवा महासुरान् ।
पराक्रमैस्तेऽपि तदा व्यत्यघ्नन्नत्रिरक्षिताः  ॥ ०११  ॥

उद्भासितश्च सविता देवास्त्राता हतासुराः ।
अत्रिणा त्वथ सोमत्वं कृतमुत्तमतेजसा  ॥ ०१२  ॥

अद्वितीयेन मुनिना जपता चर्मवाससा ।
फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम्  ॥ ०१३  ॥

तस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः ।
ब्रवीम्यहं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम्  ॥ ०१४  ॥

इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत् ।
शृणु राजन्महत्कर्म च्यवनस्य महात्मनः  ॥ ०१५  ॥

अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम् ।
प्रोवाच सहितं देवैः सोमपावश्विनौ कुरु  ॥ ०१६  ॥

इन्द्र उवाच  ॥

अस्माभिर्वर्जितावेतौ भवेतां सोमपौ कथम् ।
देवैर्न संमितावेतौ तस्मान्मैवं वदस्व नः  ॥ ०१७  ॥

अश्विभ्यां सह नेच्छामः पातुं सोमं महाव्रत ।
पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ॥ ०१८ ॥

च्यवन उवाच ॥

न चेत्करिष्यसि वचो मयोक्तं बलसूदन ।
मया प्रमथितः सद्यः सोमं पास्यसि वै मखे ॥ ०१९ ॥

ततः कर्म समारब्धं हिताय सहसाश्विनोः ।
च्यवनेन ततो मन्त्रैरभिभूताः सुराभवन् ॥ ०२० ॥

तत्तु कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्छितः ।
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ॥ ०२१ ॥

तथा वज्रेण भगवानमर्षाकुललोचनः ॥ ०२१ ॥

तमापतन्तं दृष्ट्वैव च्यवनस्तपसान्वितः ।
अद्भिः सिक्त्वास्तम्भयत्तं सवज्रं सहपर्वतम् ॥ ०२२ ॥

अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव ह ।
मदं मन्त्राहुतिमयं व्यादितास्यं महामुनिः ॥ ०२३ ॥

तस्य दन्तसहस्रं तु बभूव शतयोजनम् ।
द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः ॥ ०२४ ॥

हनुस्तस्याभवद्भूमावेकश्चास्यास्पृशद्दिवम् ॥ ०२४ ॥

जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः ।
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ॥ ०२५ ॥

ते संमन्त्र्य ततो देवा मदस्यास्यगतास्तदा ।

अब्रुवन्सहिताः शक्रं प्रणमास्मै द्विजातये ॥ ०२६ ॥

अश्विभ्यां सह सोमं च पिबामो विगतज्वराः ॥ ०२६ ॥

ततः स प्रणतः शक्रश्चकार च्यवनस्य तत् ।
च्यवनः कृतवांस्तौ चाप्यश्विनौ सोमपीथिनौ ॥ ०२७ ॥

ततः प्रत्याहरत्कर्म मदं च व्यभजन्मुनिः ।
अक्षेषु मृगयायां च पाने स्त्रीषु च वीर्यवान् ॥ ०२८ ॥

एतैर्दोषैर्नरो राजन्क्षयं याति न संशयः ।
तस्मादेतान्नरो नित्यं दूरतः परिवर्जयेत् ॥ ०२९ ॥

एतत्ते च्यवनस्यापि कर्म राजन्प्रकीर्तितम् ।
ब्रवीम्यहं ब्रूहि वा त्वं च्यवनात्क्षत्रियं वरम् ॥ ०३० ॥

---

# अध्याय १४२

भीष्म उवाच ॥

तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत्पुनः ।
शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप ॥ ००१ ॥

मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः ।
तदेयं च्यवनेनेह हृता तेषां वसुंधरा ॥ ००२ ॥

उभौ लोकौ हृतौ मत्वा ते देवा दुःखिताभवन् ।
शोकार्ताश्च महात्मानं ब्रह्माणं शरणं ययुः ॥ ००३ ॥

देवा ऊचुः ॥

मदास्यव्यतिषिक्तानामस्माकं लोकपूजित ।
च्यवनेन हृता भूमिः कपैश्चापि दिवं प्रभो ॥ ००४ ॥

ब्रह्मोवाच ॥

गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः ।
प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा ॥ ००५ ॥

ते ययुः शरणं विप्रांस्त ऊचुः काञ्जयामहे ।
इत्युक्तास्ते द्विजान्प्राहुर्जयतेह कपानिति ॥ ००६ ॥

भूगतान्हि विजेतारो वयमित्येव पार्थिव ॥ ००६ ॥

ततः कर्म समारब्धं ब्राह्मणैः कपनाशनम् ।
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः ॥ ००७ ॥

स च तान्ब्राह्मणानाह धनी कपवचो यथा ।
भवद्भिः सदृशाः सर्वे कपाः किमिह वर्तते ॥ ००८ ॥

सर्वे वेदविदः प्राज्ञाः सर्वे च क्रतुयाजिनः ।
सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः ॥ ००९ ॥

श्रीश्चैव रमते तेषु धारयन्ति श्रियं च ते ।
वृथा दारान्न गच्छन्ति वृथामांसं न भुञ्जते ॥ ०१० ॥

दीप्तमग्निं जुह्वति च गुरूणां वचने स्थिताः ।
सर्वे च नियतात्मानो बालानां संविभागिनः ॥ ०११ ॥

उपेत्य शकटैर्यान्ति न सेवन्ति रजस्वलाम् ।
अभुक्तवत्सु नाश्नन्ति दिवा चैव न शेरते ॥ ०१२ ॥

एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान्कथं कपान् ।
विजेष्यथ निवर्तध्वं निवृत्तानां शुभं हि वः ॥ ०१३ ॥

ब्राह्मणा ऊचुः ॥

कपान्वयं विजेष्यामो ये देवास्ते वयं स्मृताः ।
तस्माद्वध्याः कपास्माकं धनिन्याहि यथागतम् ॥ ०१४ ॥

धनी गत्वा कपानाह न वो विप्राः प्रियङ्कराः ।
गृहीत्वास्त्राण्यथो विप्रान्कपाः सर्वे समाद्रवन् ॥ ०१५ ॥

समुदग्रध्वजान्दृष्ट्वा कपान्सर्वे द्विजातयः ।
व्यसृजञ्ज्वलितानग्नीन्कपानां प्राणनाशनान् ॥ ०१६ ॥

ब्रह्मसृष्टा हव्यभुजः कपान्भुक्त्वा सनातनाः ।
नभसीव यथाभ्राणि व्यराजन्त नराधिप ॥ ०१७ ॥

प्रशशंसुर्द्विजांश्चैव ब्रह्माणं च यशस्विनम् ॥ ०१७ ॥

तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः ।
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम् ॥ ०१८ ॥

इत्युक्तवचनं वायुमर्जुनः प्रत्यभाषत ।
प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप ॥ ०१९ ॥

जीवाम्यहं ब्राह्मणार्थे सर्वथा सततं प्रभो ।
ब्रह्मणे ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः ॥ ०२० ॥

दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं यशः ।
लोके च परमा कीर्तिर्धर्मश्च चरितो महान्  ॥ ०२१  ॥

अहो ब्राह्मणकर्माणि यथा मारुत तत्त्वतः ।
त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन ह  ॥ ०२२  ॥

वायुरुवाच  ॥

ब्राह्मणान्क्षत्रधर्मेण पालयस्वेन्द्रियाणि च ।
भृगुभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति  ॥ ०२३  ॥

---

# कृष्णमाहात्म्यम्

## अध्याय १४३

युधिष्ठिर उवाच  ॥

ब्राह्मणानर्चसे राजन्सततं संशितव्रतान् ।
कं तु कर्मोदयं दृष्ट्वा तानर्चसि नराधिप  ॥ ००१  ॥

कां वा ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा महाव्रत ।
तानर्चसि महाबाहो सर्वमेतद्वदस्व मे  ॥ ००२  ॥

भीष्म उवाच  ॥

एष ते केशवः सर्वमाख्यास्यति महामतिः ।
व्युष्टिं ब्राह्मणपूजायां दृष्टव्युष्टिर्महाव्रतः  ॥ ००३  ॥

बलं श्रोत्रे वाङ्मनश्चक्षुषी च ; ज्ञानं तथा न विशुद्धं ममाद्य ।
देहन्यासो नातिचिरान्मतो मे ; न चातितूर्णं सविताद्य याति ॥ ००४ ॥

उक्ता धर्मा ये पुराणे महान्तो ; ब्राह्मणानां क्षत्रियाणां विशां च ।
पौराणं ये दण्डमुपासते च ; शेषं कृष्णादुपशिक्षस्व पार्थ ॥ ००५ ॥

अहं ह्येनं वेद्मि तत्त्वेन कृष्णं ; योऽयं हि यच्चास्य बलं पुराणम् ।
अमेयात्मा केशवः कौरवेन्द्र ; सोऽयं धर्मं वक्ष्यति संशयेषु ॥ ००६ ॥

कृष्णः पृथ्वीमसृजत्खं दिवं च ; वराहोऽयं भीमबलः पुराणः ।
अस्य चाधोऽथान्तरिक्षं दिवं च ; दिशश्चतस्रः प्रदिशश्चतस्रः ॥ ००७ ॥

सृष्टिस्तथैवेयमनुप्रसूता ; स निर्ममे विश्वमिदं पुराणम् ॥ ००७ ॥

अस्य नाभ्यां पुष्करं संप्रसूतं ; यत्रोत्पन्नः स्वयमेवामितौजाः ।
येनाच्छिन्नं तत्तमः पार्थ घोरं ; यत्तत्तिष्ठत्यर्णवं तर्जयानम् ॥ ००८ ॥

कृते युगे धर्म आसीत्समग्र ;स्त्रेताकाले ज्ञानमनुप्रपन्नः ।
बलं त्वासीद्द्वापरे पार्थ कृष्णः ; कलावधर्मः क्षितिमाजगाम ॥ ००९ ॥

स पूर्वदेवो निजघान दैत्या ;न्स पूर्वदेवश्च बभूव सम्राट् ।
स भूतानां भावनो भूतभव्यः ; स विश्वस्यास्य जगतश्चापि गोप्ता ॥ ०१० ॥

यदा धर्मो ग्लायति वै सुराणां ; तदा कृष्णो जायते मानुषेषु ।
धर्मे स्थित्वा स तु वै भावितात्मा ; परांश्च लोकानपरांश्च याति ॥ ०११ ॥

त्याज्यांस्त्यक्त्वाथासुराणां वधाय ; कार्याकार्ये कारणं चैव पार्थ ।
कृतं करिष्यत्क्रियते च देवो ; मुहुः सोमं विद्धि च शक्रमेतम् ॥ ०१२ ॥

स विश्वकर्मा स च विश्वरूपः ; स विश्वभृद्विश्वसृग्विश्वजिच्च ।

स शूलभृच्छोणितभृत्कराल ;स्तं कर्मभिर्विदितं वै स्तुवन्ति ॥ ०१३ ॥

तं गन्धर्वा अप्सरसश्च नित्य ;मुपतिष्ठन्ते विबुधानां शतानि ।
तं राक्षसाश्च परिसंवहन्ते ; रायस्पोषः स विजिगीषुरेकः ॥ ०१४ ॥

तमध्वरे शंसितारः स्तुवन्ति ; रथंतरे सामगाश्च स्तुवन्ति ।
तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति ; तस्मै हविरध्वर्यवः कल्पयन्ति ॥ ०१५ ॥

स पौराणीं ब्रह्मगुहां प्रविष्टो ; महीसत्रं भारताग्रे ददर्श ।
स चैव गामुद्दधाराग्र्यकर्मा ; विक्षोभ्य दैत्यानुरगान्दानवांश्च ॥ ०१६ ॥

तस्य भक्षान्विविधान्वेदयन्ति ; तमेवाजौ वाहनं वेदयन्ति ।
तस्यान्तरिक्षं पृथिवी दिवं च ; सर्वं वशे तिष्ठति शाश्वतस्य ॥ ०१७ ॥

स कुम्भरेताः ससृजे पुराणं ; यत्रोत्पन्नमृषिमाहुर्वसिष्ठम् ।
स मातरिश्वा विभुरश्ववाजी ; स रश्मिमान्सविता चादिदेवः ॥ ०१८ ॥

तेनासुरा विजिताः सर्व एव ; तस्य विक्रान्तैर्विजितानीह त्रीणि ।
स देवानां मानुषाणां पितृणां ; तमेवाहुर्यज्ञविदां वितानम् ॥ ०१९ ॥

स एव कालं विभजन्नुदेति ; तस्योत्तरं दक्षिणं चायने द्वे ।
तस्यैवोर्ध्वं तिर्यगधश्चरन्ति ; गभस्तयो मेदिनीं तापयन्तः ॥ ०२० ॥

तं ब्राह्मणा वेदविदो जुषन्ति ; तस्यादित्यो भामुपयुज्य भाति ।
स मासि मास्यध्वरकृद्विधत्ते ; तमध्वरे वेदविदः पठन्ति ॥ ०२१ ॥

स एकयुक्चक्रमिदं त्रिनाभि ; सप्ताश्वयुक्तं वहते वै त्रिधामा ।
महातेजाः सर्वगः सर्वसिंहः ; कृष्णो लोकान्धारयते तथैकः ॥ ०२२ ॥

अश्नन्ननश्नंश्च तथैव धीरः ; कृष्णं सदा पार्थ कर्तारमेहि ॥ ०२२ ॥

स एकदा कक्षगतो महात्मा ; तृप्तो विभुः खाण्डवे धूमकेतुः ।
स राक्षसानुरगांश्चावजित्य ; सर्वत्रगः सर्वमग्नौ जुहोति ॥ ०२३ ॥

स एवाश्वः श्वेतमश्वं प्रयच्छ ;त्स एवाश्वानथ सर्वांश्चकार ।
त्रिवन्धुरस्तस्य रथस्त्रिचक्र ;स्त्रिवृच्छिराश्चतुरस्रश्च तस्य ॥ ०२४ ॥

स विहायो व्यदधात्पञ्चनाभिः ; स निर्ममे गां दिवमन्तरिक्षम् ।
एवं रम्यानसृजत्पर्वतांश्च ; हृषीकेशोऽमितदीप्ताग्नितेजाः ॥ ०२५ ॥

स लङ्घयन्वै सरितो जिघांस ;न्स तं वज्रं प्रहरन्तं निरास ।
स महेन्द्रः स्तूयते वै महाध्वरे ; विप्रैरेको ऋक्सहस्रैः पुराणैः ॥ ०२६ ॥

दुर्वासा वै तेन नान्येन शक्यो ; गृहे राजन्वासयितुं महौजाः ।
तमेवाहुर्ऋषिमेकं पुराणं ; स विश्वकृद्विदधात्यात्मभावान् ॥ ०२७ ॥

वेदांश्च यो वेदयतेऽधिदेवो ; विधींश्च यश्चाश्रयते पुराणान् ।
कामे वेदे लौकिके यत्फलं च ; विष्वक्सेने सर्वमेतत्प्रतीहि ॥ ०२८ ॥

ज्योतींषि शुक्लानि च सर्वलोके ; त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयो व्याहृतयश्च तिस्रः ; सर्वे देवा देवकीपुत्र एव ॥ ०२९ ॥

संवत्सरः स ऋतुः सोऽर्धमासः ; सोऽहोरात्रः स कला वै स काष्ठाः ।
मात्रा मुहूर्ताश्च लवाः क्षणाश्च ; विष्वक्सेने सर्वमेतत्प्रतीहि ॥ ०३० ॥

चन्द्रादित्यौ ग्रहनक्षत्रताराः ; सर्वाणि दर्शान्यथ पौर्णमास्यः ।
नक्षत्रयोगा ऋतवश्च पार्थ ; विष्वक्सेनात्सर्वमेतत्प्रसूतम् ॥ ०३१ ॥

रुद्रादित्या वसवोऽथाश्विनौ च ; साध्या विश्वे मरुतां षड्गणाश्च ।
प्रजापतिर्देवमातादितिश्च ; सर्वे कृष्णादृषयश्चैव सप्त ॥ ०३२ ॥

वायुर्भूत्वा विक्षिपते च विश्व ;मग्निर्भूत्वा दहते विश्वरूपः ।

आपो भूत्वा मज्जयते च सर्वं ; ब्रह्मा भूत्वा सृजते विश्वसंघान् ॥ ०३३ ॥

वेद्यं च यद्वेदयते च वेदा ;न्विधिश्च यश्चाश्रयते विधेयान् ।
धर्मे च वेदे च बले च सर्वं ; चराचरं केशवं त्वं प्रतीहि ॥ ०३४ ॥

ज्योतिर्भूतः परमोऽसौ पुरस्ता ;त्प्रकाशयन्प्रभया विश्वरूपः ।
अपः सृष्ट्वा ह्यात्मभूरात्मयोनिः ; पुराकरोत्सर्वमेवाथ विश्वम् ॥ ०३५ ॥

ऋतूनुत्पातान्विविधान्यद्भुतानि ; मेघान्विद्युत्सर्वमैरावतं च ।
सर्वं कृष्णात्स्थावरं जङ्गमं च ; विश्वाख्याताद्विष्णुमेनं प्रतीहि ॥ ०३६ ॥

विश्वावासं निर्गुणं वासुदेवं ; सङ्कर्षणं जीवभूतं वदन्ति ।
ततः प्रद्युम्नमनिरुद्धं चतुर्थ ;माज्ञापयत्यात्मयोनिर्महात्मा ॥ ०३७ ॥

स पञ्चधा पञ्चजनोपपन्नं ; सञ्चोदयन्विश्वमिदं सिसृक्षुः ।
ततश्चकारावनिमारुतौ च ; खं ज्योतिरापश्च तथैव पार्थ ॥ ०३८ ॥

स स्थावरं जङ्गमं चैवमेत ;च्चतुर्विधं लोकमिमं च कृत्वा ।
ततो भूमिं व्यदधात्पञ्चबीजां ; द्यौः पृथिव्यां धास्यति भूरि वारि ॥ ०३९ ॥

तेन विश्वं कृतमेतद्धि राज ;न्स जीवयत्यात्मनैवात्मयोनिः ॥ ०३९ ॥

ततो देवानसुरान्मानुषांश्च ; लोकानृषींश्चाथ पितॄन्प्रजाश्च ।
समासेन विविधान्प्राणिलोका ;न्सर्वान्सदा भूतपतिः सिसृक्षुः ॥ ०४० ॥

शुभाशुभं स्थावरं जङ्गमं च ; विष्वक्सेनात्सर्वमेतत्प्रतीहि ।
यद्वर्तते यच्च भविष्यतीह ; सर्वमेतत्केशवं त्वं प्रतीहि ॥ ०४१ ॥

मृत्युश्चैव प्राणिनामन्तकाले ; साक्षात्कृष्णः शाश्वतो धर्मवाहः ।
भूतं च यच्चेह न विद्म किं चि ;द्विष्वक्सेनात्सर्वमेतत्प्रतीहि ॥ ०४२ ॥

यत्प्रशस्तं च लोकेषु पुण्यं यच्च शुभाशुभम् ।
तत्सर्वं केशवोऽचिन्त्यो विपरीतमतो भवेत्  ॥ ०४३  ॥

एतादृशः केशवोऽयं स्वयंभू ;र्नारायणः परमश्चाव्ययश्च ।
मध्यं चास्य जगतस्तस्थुषश्च ; सर्वेषां भूतानां प्रभवश्चाप्ययश्च  ॥ ०४४  ॥

---

# दुर्वासोमाहात्म्यम्

## अध्याय १४४

युधिष्ठिर उवाच  ॥

ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन ।
वेत्ता त्वमस्य चार्थस्य वेद त्वां हि पितामहः  ॥ ००१  ॥

वासुदेव उवाच  ॥

शृणुष्वावहितो राजन्द्विजानां भरतर्षभ ।
यथातत्त्वेन वदतो गुणान्मे कुरुसत्तम  ॥ ००२  ॥

प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः ।
किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन  ॥ ००३  ॥

ईश्वरस्य सतस्तस्य इह चैव परत्र च  ॥ ००३  ॥

सदा द्विजातीन्संपूज्य किं फलं तत्र मानद ।

एतद्ब्रूहि पितः सर्वं सुमहान्संशयोऽत्र मे ॥ ००४ ॥

इत्युक्तवचनस्तेन प्रद्युम्नेन तदा त्वहम् ।
प्रत्यब्रुवं महाराज यत्तच्छृणु समाहितः ॥ ००५ ॥

व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ००६ ॥

अस्मि.ल्लोके रौक्मिणेय तथामुष्मिंश्च पुत्रक ।
ब्राह्मणप्रमुखं सौख्यं न मेऽत्रास्ति विचारणा ॥ ००७ ॥

ब्राह्मणप्रमुखं वीर्यमायुः कीर्तिर्यशो बलम् ।
लोका लोकेश्वराश्चैव सर्वे ब्राह्मणपूर्वकाः ॥ ००८ ॥

तत्कथं नाद्रियेयं वै ईश्वरोऽस्मीति पुत्रक ।
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान्प्रति ॥ ००९ ॥

ब्राह्मणो हि महद्भूतमस्मि.ल्लोके परत्र च ।
भस्म कुर्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः ॥ ०१० ॥

अन्यानपि सृजेयुश्च लोका.ल्लोकेश्वरांस्तथा ।
कथं तेषु न वर्तेय सम्यग्ज्ञानात्सुतेजसः ॥ ०११ ॥

अवसन्मद्गृहे तात ब्राह्मणो हरिपिङ्गलः ।
चीरवासा बिल्वदण्डी दीर्घश्मश्रुनखादिमान् ॥ ०१२ ॥

दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि ॥ ०१२ ॥

स स्म सञ्चरते लोकान्ये दिव्या ये च मानुषाः ।
इमा गाथा गायमानश्चत्वरेषु सभासु च ॥ ०१३ ॥

दुर्वाससं वासयेत्को ब्राह्मणं सत्कृतं गृहे ।
परिभाषां च मे श्रुत्वा को नु दद्यात्प्रतिश्रयम् ॥ ०१४ ॥

यो मां कश्चिद्वासयेत न स मां कोपयेदिह ॥ ०१४ ॥

तं स्म नाद्रियते कश्चित्ततोऽहं तमवासयम् ।
स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा ।
एकदा स्माल्पकं भुङ्क्ते न वैति च पुनर्गृहान् ॥ ०१६ ॥

अकस्माच्च प्रहसति तथाकस्मात्प्ररोदिति ।
न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा ॥ ०१७ ॥

सोऽस्मदावसथं गत्वा शय्याश्चास्तरणानि च ।
कन्याश्चालङ्कृता दग्ध्वा ततो व्यपगतः स्वयम् ॥ ०१८ ॥

अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः ।
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ॥ ०१९ ॥

सदैव तु मया तस्य चित्तज्ञेन गृहे जनः ।
सर्वाण्येवान्नपानानि भक्ष्याश्चोच्चावचास्तथा ॥ ०२० ॥

भवन्तु सत्कृतानीति पूर्वमेव प्रचोदितः ॥ ०२० ॥

ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम् ।
तद्भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत् ॥ ०२१ ॥

क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह ॥ ०२१ ॥

अविमृश्यैव च ततः कृतवानस्मि तत्तथा ।
तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम् ॥ ०२२ ॥

स ददर्श तदाभ्याशे मातरं ते शुभाननाम् ।
तामपि स्मयमानः स पायसेनाभ्यलेपयत्  ॥ ०२३  ॥

मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् ।
तमारुह्य रथं चैव निर्ययौ स गृहान्मम  ॥ ०२४  ॥

अग्निवर्णो ज्वलन्धीमान्स द्विजो रथधुर्यवत् ।
प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः  ॥ ०२५  ॥

न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा ।
ततः स राजमार्गेण महता निर्ययौ बहिः  ॥ ०२६  ॥

तद्दृष्ट्वा महदाश्चर्यं दाशार्हा जातमन्यवः ।
तत्राजल्पन्मिथः केचित्समाभाष्य परस्परम्  ॥ ०२७  ॥

ब्राह्मणा एव जायेरन्नान्यो वर्णः कथञ्चन ।
को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह  ॥ ०२८  ॥

आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरं विषम् ।
ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः  ॥ ०२९  ॥

तस्मिन्व्रजति दुर्धर्षे प्रास्खलद्रुक्मिणी पथि ।
तां नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत्  ॥ ०३०  ॥

ततः परमसङ्क्रुद्धो रथात्प्रस्कन्द्य स द्विजः ।
पदातिरुत्पथेनैव प्राधावद्दक्षिणामुखः  ॥ ०३१  ॥

तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् ।
तथैव पायसादिग्धः प्रसीद भगवन्निति  ॥ ०३२  ॥

ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह ।

जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ॥ ०३३ ॥

न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत ।
प्रीतोऽस्मि तव गोविन्द वृणु कामान्यथेप्सितान् ॥ ०३४ ॥

प्रसन्नस्य च मे तात पश्य व्युष्टिर्यथाविधा ॥ ०३४ ॥

यावदेव मनुष्याणामन्ने भावो भविष्यति ।
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति ॥ ०३५ ॥

यावच्च पुण्या लोकेषु त्वयि कीर्तिर्भविष्यति ।
त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे ॥ ०३६ ॥

सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन ॥ ०३६ ॥

यत्ते भिन्नं च दग्धं च यच्च किञ्चिद्विनाशितम् ।
सर्वं तथैव द्रष्टासि विशिष्टं वा जनार्दन ॥ ०३७ ॥

यावदेतत्प्रलिप्तं ते गात्रेषु मधुसूदन ।
अतो मृत्युभयं नास्ति यावदिच्छा तवाच्युत ॥ ०३८ ॥

न तु पादतले लिप्ते कस्मात्ते पुत्रकाद्य वै ।
नैतन्मे प्रियमित्येव स मां प्रीतोऽब्रवीत्तदा ॥ ०३९ ॥

इत्युक्तोऽहं शरीरं स्वमपश्यं श्रीसमायुतम् ॥ ०३९ ॥

रुक्मिणीं चाब्रवीत्प्रीतः सर्वस्त्रीणां वरं यशः ।
कीर्तिं चानुत्तमां लोके समवाप्स्यसि शोभने ॥ ०४० ॥

न त्वां जरा वा रोगो वा वैवर्ण्यं चापि भामिनि ।
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि ॥ ०४१ ॥

षोडशानां सहस्राणां वधूनां केशवस्य ह ।
वरिष्ठा सहलोक्या च केशवस्य भविष्यसि ॥ ०४२ ॥

तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत् ।
प्रस्थितः सुमहातेजा दुर्वासा वह्निवज्ज्वलन् ॥ ०४३ ॥

एषैव ते बुद्धिरस्तु ब्राह्मणान्प्रति केशव ।
इत्युक्त्वा स तदा पुत्र तत्रैवान्तरधीयत ॥ ०४४ ॥

तस्मिन्नन्तर्हिते चाहमुपांशुव्रतमादिशम् ।
यत्किञ्चिद्ब्राह्मणो ब्रूयात्सर्वं कुर्यामिति प्रभो ॥ ०४५ ॥

एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक ।
ततः परमहृष्टात्मा प्राविशं गृहमेव च ॥ ०४६ ॥

प्रविष्टमात्रश्च गृहे सर्वं पश्यामि तन्नवम् ।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक ॥ ०४७ ॥

ततोऽहं विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढम् ।
अपूजयं च मनसा रौक्मिणेय द्विजं तदा ॥ ०४८ ॥

इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ ।
माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा ॥ ०४९ ॥

तथा त्वमपि कौन्तेय ब्राह्मणान्सततं प्रभो ।
पूजयस्व महाभागान्वाग्भिर्दानैश्च नित्यदा ॥ ०५० ॥

एवं व्युष्टिमहं प्राप्तो ब्राह्मणानां प्रसादजाम् ।
यच्च मामाह भीष्मोऽयं तत्सत्यं भरतर्षभ ॥ ०५१ ॥

# ईश्वरप्रशंसा

## अध्याय १४५

युधिष्ठिर उवाच ॥

दुर्वाससः प्रसादात्ते यत्तदा मधुसूदन ।
अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि ॥ ००१ ॥

महाभाग्यं च यत्तस्य नामानि च महात्मनः ।
तत्त्वतो ज्ञातुमिच्छामि सर्वं मतिमतां वर ॥ ००२ ॥

वासुदेव उवाच ॥

हन्त ते कथयिष्यामि नमस्कृत्वा कपर्दिने ।
यदवाप्तं महाराज श्रेयो यच्चार्जितं यशः ॥ ००३ ॥

प्रयतः प्रातरुत्थाय यदधीये विशां पते ।
प्राञ्जलिः शतरुद्रीयं तन्मे निगदतः शृणु ॥ ००४ ॥

प्रजापतिस्तत्ससृजे तपसोऽन्ते महातपाः ।
शङ्करस्त्वसृजत्तात प्रजाः स्थावरजङ्गमाः ॥ ००५ ॥

नास्ति किञ्चित्परं भूतं महादेवाद्विशां पते ।
इह त्रिष्वपि लोकेषु भूतानां प्रभवो हि सः ॥ ००६ ॥

न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः ।

न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥ ००७ ॥

गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसञ्ज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ॥ ००८ ॥

घोरं च निनदं तस्य पर्जन्यनिनदोपमम् ।
श्रुत्वा विदीर्येद्धृदयं देवानामपि संयुगे ॥ ००९ ॥

यांश्च घोरेण रूपेण पश्येत्क्रुद्धः पिनाकधृक् ।
न सुरा नासुरा लोके न गन्धर्वा न पन्नगाः ॥ ०१० ॥

कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः ॥ ०१० ॥

प्रजापतेश्च दक्षस्य यजतो वितते क्रतौ ।
विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा ॥ ०११ ॥

धनुषा बाणमुत्सृज्य सघोषं विननाद च ॥ ०११ ॥

ते न शर्म कुतः शान्तिं विषादं लेभिरे सुराः ।
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे ॥ ०१२ ॥

तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः ।
बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः ॥ ०१३ ॥

आपश्चुक्षुभिरे चैव चकम्पे च वसुंधरा ।
व्यद्रवन्गिरयश्चापि द्यौः पफाल च सर्वशः ॥ ०१४ ॥

अन्धेन तमसा लोकाः प्रावृता न चकाशिरे ।
प्रनष्टा ज्योतिषां भाश्च सह सूर्येण भारत ॥ ०१५ ॥

भृशं भीतास्ततः शान्तिं चक्रुः स्वस्त्ययनानि च ।

ऋषयः सर्वभूतानामात्मनश्च हितैषिणः ॥ ०१६ ॥

ततः सोऽभ्यद्रवद्देवान्क्रुद्धो रौद्रपराक्रमः ।
भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् ॥ ०१७ ॥

पूषाणं चाभिदुद्राव परेण वपुषान्वितः ।
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ ०१८ ॥

ततः प्रणेमुर्देवास्ते वेपमानाः स्म शङ्करम् ।
पुनश्च संदधे रुद्रो दीप्तं सुनिशितं शरम् ॥ ०१९ ॥

रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः ।
ततः प्रसादयामासुः शर्वं ते विबुधोत्तमाः ॥ ०२० ॥

जेपुश्च शतरुद्रीयं देवाः कृत्वाञ्जलिं ततः ।
संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः ॥ ०२१ ॥

रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन् ।
भयेन त्रिदशा राजञ्शरणं च प्रपेदिरे ॥ ०२२ ॥

तेन चैवातिकोपेन स यज्ञः संधितोऽभवत् ।
यद्यच्चापि हतं तत्र तत्तथैव प्रदीयते ॥ ०२३ ॥

असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि ।
आयसं राजतं चैव सौवर्णमपरं तथा ॥ ०२४ ॥

नाशकत्तानि मघवा भेत्तुं सर्वायुधैरपि ।
अथ सर्वेऽमरा रुद्रं जग्मुः शरणमर्दिताः ॥ ०२५ ॥

तत ऊचुर्महात्मानो देवाः सर्वे समागताः ।
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु ॥ ०२६ ॥

जहि दैत्यान्सह पुरैर्लोकांस्त्रायस्व मानद ॥ ०२६ ॥

स तथोक्तस्तथेत्युक्त्वा विष्णुं कृत्वा शरोत्तमम् ।
शल्यमग्निं तथा कृत्वा पुङ्खं वैवस्वतं यमम् ॥ ०२७ ॥

वेदान्कृत्वा धनुः सर्वाञ्ज्यां च सावित्रिमुत्तमाम् ॥ ०२७ ॥

देवान्रथवरं कृत्वा विनियुज्य च सर्वशः ।
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः ॥ ०२८ ॥

शरेणादित्यवर्णेन कालाग्निसमतेजसा ।
तेऽसुराः सपुरास्तत्र दग्धा रुद्रेण भारत ॥ ०२९ ॥

तं चैवाङ्कगतं दृष्ट्वा बालं पञ्चशिखं पुनः ।
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्तदा ॥ ०३० ॥

असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः ।
सवज्रं स्तम्भयामास तं बाहुं परिघोपमम् ॥ ०३१ ॥

न संबुबुधिरे चैनं देवास्तं भुवनेश्वरम् ।
सप्रजापतयः सर्वे तस्मिन्मुमुहुरीश्वरे ॥ ०३२ ॥

ततो ध्यात्वाथ भगवान्ब्रह्मा तममितौजसम् ।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम् ॥ ०३३ ॥

ततः प्रसादयामासुरुमां रुद्रं च ते सुराः ।
बभूव स तदा बाहुर्बलहन्तुर्यथा पुरा ॥ ०३४ ॥

स चापि ब्राह्मणो भूत्वा दुर्वासा नाम वीर्यवान् ।
द्वारवत्यां मम गृहे चिरं कालमुपावसत् ॥ ०३५ ॥

विप्रकारान्प्रयुङ्क्ते स्म सुबहून्मम वेश्मनि ।
तानुदारतया चाहमक्षमं तस्य दुःसहम्  ॥ ०३६  ॥

स देवेन्द्रश्च वायुश्च सोऽश्विनौ स च विद्युतः ।
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः  ॥ ०३७  ॥

स कालः सोऽन्तको मृत्युः स तमो रात्र्यहानि च ।
मासार्धमासा ऋतवः संध्ये संवत्सरश्च सः  ॥ ०३८  ॥

स धाता स विधाता च विश्वकर्मा स सर्ववित् ।
नक्षत्राणि दिशश्चैव प्रदिशोऽथ ग्रहास्तथा  ॥ ०३९  ॥

विश्वमूर्तिरमेयात्मा भगवानमितद्युतिः  ॥ ०३९  ॥

एकधा च द्विधा चैव बहुधा च स एव च ।
शतधा सहस्रधा चैव तथा शतसहस्रधा  ॥ ०४०  ॥

ईदृशः स महादेवो भूयश्च भगवानतः ।
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि  ॥ ०४१  ॥

---

# अध्याय १४६

वासुदेव उवाच  ॥

युधिष्ठिर महाबाहो महाभाग्यं महात्मनः ।
रुद्राय बहुरूपाय बहुनाम्ने निबोध मे  ॥ ००१  ॥

वदन्त्यग्निं महादेवं तथा स्थाणुं महेश्वरम् ।
एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा ॥ ००२ ॥

द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः ।
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥ ००३ ॥

उग्रा घोरा तनूर्यास्य सोऽग्निर्विद्युत्स भास्करः ।
शिवा सौम्या च या तस्य धर्मस्त्वापोऽथ चन्द्रमाः ॥ ००४ ॥

आत्मनोऽर्धं तु तस्याग्निरुच्यते भरतर्षभ ।
ब्रह्मचर्यं चरत्येष शिवा यास्य तनुस्तथा ॥ ००५ ॥

यास्य घोरतमा मूर्तिर्जगत्संहरते तया ।
ईश्वरत्वान्महत्त्वाच्च महेश्वर इति स्मृतः ॥ ००६ ॥

यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ ००७ ॥

देवानां सुमहान्यच्च यच्चास्य विषयो महान् ।
यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः ॥ ००८ ॥

समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मभिः ।
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ॥ ००९ ॥

दहत्यूर्ध्वं स्थितो यच्च प्राणोत्पत्तिः स्थितिश्च यत् ।
स्थिरलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः ॥ ०१० ॥

यदस्य बहुधा रूपं भूतं भव्यं भवत्तथा ।
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ॥ ०११ ॥

धूम्रं रूपं च यत्तस्य धूर्जटीत्यत उच्यते ।

विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ॥ ०१२ ॥

सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोऽपि वा ।
चक्षुषः प्रभवस्तेजो नास्त्यन्तोऽथास्य चक्षुषाम् ॥ ०१३ ॥

सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥ ०१४ ॥

नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम् ।
महयन्त्यस्य लोकाश्च महेश्वर इति स्मृतः ॥ ०१५ ॥

विग्रहं पूजयेद्यो वै लिङ्गं वापि महात्मनः ।
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥ ०१६ ॥

ऋषयश्चापि देवाश्च गन्धर्वाप्सरसस्तथा ।
लिङ्गमेवार्चयन्ति स्म यत्तदूर्ध्वं समास्थितम् ॥ ०१७ ॥

पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः ।
सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः ॥ ०१८ ॥

एष एव श्मशानेषु देवो वसति नित्यशः ।
यजन्ते तं जनास्तत्र वीरस्थाननिषेविणम् ॥ ०१९ ॥

विषमस्थः शरीरेषु स मृत्युः प्राणिनामिह ।
स च वायुः शरीरेषु प्राणोऽपानः शरीरिणाम् ॥ ०२० ॥

तस्य घोराणि रूपाणि दीप्तानि च बहूनि च ।
लोके यान्यस्य पूज्यन्ते विप्रास्तानि विदुर्बुधाः ॥ ०२१ ॥

नामधेयानि वेदेषु बहून्यस्य यथार्थतः ।
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मभिस्तथा ॥ ०२२ ॥

वेदे चास्य विदुर्विप्राः शतरुद्रीयमुत्तमम् ।
व्यासादनन्तरं यच्चाप्युपस्थानं महात्मनः ॥ ०२३ ॥

प्रदाता सर्वलोकानां विश्वं चाप्युच्यते महत् ।
ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा ऋषयोऽपरे ॥ ०२४ ॥

प्रथमो ह्येष देवानां मुखादग्निरजायत ।
ग्रहैर्बहुविधैः प्राणान्संरुद्धानुत्सृजत्यपि ॥ ०२५ ॥

स मोचयति पुण्यात्मा शरण्यः शरणागतान् ।
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ॥ ०२६ ॥

स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः ।
शक्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ॥ ०२७ ॥

स एवाभ्यधिको नित्यं त्रैलोक्यस्य शुभाशुभे ।
ऐश्वर्याच्चैव कामानामीश्वरः पुनरुच्यते ॥ ०२८ ॥

महेश्वरश्च लोकानां महतामीश्वरश्च सः ।
बहुभिर्विविधै रूपैर्विश्वं व्याप्तमिदं जगत् ॥ ०२९ ॥

तस्य देवस्य यद्वक्त्रं समुद्रे वडवामुखम् ॥ ०२९ ॥

# धर्मनिर्णयः

## अध्याय १४७

वैशंपायन उवाच ॥

इत्युक्तवति वाक्यं तु कृष्णे देवकिनन्दने ।
भीष्मं शांतनवं भूयः पर्यपृच्छद्युधिष्ठिरः ॥ ००१ ॥

निर्णये वा महाबुद्धे सर्वधर्मभृतां वर ।
प्रत्यक्षमागमो वेति किं तयोः कारणं भवेत् ॥ ००२ ॥

भीष्म उवाच ॥

नास्त्यत्र संशयः कश्चिदिति मे वर्तते मतिः ।
श्रृणु वक्ष्यामि ते प्राज्ञ सम्यक्त्वमनुपृच्छसि ॥ ००३ ॥

संशयः सुगमो राजन्निर्णयस्त्वत्र दुर्गमः ।
दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनम् ॥ ००४ ॥

प्रत्यक्षं कारणं दृष्टं हेतुकाः प्राज्ञमानिनः ।
नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च ॥ ००५ ॥

तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ॥ ००५ ॥

अथ चेन्मन्यसे चैकं कारणं किं भवेदिति ।
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च ॥ ००६ ॥

प्राणयात्रामनेकां च कल्पयानेन भारत ॥ ००६ ॥

तत्परेणैव नान्येन शक्यं ह्येतत्तु कारणम् ।

हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम्  ॥ ००७  ॥

ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते  ॥ ००७  ॥

तत्त्वेनागमनं राजन्हेत्वन्तगमनं तथा ।
अग्राह्यमनिबद्धं च वाचः संपरिवर्जनम्  ॥ ००८  ॥

युधिष्ठिर उवाच  ॥

प्रत्यक्षं लोकतः सिद्धं लोकाश्चागमपूर्वकाः ।
शिष्टाचारो बहुविधो ब्रूहि तन्मे पितामह  ॥ ००९  ॥

भीष्म उवाच  ॥

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था यत्नैरपि कृता कालेन परिभिद्यते  ॥ ०१०  ॥

अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर  ॥ ०११  ॥

अवृत्त्या ये च भिन्दन्ति श्रुतत्यागपरायणाः ।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः  ॥ ०१२  ॥

अतृप्यन्तस्तु साधूनां य एवागमबुद्धयः ।
परमित्येव संतुष्टास्तानुपास्स्व च पृच्छ च  ॥ ०१३  ॥

कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ ।
धर्म इत्येव संबुद्धास्तानुपास्स्व च पृच्छ च  ॥ ०१४  ॥

न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायकर्मभिः ।
आचारः कारणं चैव धर्मश्चैव त्रयं पुनः  ॥ ०१५  ॥

युधिष्ठिर उवाच ॥

पुनरेवेह मे बुद्धिः संशये परिमुह्यते ।
अपारे मार्गमाणस्य परं तीरमपश्यतः ॥ ०१६ ॥

वेदाः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते चैषां धर्मश्चैकस्त्रयं कथम् ॥ ०१७ ॥

भीष्म उवाच ॥

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ॥ ०१८ ॥

एक एवेति जानीहि त्रिधा तस्य प्रदर्शनम् ।
पृथक्त्वे चैव मे बुद्धिस्त्रयाणामपि वै तथा ॥ ०१९ ॥

उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर ।
जिज्ञासा तु न कर्तव्या धर्मस्य परितर्कणात् ॥ ०२० ॥

सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ।
अन्धो जड इवाशङ्को यद्ब्रवीमि तदाचर ॥ ०२१ ॥

अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो सेवस्व धर्म एष सनातनः ॥ ०२२ ॥

ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो स्वर्गस्यैते हि देशिकाः ॥ ०२३ ॥

प्रमाणमप्रमाणं वै यः कुर्यादबुधो नरः ।
न स प्रमाणतामर्हो विवादजननो हि सः ॥ ०२४ ॥

ब्राह्मणानेव सेवस्व सत्कृत्य बहुमन्य च ।
एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान्  ॥ ०२५  ॥

---

# अध्याय १४८

युधिष्ठिर उवाच  ॥

ये च धर्ममसूयन्ति ये चैनं पर्युपासते ।
ब्रवीतु भगवानेतत्क्क ते गच्छन्ति तादृशाः  ॥ ००१  ॥

भीष्म उवाच  ॥

रजसा तमसा चैव समवस्तीर्णचेतसः ।
नरकं प्रतिपद्यन्ते धर्मविद्वेषिणो नराः  ॥ ००२  ॥

ये तु धर्मं महाराज सततं पर्युपासते ।
सत्यार्जवपराः सन्तस्ते वै स्वर्गभुजो नराः  ॥ ००३  ॥

धर्म एव रतिस्तेषामाचार्योपासनाद्भवेत् ।
देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते  ॥ ००४  ॥

मनुष्या यदि वा देवाः शरीरमुपताप्य वै ।
धर्मिणः सुखमेधन्ते लोभद्वेषविवर्जिताः  ॥ ००५  ॥

प्रथमं ब्रह्मणः पुत्रं धर्ममाहुर्मनीषिणः ।
धर्मिणः पर्युपासन्ते फलं पक्कमिवाशयः  ॥ ००६  ॥

युधिष्ठिर उवाच ॥

असतां कीदृशं रूपं साधवः किं च कुर्वते ।
ब्रवीतु मे भवानेतत्सन्तोऽसन्तश्च कीदृशाः ॥ ००७ ॥

भीष्म उवाच ॥

दुराचाराश्च दुर्धर्षा दुर्मुखाश्चाप्यसाधवः ।
साधवः शीलसंपन्नाः शिष्टाचारस्य लक्षणम् ॥ ००८ ॥

राजमार्गे गवां मध्ये गोष्ठमध्ये च धर्मिणः ।
नोपसेवन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ॥ ००९ ॥

पञ्चानामशनं दत्त्वा शेषमश्नन्ति साधवः ।
न जल्पन्ति च भुञ्जाना न निद्रान्त्यार्द्रपाणयः ॥ ०१० ॥

चित्रभानुमनड्वाहं देवं गोष्ठं चतुष्पथम् ।
ब्राह्मणं धार्मिकं चैत्यं ते कुर्वन्ति प्रदक्षिणम् ॥ ०११ ॥

वृद्धानां भारतप्तानां स्त्रीणां बालातुरस्य च ।
ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ते ॥ ०१२ ॥

अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
तथा शरणकामानां गोप्ता स्यात्स्वागतप्रदः ॥ ०१३ ॥

सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ।
नान्तरा भोजनं दृष्टमुपवासविधिर्हि सः ॥ ०१४ ॥

होमकाले यथा वह्निः कालमेव प्रतीक्षते ।
ऋतुकाले तथा नारी ऋतुमेव प्रतीक्षते ॥ ०१५ ॥

न चान्यां गच्छते यस्तु ब्रह्मचर्यं हि तत्स्मृतम् ॥ ०१५ ॥

अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः ।
तस्माद्गोब्राह्मणं नित्यमर्चयेत यथाविधि ॥ ०१६ ॥

यजुषा संस्कृतं मांसमुपभुञ्जन्न दुष्यति ।
पृष्ठमांसं वृथामांसं पुत्रमांसं च तत्समम् ॥ ०१७ ॥

स्वदेशे परदेशे वाप्यतिथिं नोपवासयेत् ।
कर्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत् ॥ ०१८ ॥

गुरुभ्य आसनं देयमभिवाद्याभिपूज्य च ।
गुरूनभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥ ०१९ ॥

वृद्धान्नातिवदेज्जातु न च संप्रेषयेदपि ।
नासीनः स्यात्स्थितेष्वेवमायुरस्य न रिष्यते ॥ ०२० ॥

न नग्नामीक्षते नारीं न विद्वान्पुरुषानपि ।
मैथुनं सततं गुप्तमाहारं च समाचरेत् ॥ ०२१ ॥

तीर्थानां गुरवस्तीर्थं शुचीनां हृदयं शुचि ।
दर्शनानां परं ज्ञानं संतोषः परमं सुखम् ॥ ०२२ ॥

सायं प्रातश्च वृद्धानां शृणुयात्पुष्कला गिरः ।
श्रुतमाप्नोति हि नरः सततं वृद्धसेवया ॥ ०२३ ॥

स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
यच्छेद्वाङ्मनसी नित्यमिन्द्रियाणां च विभ्रमम् ॥ ०२४ ॥

संस्कृतं पायसं नित्यं यवागूं कृसरं हविः ।
अष्टकाः पितृदैवत्या वृद्धानामभिपूजनम् ॥ ०२५ ॥

श्मश्रुकर्मणि मङ्गल्यं क्षुतानामभिनन्दनम् ।
व्याधितानां च सर्वेषामायुषः प्रतिनन्दनम्  ॥ ०२६  ॥

न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरम् ।
त्वङ्कारो वा वधो वेति विद्वत्सु न विशिष्यते  ॥ ०२७  ॥

अवराणां समानानां शिष्याणां च समाचरेत्  ॥ ०२७  ॥

पापमाचक्षते नित्यं हृदयं पापकर्मिणाम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने  ॥ ०२८  ॥

ज्ञानपूर्वं कृतं कर्म च्छादयन्ते ह्यसाधवः ।
न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः  ॥ ०२९  ॥

पापेनाभिहतः पापः पापमेवाभिजायते  ॥ ०२९  ॥

यथा वार्धुषिको वृद्धिं देहभेदे प्रतीक्षते ।
धर्मेणापिहितं पापं धर्ममेवाभिवर्धयेत्  ॥ ०३०  ॥

यथा लवणमम्भोभिराप्लुतं प्रविलीयते ।
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति  ॥ ०३१  ॥

तस्मात्पापं न गूहेत गूहमानं विवर्धते ।
कृत्वा तु साधुष्वाख्येयं ते तत्प्रशमयन्त्युत  ॥ ०३२  ॥

आशया सञ्चितं द्रव्यं यत्काले नोपभुज्यते ।
अन्ये चैतत्प्रपद्यन्ते वियोगे तस्य देहिनः  ॥ ०३३  ॥

मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात्सर्वाणि भूतानि धर्ममेव समासते  ॥ ०३४  ॥

एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् ।
धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ॥ ०३५ ॥

अर्चेद्देवानदम्भेन सेवेतामायया गुरून् ।
निधिं निदध्यात्पारत्र्यं यात्रार्थं दानशब्दितम् ॥ ०३६ ॥

---

# युधिष्ठिरप्रश्नः

## अध्याय १४९

युधिष्ठिर उवाच ॥

नाभागधेयः प्राप्नोति धनं सुबलवानपि ।
भागधेयान्वितस्त्वर्थान्कृशो बालश्च विन्दति ॥ ००१ ॥

नालाभकाले लभते प्रयत्नेऽपि कृते सति ।
लाभकालेऽप्रयत्नेन लभते विपुलं धनम् ॥ ००२ ॥

कृतयत्नाफलाश्चैव दृश्यन्ते शतशो नराः ॥ ००२ ॥

यदि यत्नो भवेन्मर्त्यः स सर्वं फलमाप्नुयात् ।
नालभ्यं चोपलभ्येत नृणां भरतसत्तम ॥ ००३ ॥

यदा प्रयत्नं कृतवान्दृश्यते ह्यफलो नरः ।
मार्गन्नयशतैरर्थानमार्गंश्चापरः सुखी ॥ ००४ ॥

अकार्यमसकृत्कृत्वा दृश्यन्ते ह्यधना नराः ।
धनयुक्तास्त्वधर्मस्था दृश्यन्ते चापरे जनाः ॥ ००५ ॥

अधीत्य नीतिं यस्माच्च नीतियुक्तो न दृश्यते ।
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना ॥ ००६ ॥

विद्यायुक्तो ह्यविद्यश्च धनवान्दुर्गतस्तथा ॥ ००६ ॥

यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात् ।
न विद्वान्विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ॥ ००७ ॥

यथा पिपासां जयति पुरुषः प्राप्य वै जलम् ।
दृष्टार्थो विद्ययाप्येवमविद्यां प्रजहेन्नरः ॥ ००८ ॥

नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ००९ ॥

भीष्म उवाच ॥

ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति ॥ ०१० ॥

दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ ०११ ॥

तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
स्वाभाषी प्रियकृच्छुद्धः सर्वसत्त्वाविहिंसकः ॥ ०१२ ॥

यदा प्रमाणप्रभवः स्वभावश्च सुखासुखे ।
मशकीटपिपीलानां स्थिरो भव युधिष्ठिर ॥ ०१३ ॥

# धर्मसंशयः

## अध्याय १५०

भीष्म उवाच ॥

कार्यते यच्च क्रियते सच्चासच्च कृतं ततः ।
तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् ॥ ००१ ॥

काल एवात्र कालेन निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्मार्थेषु प्रवर्तते ॥ ००२ ॥

यदा त्वस्य भवेद्बुद्धिर्धर्म्या चार्थप्रदर्शिनी ।
तदाश्वसीत धर्मात्मादृढबुद्धिर्न विश्वसेत् ॥ ००३ ॥

एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम् ।
कालयुक्तोऽप्युभयविच्छेषमर्थं समाचरेत् ॥ ००४ ॥

यथा ह्युपस्थितैश्वर्याः पूजयन्ते नरा नरान् ।
एवमेवात्मनात्मानं पूजयन्तीह धार्मिकाः ॥ ००५ ॥

न ह्यधर्मतया धर्मं दद्यात्कालः कथञ्चन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ ००६ ॥

स्प्रष्टुमप्यसमर्थौ हि ज्वलन्तमिव पावकम् ।
अधर्मः सततो धर्मं कालेन परिरक्षितम् ॥ ००७ ॥

कार्यावेतौ हि कालेन धर्मो हि विजयावहः ।
त्रयाणामपि लोकानामालोककरणो भवेत्  ॥ ००८  ॥

तत्र कश्चिन्नयेत्प्राज्ञो गृहीत्वैव करे नरम् ।
उह्यमानः स धर्मेण धर्मे बहुभयच्छले  ॥ ००९  ॥

---

# वंशानुकीर्तनम्

## अध्याय १५१

युधिष्ठिर उवाच  ॥

किं श्रेयः पुरुषस्येह किं कुर्वन्सुखमेधते ।
विपाप्मा च भवेत्केन किं वा कल्मषनाशनम्  ॥ ००१  ॥

भीष्म उवाच  ॥

अयं दैवतवंशो वै ऋषिवंशसमन्वितः ।
द्विसंध्यं पठितः पुत्र कल्मषापहरः परः  ॥ ००२  ॥

देवासुरगुरुर्देवः सर्वभूतनमस्कृतः ।
अचिन्त्योऽथाप्यनिर्देश्यः सर्वप्राणो ह्ययोनिजः  ॥ ००३  ॥

पितामहो जगन्नाथः सावित्री ब्रह्मणः सती ।
वेदभूरथ कर्ता च विष्णुर्नारायणः प्रभुः  ॥ ००४  ॥

उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा ।

विशाखो हुतभुग्वायुश्चन्द्रादित्यौ प्रभाकरौ ॥ ००५ ॥

शक्रः शचीपतिर्देवो यमो धूमोर्णया सह ।
वरुणः सह गौर्या च सह ऋद्ध्या धनेश्वरः ॥ ००६ ॥

सौम्या गौः सुरभिर्देवी विश्रवाश्च महानृषिः ।
षड्कालः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणाः ॥ ००७ ॥

वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा ।
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ ००८ ॥

तुम्बरुश्चित्रसेनश्च देवदूतश्च विश्रुतः ।
देवकन्या महाभागा दिव्याश्चाप्सरसां गणाः ॥ ००९ ॥

उर्वशी मेनका रम्भा मिश्रकेशी अलम्बुषा ।
विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा ॥ ०१० ॥

आदित्या वसवो रुद्राः साश्विनः पितरोऽपि च ।
धर्मः सत्यं तपो दीक्षा व्यवसायः पितामहः ॥ ०११ ॥

शर्वर्यो दिवसाश्चैव मारीचः कश्यपस्तथा ।
शुक्रो बृहस्पतिर्भौमो बुधो राहुः शनैश्चरः ॥ ०१२ ॥

नक्षत्राण्यृतवश्चैव मासाः संध्याः सवत्सराः ।
वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा ॥ ०१३ ॥

शतद्रूश्च विपाशा च चन्द्रभागा सरस्वती ।
सिन्धुश्च देविका चैव पुष्करं तीर्थमेव च ॥ ०१४ ॥

गङ्गा महानदी चैव कपिला नर्मदा तथा ।
कम्पुना च विशल्या च करतोयाम्बुवाहिनी ॥ ०१५ ॥

सरयूर्गण्डकी चैव लोहित्यश्च महानदः ।
ताम्रारुणा वेत्रवती पर्णाशा गौतमी तथा ॥ ०१६ ॥

गोदावरी च वेण्णा च कृष्णवेणा तथाद्रिजा ।
दृषद्वती च कावेरी वङ्क्षुर्मन्दाकिनी तथा ॥ ०१७ ॥

प्रयागं च प्रभासं च पुण्यं नैमिषमेव च ।
तच्च विश्वेश्वरस्थानं यत्र तद्विमलं सरः ॥ ०१८ ॥

पुण्यतीर्थैश्च कलिलं कुरुक्षेत्रं प्रकीर्तितम् ।
सिन्धूत्तमं तपोदानं जम्बूमार्गमथापि च ॥ ०१९ ॥

हिरण्वती वितस्ता च तथैवेक्षुमती नदी ।
वेदस्मृतिर्वेदसिनी मलवासाश्च नद्यपि ॥ ०२० ॥

भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च ।
ऋषिकुल्यास्तथा मेध्या नदी चित्रपथा तथा ॥ ०२१ ॥

कौशिकी यमुना सीता तथा चर्मण्वती नदी ।
नदी भीमरथी चैव बाहुदा च महानदी ॥ ०२२ ॥

महेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती ॥ ०२२ ॥

नन्दा चापरनन्दा च तथा तीर्थं महाह्रदम् ।
गयाथ फल्गुतीर्थं च धर्मारण्यं सुरैर्वृतम् ॥ ०२३ ॥

तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् ।
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् ॥ ०२४ ॥

हिमवान्पर्वतश्चैव दिव्यौषधिसमन्वितः ।

विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः ॥ ०२५ ॥

मेरुर्महेन्द्रो मलयः श्वेतश्च रजताचितः ।
शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा ॥ ०२६ ॥

चित्रकूटोऽञ्जनाभश्च पर्वतो गन्धमादनः ।
पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः ॥ ०२७ ॥

दिशश्च विदिशश्चैव क्षितिः सर्वे महीरुहाः ॥ ०२७ ॥

विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा ।
पान्तु वः सततं देवाः कीर्तिताकीर्तिता मया ॥ ०२८ ॥

कीर्तयानो नरो ह्येतान्मुच्यते सर्वकिल्बिषैः ।
स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात् ॥ ०२९ ॥

सर्वसङ्करपापेभ्यो देवतास्तवनन्दकः ॥ ०२९ ॥

देवतानन्तरं विप्रांस्तपःसिद्धांस्तपोधिकान् ।
कीर्तितान्कीर्तयिष्यामि सर्वपापप्रमोचनान् ॥ ०३० ॥

यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा ।
भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः ॥ ०३१ ॥

बर्ही च गुणसंपन्नः प्राचीं दिशमुपाश्रिताः ॥ ०३१ ॥

भद्रां दिशं महाभागा उल्मुचुः प्रमुचुस्तथा ।
मुमुचुश्च महाभागः स्वस्त्यात्रेयश्च वीर्यवान् ॥ ०३२ ॥

मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् ।
दृढायुश्चोर्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ॥ ०३३ ॥

पश्चिमां दिशमाश्रित्य य एधन्ते निबोध तान् ।
उषद्गुः सह सोदर्यैः परिव्याधश्च वीर्यवान्  ॥ ०३४  ॥

ऋषिर्दीर्घतमाश्चैव गौतमः कश्यपस्तथा ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः  ॥ ०३५  ॥

अत्रेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः  ॥ ०३५  ॥

उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान् ।
अत्रिर्वसिष्ठः शक्तिश्च पाराशर्यश्च वीर्यवान्  ॥ ०३६  ॥

विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च ।
ऋचीकपौत्रो रामश्च ऋषिरौद्दालकिस्तथा  ॥ ०३७  ॥

श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा ।
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च  ॥ ०३८  ॥

लोमशो नाचिकेतश्च लोमहर्षण एव च ।
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा  ॥ ०३९  ॥

एष वै समवायस्ते ऋषिदेवसमन्वितः ।
आद्यः प्रकीर्तितो राजन्सर्वपापप्रमोचनः  ॥ ०४०  ॥

नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्यवान् ।
धुन्धुमारो दिलीपश्च सगरश्च प्रतापवान्  ॥ ०४१  ॥

कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा ।
दुःषन्तो भरतश्चैव चक्रवर्ती महायशाः  ॥ ०४२  ॥

यवनो जनकश्चैव तथा दृढरथो नृपः ।

रघुर्नरवरश्चैव तथा दशरथो नृपः ॥ ०४३ ॥

रामो राक्षसहा वीरः शशबिन्दुर्भगीरथः ।
हरिश्चन्द्रो मरुत्तश्च जह्नुर्जाह्नविसेविता ॥ ०४४ ॥

महोदयो ह्यलर्कश्च ऐलश्चैव नराधिपः ।
करंधमो नरश्रेष्ठः कध्मोरश्च नराधिपः ॥ ०४५ ॥

दक्षोऽम्बरीषः कुकुरो रवतश्च महायशाः ।
मुचुकुन्दश्च राजर्षिर्मित्रभानुः प्रियङ्करः ॥ ०४६ ॥

त्रसदस्युस्तथा राजा श्वेतो राजर्षिसत्तमः ।
महाभिषश्च विख्यातो निमिराजस्तथाष्टकः ॥ ०४७ ॥

आयुः क्षुपश्च राजर्षिः कक्षेयुश्च नराधिपः ।
शिबिरौशीनरश्चैव गयश्चैव नराधिपः ॥ ०४८ ॥

प्रतर्दनो दिवोदासः सौदासः कोसलेश्वरः ।
ऐलो नलश्च राजर्षिर्मनुश्चैव प्रजापतिः ॥ ०४९ ॥

हविध्रश्च पृषध्रश्च प्रतीपः शंतनुस्तथा ।
कक्षसेनश्च राजर्षिर्ये चान्ये नानुकीर्तिताः ॥ ०५० ॥

मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
ध्रुवो जयो मे नित्यं स्यात्परत्र च परा गतिः ॥ ०५१ ॥

---

# युधिष्ठिरप्रतिप्रयाणम्

## अध्याय १५२

वैशंपायन उवाच ॥

तूष्णींभूते तदा भीष्मे पटे चित्रमिवार्पितम् ।
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः ॥ ००१ ॥

नृपं शयानं गाङ्गेयमिदमाह वचस्तदा ॥ ००१ ॥

राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।
सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः ॥ ००२ ॥

उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता ।
तमिमं पुरयानाय त्वमनुज्ञातुमर्हसि ॥ ००३ ॥

एवमुक्तो भगवता व्यासेन पृथिवीपतिः ।
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥ ००४ ॥

उवाच चैनं मधुरं ततः शांतनवो नृपः ।
प्रविशस्व पुरं राजन्व्येतु ते मानसो ज्वरः ॥ ००५ ॥

यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः ।
ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ॥ ००६ ॥

क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय ।
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ॥ ००७ ॥

रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसान्त्वय ।
सुहृदः फलसत्कारैरभ्यर्चय यथार्हतः ॥ ००८ ॥

अनु त्वां तात जीवन्तु मित्राणि सुहृदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥ ००९ ॥

आगन्तव्यं च भवता समये मम पार्थिव ।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ ०१० ॥

तथेत्युक्त्वा तु कौन्तेयः सोऽभिवाद्य पितामहम् ।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ ०११ ॥

धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम् ।
सह तैरृषिभिः सर्वैर्भ्रातृभिः केशवेन च ॥ ०१२ ॥

पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिवः ।
प्रविवेश कुरुश्रेष्ठ पुरं वारणसाह्वयम् ॥ ०१३ ॥

---

# भीष्मस्वर्गारोहणपर्व

## भीष्मस्वर्गानुज्ञा

## अध्याय १५३

वैशंपायन उवाच ॥

ततः कुन्तीसुतो राजा पौरजानपदं जनम् ।
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति ॥ ००१ ॥

सान्त्वयामास नारीश्च हतवीरा हतेश्वराः ।
विपुलैरर्थदानैश्च तदा पाण्डुसुतो नृपः ॥ ००२ ॥

सोऽभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः ।
अवस्थाप्य नरश्रेष्ठः सर्वाः स्वप्रकृतीस्तदा ॥ ००३ ॥

द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च सर्वशः ।
प्रतिगृह्याशिषो मुख्यास्तदा धर्मभृतां वरः ॥ ००४ ॥

उषित्वा शर्वरीः श्रीमान्पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ ००५ ॥

स निर्ययौ गजपुराद्याजकैः परिवारितः ।
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ॥ ००६ ॥

घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः ।
चन्दनागरुमुख्यानि तथा कालागरूणि च ॥ ००७ ॥

प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंसाधनाय वै ।
माल्यानि च महार्हाणि रत्नानि विविधानि च ॥ ००८ ॥

धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम् ।
मातरं च पृथां धीमान्भ्रातृंश्च पुरुषर्षभः ॥ ००९ ॥

जनार्दनेनानुगतो विदुरेण च धीमता ।
युयुत्सुना च कौरव्यो युयुधानेन चाभिभो ॥ ०१० ॥

महता राजभोग्येन परिबर्हेण संवृतः ।
स्तूयमानो महाराज भीष्मस्याग्नीननुव्रजन् ॥ ०११ ॥

निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा ।

आससाद कुरुक्षेत्रे ततः शांतनवं नृपम्  ॥ ०१२  ॥

उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च  ॥ ०१३  ॥

हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः ।
रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः  ॥ ०१४  ॥

शयानं वीरशयने ददर्श नृपतिस्ततः ।
ततो रथादवारोहद्भ्रातृभिः सह धर्मराट्  ॥ ०१५  ॥

अभिवाद्याथ कौन्तेयः पितामहमरिंदमम् ।
द्वैपायनादीन्विप्रांश्च तैश्च प्रत्यभिनन्दितः  ॥ ०१६  ॥

ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिश्च सहाच्युतः ।
आसाद्य शरतल्पस्थमृषिभिः परिवारितम्  ॥ ०१७  ॥

अब्रवीद्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सह कौरव्य शयानं निम्नगासुतम्  ॥ ०१८  ॥

युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते  ॥ ०१९  ॥

प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्या ब्राह्मणाश्चैव ऋत्विजो भ्रातरश्च मे  ॥ ०२०  ॥

पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः ।
उपस्थितः सहामात्यो वासुदेवश्च वीर्यवान्  ॥ ०२१  ॥

हतशिष्टाश्च राजानः सर्वे च कुरुजाङ्गलाः ।
तान्पश्य कुरुशार्दूल समुन्मीलय लोचने  ॥ ०२२  ॥

यच्चेह किञ्चित्कर्तव्यं तत्सर्वं प्रापितं मया ।
यथोक्तं भवता काले सर्वमेव च तत्कृतम्  ॥ ०२३  ॥

एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।
ददर्श भारतान्सर्वान्स्थितान्संपरिवार्य तम्  ॥ ०२४  ॥

ततश्चलवलिर्भीष्मः प्रगृह्य विपुलं भुजम् ।
ओघमेघस्वनो वाग्मी काले वचनमब्रवीत्  ॥ ०२५  ॥

दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान्सहस्रांशुर्दिवाकरः  ॥ ०२६  ॥

अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा  ॥ ०२७  ॥

माघोऽयं समनुप्राप्तो मासः पुण्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति  ॥ ०२८  ॥

एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत्  ॥ ०२९  ॥

राजन्विदितधर्मोऽसि सुनिर्णीतार्थसंशयः ।
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः  ॥ ०३०  ॥

वेदशास्त्राणि सर्वाणि धर्मांश्च मनुजेश्वर ।
वेदांश्च चतुरः साङ्गान्निखिलेनावबुध्यसे  ॥ ०३१  ॥

न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा ।
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि  ॥ ०३२  ॥

यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः ।
तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥ ०३३ ॥

धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव ।
आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम् ॥ ०३४ ॥

तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः ।
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ॥ ०३५ ॥

वैशंपायन उवाच ॥

एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम् ।
वासुदेवं महाबाहुमभ्यभाषत कौरवः ॥ ०३६ ॥

भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्रिविक्रम नमस्तेऽस्तु शङ्खचक्रगदाधर ॥ ०३७ ॥

अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम ।
रक्ष्याश्च ते पाण्डवेया भवान्ह्येषां परायणम् ॥ ०३८ ॥

उक्तवानस्मि दुर्बुद्धिं मन्दं दुर्योधनं पुरा ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ०३९ ॥

वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ।
संधानस्य परः कालस्तवेति च पुनः पुनः ॥ ०४० ॥

न च मे तद्वचो मूढः कृतवान्स सुमन्दधीः ।
घातयित्वेह पृथिवीं ततः स निधनं गतः ॥ ०४१ ॥

त्वां च जानाम्यहं वीर पुराणमृषिसत्तमम् ।
नरेण सहितं देवं बदर्यां सुचिरोषितम् ॥ ०४२ ॥

तथा मे नारदः प्राह व्यासश्च सुमहातपाः ।
नरनारायणावेतौ संभूतौ मनुजेष्विति ॥ ०४३ ॥

वासुदेव उवाच ॥

अनुजानामि भीष्म त्वां वसूनाप्नुहि पार्थिव ।
न तेऽस्ति वृजिनं किञ्चिन्मया दृष्टं महाद्युते ॥ ०४४ ॥

पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः ।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ ०४५ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वान्ससुहृदस्तथा ॥ ०४६ ॥

प्राणानुत्स्रष्टुमिच्छामि तन्मानुज्ञातुमर्हथ ।
सत्ये प्रयतितव्यं वः सत्यं हि परमं बलम् ॥ ०४७ ॥

आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनीत्यैश्च भारत ॥ ०४८ ॥

इत्युक्त्वा सुहृदः सर्वान्संपरिष्वज्य चैव ह ।
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ ०४९ ॥

ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः ।
आचार्या ऋत्विजश्चैव पूजनीया नराधिप ॥ ०५० ॥

# भीष्मस्वर्गगमनम्

## अध्याय १५४

वैशंपायन उवाच ॥

एवमुक्त्वा कुरून्सर्वान्भीष्मः शांतनवस्तदा ।
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम ॥ ००१ ॥

धारयामास चात्मानं धारणासु यथाक्रमम् ।
तस्योर्ध्वमगमन्प्राणाः संनिरुद्धा महात्मनः ॥ ००२ ॥

इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम् ।
यद्यन्मुञ्चति गात्राणां स शंतनुसुतस्तदा ॥ ००३ ॥

तत्तद्विशल्यं भवति योगयुक्तस्य तस्य वै ॥ ००३ ॥

क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा ।
तं दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः ॥ ००४ ॥

सह तैर्मुनिभिः सर्वैस्तदा व्यासादिभिर्नृप ॥ ००४ ॥

संनिरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै ।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात च ॥ ००५ ॥

महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप ।
निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत ॥ ००६ ॥

एवं स नृपशार्दूल नृपः शांतनवस्तदा ।
समयुज्यत लोकैः स्वैर्भरतानां कुलोद्वहः ॥ ००७ ॥

ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून् ।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा ॥ ००८ ॥

युयुत्सुश्चापि कौरव्यः प्रेक्षकास्त्वितरेऽभवन् ॥ ००८ ॥

युधिष्ठिरस्तु गाङ्गेयं विदुरश्च महामतिः ।
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ॥ ००९ ॥

धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम् ।
चामरव्यजने शुभ्रे भीमसेनार्जुनावुभौ ॥ ०१० ॥

उष्णीषे पर्यगृह्णीतां माद्रीपुत्रावुभौ तदा ॥ ०१० ॥

स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्भवम् ।
तालवृन्तान्युपादाय पर्यवीजन्समन्ततः ॥ ०११ ॥

ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः ।
याजका जुहुवुश्चाग्निं जगुः सामानि सामगाः ॥ ०१२ ॥

ततश्चन्दनकाष्ठैश्च तथा कालेयकैरपि ।
कालागरुप्रभृतिभिर्गन्धैश्चोच्चावचैस्तथा ॥ ०१३ ॥

समवच्छाद्य गाङ्गेयं प्रज्वाल्य च हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखा नृपाः ॥ ०१४ ॥

संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः ।
जग्मुर्भागीरथीतीरमृषिजुष्टं कुरूद्वहाः ॥ ०१५ ॥

अनुगम्यमाना व्यासेन नारदेनासितेन च ।
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ॥ ०१६ ॥

उदकं चक्रिरे चैव गाङ्गेयस्य महात्मनः ।
विधिवत्क्षत्रियश्रेष्ठाः स च सर्वो जनस्तदा ॥ ०१७ ॥

ततो भागीरथी देवी तनयस्योदके कृते ।
उत्थाय सलिलात्तस्माद्रुदती शोकलालसा ॥ ०१८ ॥

परिदेवयती तत्र कौरवानभ्यभाषत ।
निबोधत यथावृत्तमुच्यमानं मयानघाः ॥ ०१९ ॥

राजवृत्तेन संपन्नः प्रज्ञयाभिजनेन च ।
सत्कर्ता कुरुवृद्धानां पितृभक्तो दृढव्रतः ॥ ०२० ॥

जामदग्न्येन रामेण पुरा यो न पराजितः ।
दिव्यैरस्त्रैर्महावीर्यः स हतोऽद्य शिखण्डिना ॥ ०२१ ॥

अश्मसारमयं नूनं हृदयं मम पार्थिवाः ।
अपश्यन्त्याः प्रियं पुत्रं यत्र दीर्यति मेऽद्य वै ॥ ०२२ ॥

समेतं पार्थिवं क्षत्रं काशिपुर्यां स्वयंवरे ।
विजित्यैकरथेनाजौ कन्यास्ता यो जहार ह ॥ ०२३ ॥

यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन ।
हतं शिखण्डिना श्रुत्वा यन्न दीर्यति मे मनः ॥ ०२४ ॥

जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना ।
पीडितो नातियत्नेन निहतः स शिखण्डिना ॥ ०२५ ॥

एवंविधं बहु तदा विलपन्तीं महानदीम् ।
आश्वासयामास तदा साम्ना दामोदरो विभुः ॥ ०२६ ॥

समाश्वसिहि भद्रे त्वं मा शुचः शुभदर्शने ।
गतः स परमां सिद्धिं तव पुत्रो न संशयः ॥ ०२७ ॥

वसुरेष महातेजाः शापदोषेण शोभने ।
मनुष्यतामनुप्राप्तो नैनं शोचितुमर्हसि ॥ ०२८ ॥

स एष क्षत्रधर्मेण युध्यमानो रणाजिरे ।
धनञ्जयेन निहतो नैष नुन्नः शिखण्डिना ॥ ०२९ ॥

भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे ।
न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ॥ ०३० ॥

स्वच्छन्देन सुतस्तुभ्यं गतः स्वर्गं शुभानने ।
न शक्ताः स्युर्निहन्तुं हि रणे तं सर्वदेवताः ॥ ०३१ ॥

तस्मान्मा त्वं सरिच्छ्रेष्ठे शोचस्व कुरुनन्दनम् ।
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ॥ ०३२ ॥

इत्युक्ता सा तु कृष्णेन व्यासेन च सरिद्वरा ।
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ॥ ०३३ ॥

सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृपाः ।
अनुज्ञातास्तया सर्वे न्यवर्तन्त जनाधिपाः ॥ ०३४ ॥

---

